# हरिदासीसहितन्यायकुसुमाञ्जलेः समीक्षात्मकमध्ययनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य

विद्यावारिधिः (पी-एच्०डी०)

इत्युपाधये प्रस्तुतः

## शोधप्रबन्धः




निर्देशकः

**प्रो० सर्वेश्वरराजहंसः**

आचार्योऽध्यक्षश्च न्यायवैशेषिकविभागे

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

अनुसन्धाता

**नवराजपौडेलः**

नव्यन्यायाचार्यः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः

वाराणसी

पञ्जीकरणसंख्या–३९२३/५५२४

दिनाङ्कः–२८-९-२००७



**सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः**

**वाराणसी**

विक्रमसंवत्–२०६७ गुरुपूर्णिमा ख्रीष्टाब्दः–२०१०




सम्पूर्णानन्द-संस्कृत-विश्वविद्यालयस्य

विद्यावारिधिः (पी-एच०डी०) इत्युपाधये प्रस्तुतोऽयं

## शोधप्रबन्धः

# हरिदासीसहितन्यायकुसुमाञ्जलेः समीक्षात्मकमध्ययनम्

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य
विद्यावारिधिः (पी-एच्०डी०)
इत्युपाध्ये प्रस्तुतः

## शोधप्रबन्धः




निर्देशकः
**प्रो० सर्वेश्वरराजहंसः**
आचार्योऽध्यक्षश्च न्यायवैशेषिकविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

अनुसन्धाता
**नवराजपौडेलः**
नव्यन्यायाचार्यः
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी
पञ्जीकरणसंख्या–३९२३/५५२४
दिनाङ्कः–२८-९-२००७

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः
वाराणसी

विक्रमसंवत्–२०६७ गुरुपूर्णिमा ख्रीष्टाब्दः–२०१०

# निर्देशकप्रमाणपत्रम्

श्रीमता नवराजपौडेलेन **'हरिदासीसहितन्यायकुसुमाञ्जलेः समीक्षात्मकमध्ययनम्'** इति विषयमनुसृत्य यथाविधि शोधप्रबन्धोऽयं सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीय**विद्यावारिधिः (Ph.D)** इत्युपाधये मदीये निर्देशने प्रस्तुतः। शोधप्रबन्धेऽस्मिन्नायुष्मता श्रीमदुदयनाचार्यविरचितन्यायकुसुमाञ्जलिप्रतिपादितविषयान् सम्यगधीत्य तत्रत्यविषयाणां नूतनतथ्यानामाविष्करणम्, तत्रत्य सिद्धान्तानां नूतनदृशा विशिष्टाध्ययनपूर्वकं परिशीलनञ्च विहितम्। प्रबन्धेऽस्मिन्नीश्वरप्रतिपादकानामकाट्यसूक्ष्मयुक्तीनां, स्वोपज्ञविचाराणाञ्च सम्यक्प्रतिपादनं कृतम्। एवं हि सन्तोषजनकभाषाशैलीपरिपूर्णस्य शोधप्रबन्धस्य स्वोपज्ञत्वं सर्वोपकारकत्वञ्च प्रमाणयन् परीक्षणार्थं संस्तौति—

सर्वेश्वरराजहंसः

**(प्रो० सर्वेश्वरराजहंसः)** 25/7/10
आचार्योऽध्यक्षश्च, न्यायवैशेषिकविभागे
सम्पूर्णानन्दसंस्कृतविश्वविद्यालयस्य,
वाराणसी।

अग्रे सारयतु
सर्वेश्वरराजहंसः
25/7/10

अध्यक्ष
न्यायवैशेषिक विभाग
सम्पूर्णानन्द संस्कृत विश्वविद्यालय, वाराणसी

# विषयानुक्रमणिका

**द्वितीयोऽध्यायः** **७८-११३**



**तृतीयोऽध्यायः** **११४-१९२**

# कृतज्ञताज्ञापनम्

अखिलजडजङ्गमस्थावरनिमित्तभूतमपारकरुणावरुणालयं भगवन्तमहं वन्दे यस्यासीमकृपया मानववपुरिदं प्रापम्। एवं पितरावभिवादये।

बाल्यकाल एव गुरुकुलमानीय तत्र च सत्सङ्गत्यादिगुणप्रदानपुरस्सरं दर्शनशास्त्राध्ययनरुचिं सम्पादितवतां श्रीमत्परमहंसपरिव्राजकाचार्यश्रोत्रियब्रह्मनिष्ठ**श्रीपरमानन्दसरस्वती**महाराजानां चरणकमलमभिवादये।

न्यायशास्त्रीयप्रारम्भिकग्रन्थानध्याप्योपकृतवद्भ्यः **श्रीतुलसीदासगुरुभ्यः** कृतज्ञतां ज्ञापयामि। न्यायशास्त्रीयकर्कशग्रन्थान्नपि स्वकीयवैदुष्यपूर्णशैल्यातीवसरलतया पाठितवद्भ्यः **प्रो० श्रीराजारामशुक्लगुरुवर्येभ्यः** कृतज्ञतां ज्ञापयामि। पुत्रवत्स्नेहप्रदानपुरस्सरं न्यायशास्त्रीयानेकदुर्भिज्ञग्रन्थान्नप्यनायासेनैवातीवसरलतया च स्वभावेनाऽध्याप्य मामुपकृतवतां महर्षिकल्पानां **श्रीवशिष्ठत्रिपाठिगुरुचरणानामहं** सदैवाधमर्णोऽस्मि येषां कृपयैव कार्योऽयं सफलतां प्राप्तोऽतस्तेषां चरणकमलमभिवादये। एवं निर्देशकमहाभागेभ्यः सम्पूर्णानन्दसंस्कृतविश्वविद्यालयीयन्यायवैशेषिकविभागाध्यक्षप्रवरेभ्यः **श्रीसर्वेश्वरराजहंस**महाभागेभ्यः कृतज्ञतां ज्ञापयामि। एवं मामकान् **श्रीविश्वनाथरामप्रसादवैकुण्ठबलरामसीतारामादीन्** सुहृद्वर्यान् धन्यवादवचोभिः सभाजयामि। अन्येषाञ्च येषां महानुभावानामस्मिन् शोधकार्ये प्रत्यक्षेण परोक्षेण वा सहयोगं प्राप्तवानहं तान् प्रत्यपि कृतज्ञतां प्रकटयामि।

विद्वच्चरणरजः

नवराज पौडेल

**(नवराजपौडेलः)**

नव्यन्यायाचार्यः

सम्पूर्णानन्दसंस्कृतविश्वविद्यालयः,

वाराणसी।

# भूमिका

वैचित्र्यपूर्णस्य जगतोऽस्य सृष्टिः कदा, केन कारणेन कस्मै प्रयोजनाय केन कृता, जगतोऽस्य सर्वज्ञसर्वशक्तिमान् कर्तेश्वरोऽस्ति न वेति इत्याद्यः जिज्ञासाः चिरकालादेव प्रसृताः वर्तन्ते। आसामेव जिज्ञासानां समाधानायाऽनेकैर्विद्वद्भिरनेके निबन्धा विरचिताः। तथापीमा जिज्ञासा न कार्त्स्न्येन समाधिताः, यथोत्तरमपेक्षणीयमासीत्। अत एव तस्मिन् समये भारतवर्षे स्वार्थैकसाधनपरायणाः बौद्धाः स्वबुद्धिवैभवेन कुतर्कप्रभावेण च सर्वान् वैदिकान् पराजित्य वैदिकसंस्कृतिं तिरस्कृत्य सर्वान् बौद्धदीक्षया विभूष्य भारतीयवैदिकसंस्कृतेः लोपाय प्रयत्ना आसन् तदानीं सुतर्कमर्मज्ञेन आचार्योदयनेन बौद्धान् पराजेतुं न्यायकुसुमाञ्जलेः प्रलेखनं कृत्वा शास्त्रार्थमाध्यमेन च बौद्धान् पराजित्य भारतीयसंस्कृतेः संरक्षणं विहितम्। ग्रन्थोऽयं निरीश्वरवादिनां कृते प्रबलतमयुक्तिसमन्वितोऽद्वितीय एव विद्यते। न केवलमीश्वरस्यैव चर्चा एतस्मिन् ग्रन्थे कृता अपितु न्यायशास्त्रान्तर्गतस्य सर्वस्यापि विषयस्योहापोहात्मिका चर्चाऽत्र सन्निहिता वर्तते। तथाप्येतादृशमहत्वपूर्णविषयस्येदानीमध्ययनमध्यापनञ्च विरलप्रायो जातः, अतोऽहं **हरिदासीसहित-न्यायकुसुमाञ्जलेः समीक्षाय** प्रवृत्तः।

न्यायकुसुमाञ्जलिग्रन्थेऽस्मिन् 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतिविहितं परमात्ममननं व्युत्पादितम्। आचार्येणात्मतत्त्वविवेके तावत् क्षणभङ्गादिवादान् निरस्य विज्ञानादतिरिक्तं स्थायिजीवात्मानं निरूप्य यस्योपासनया यो जीवात्मा मोक्षमधिगच्छेत् सोऽयं परमात्मा ईश्वरपदाभिधेयोऽत्र विस्तरेण व्यवस्थापितः। अत्र श्रीमतोदयनाचार्येण न्यायदर्शनाभिमतेश्वरस्वरूपं प्रतिपादयतोक्तम् —

(II)

'इह यद्यपि यं कमपि पुरुषार्थमर्थमानाः शुद्धबुद्धस्वभाव इत्यौपनिषदाः, आदिविद्वान् सिद्ध इति कापिलाः, क्लेशकर्मविपाकाशयैरपरामृष्टो निर्माणकायमधिष्ठाय सम्प्रदायप्रद्योतकोऽनुग्राहकश्चेति पातञ्जलाः, लोकवेदविरुद्धैरपि निर्लेपः, स्वतन्त्रश्चेति पाशुपताः, शिव इति शैवाः, पुरुषोत्तम इति वैष्णवाः, पितामह इति पौराणिकाः, यज्ञपुरुष इति याज्ञिकाः, सर्वज्ञ इति सौगताः, निरावरण इति दिगम्बराः, उपास्यत्वेन देशित इति मीमांसकाः, लोकव्यवहारसिद्ध इति चार्वाकाः, यावदुक्तोपपन्न इति नैयायिकाः' एवं रीत्याऽन्यान्यदर्शनानुसारमीश्वरनिर्वचनं कुर्वता न्यायदर्शनाभिमतमीश्वरस्वरूपं वर्णयन्नुच्यते 'यावदुक्तोपपन्न इति नैयायिकाः' इति। टीकाकृद्भिरस्य पदस्य समासं वर्णयन्नुच्यते—'यावदुक्तेषु यदुपपन्नं युक्तिमत् सर्वज्ञत्वादि तेनोपपन्नः सम्पन्न इति मध्यमपदलोपिसमासस्तत्पुरुषः। यावदुक्तेषु उपपन्नः प्रामाणिको धर्मो यस्येति बहुव्रीहिर्वा' अर्थात् ये गुणा अन्येषु दर्शनेषु प्रतिपादिताः परमेश्वरीयगुणत्वेन तेषु सर्वेषु यद् यद् युक्तिपुरस्सरमुपपन्नं भवति ते सर्वे गुणाः नैयायिकैरीश्वरे स्वीक्रियन्ते इति। आचार्यस्य ईश्वरे कीदृशो विश्वास इति त्वेतद्ग्रन्थाध्ययनेनैव सुस्पष्टमिवाभाति। किमधिकं 'यं कारवोऽपि विश्वकर्मेत्युपासते' इति वाक्येनैव ईश्वरे गभीरविश्वासस्य परिचयो जायते। न्यायकुसुमाञ्जलिस्तबकार्थसंग्राहकश्लोकेषु यादृशी भावना आचार्येणाभिव्यक्ता तयैतस्य परमभक्तता सुस्पष्टा भवति। आचार्य एकत्र हे शिव! हे करुणामय! इत्यादिशब्दैः भगवत आह्वानं करोति। अन्यत्राऽकाट्यसूक्ष्मतमजालैरीश्वरास्वीकर्तृणां मतानि सर्वथा निराकरोति। य ईश्वरं न स्वीकुर्वन्ति, ते परलोकमपि नाङ्गीकुर्वन्ति, अत ईश्वरविरुद्धमतखण्डनमेवैतस्य ग्रन्थस्य परमं प्रयोजनम्। ईश्वरोपासनां विना नानाविधप्रपञ्चासत्यजालादुद्धारो नैव भवितुमर्हति। अतो वेदस्य शास्त्रस्य च प्रमाणं व्यवस्थापयति। न्यायप्रक्रियामनुसृत्य ईश्वरस्य विचारोऽस्मिन् शास्त्रे वर्तते। एतद्ग्रन्थरचनया नूनमेव न्यायशास्त्रस्य

पूर्णतामेव सम्पादितवान्। शास्त्रेषु सांख्यशास्त्रस्य प्रशंसा वर्तते। स्मृतिपुराणादिष्वपि कपिलादेः सांख्याचार्यस्य प्रशंसा विद्यते परं सांख्याचार्या ईश्वरं नैवाङ्गीकुर्वन्ति अत एतन्मतखण्डनेऽप्याचार्याय न भवति संकोचः। कर्मानुष्ठानं भारतीयस्य महद्वैशिष्ट्यम्, कर्मकाण्डपरित्यागे हिन्दुत्वमेव न स्थास्यति। कर्मकाण्डस्य मीमांसकाः भट्टप्रभृतय आचार्याः समभूवन्। इमेऽपीश्वरं नैव स्वीकुर्वन्ति। एतेषां मतानामपि विशिष्टं खण्डनमत्र कृतवान्। आचार्यशङ्करोऽपि एतच्छास्त्रसम्मतमतानां खण्डनं सम्पादितवान्, किन्तूभयोः वर्तते वैशिष्ट्यम्, आचार्यशङ्करो विधिनिषेध-कर्मातिक्रम्य सन्न्यासी सन्नेव मीमांसकादिमतस्य खण्डनमकार्षीत् परमाचार्योदयनः कर्मकाण्डेन संश्लिष्टः गृहस्थाश्रमोचितानि अवश्य-कर्तव्यानि कर्माणि सम्पादयन्नपि तन्मतखण्डनमकरोत्, एतेनाचार्यस्येश्वरं प्रति विशिष्टविश्वास एव ध्वन्यते।

न्यायकुसुमाञ्जलिः पञ्चसु स्तबकेषु विभक्तः। क्रमश एषु स्तबकेषु प्राधान्येन चार्वाकस्य, मीमांसकस्य, सौगतस्य, दिगम्बरस्य, सांख्याचार्यस्य च विप्रतिपत्तिमूलानि मतानि ईश्वरसिद्धिप्रतिकूलानि यथाक्रमं पञ्चसु स्तबकेषु निरासो विद्यते। ता विप्रतिपत्तयः—(१) अलौकिकस्य परलोकसाधनस्याऽभावात् (२) अन्यथापि परलोकसाधनानुष्ठानसम्भवात् (३) तदभावावेदकप्रमाणसद्भावात्, (४) सत्त्वेऽपि तस्याऽप्रमाणत्वात् (५) तत्साधकप्रमाणाभावाच्चेति। आसां पञ्चविधविप्रतिपत्तीनां निरसनेनैव पूर्णतयेश्वरस्य सिद्धिः सम्भवति। अत एवाचार्योदयनेन यथाक्रमं स्तबकेषु निरासः कृतः। मयाऽपि तमेव मार्गमनुसृत्य पञ्चस्वध्यायेषु तासामेव पञ्चविधविप्रतिपत्तीनां निरासः कृतः।

तत्र **प्रथमेऽध्याये**—चार्वाककृतस्याऽदृष्टखण्डनस्य सप्रपञ्चमित्थं

निराक्रियते—इह खलु जगति कश्चित् सुखी कश्चिद् दुःखी, न ह्यत्र सर्वो जनः समानः। एतादृशे वैचित्र्ये किञ्चित् कारणं वाच्यम्। न च दृष्टं किञ्चित् कारणमत्रोपलभ्यते अतोऽदृष्टमेव कारणतया वक्तव्यमिति। एवं प्रसङ्गतः स्वभाववादस्य शक्तिवादस्य एककारणतावादस्य च खण्डनपुरस्सरं सामान्यकार्यकारणभावो व्यवस्थापितः। एवं वैदिके कर्मणि प्रवृत्तिरपि न सम्भवति यदि अदृष्टं नाम न स्यात्। धर्माऽभावे धर्माचरणानुपपत्तेः। धर्मबुद्ध्या हि लोकः धार्मिकेभ्यो धनं ददाति, बहुवित्तव्ययायाससाध्ये यागादौ प्रवर्तते, उपवासादिभिश्चात्मानमवसादयति परप्रतारणार्थं नहि कश्चिज्जन्तुरपि एवं कुर्यात् तस्मात् सिद्ध्यति परलोकः। तत्र यागादि साक्षात्कारणं न सम्भवति अतोऽदृष्टं स्वीकार्यमेव। एवमग्रे अदृष्टाऽधिकरण-निरूपणावसरे भोग्यनिष्ठत्व-बुद्धिनिष्ठत्व-देहात्मनिष्ठत्वञ्चाऽदृष्टस्य निराकृत्य नित्यविभ्वात्मनिष्ठत्वं प्रतिपादितम्। एवमदृष्टस्याचेतनत्वम्, अचेतनस्य च चेतनाधिष्ठितत्वं जीवात्मनोऽदृष्टाधिष्ठातृत्वाऽक्षमत्वञ्च प्रतिपादितं वर्तते। एतेनाऽदृष्टाऽधिष्ठातृतयेश्वरस्य सिद्धिर्निराबाधा भवतीति।

**द्वितीयेऽध्याये** मीमांसकमतस्य निराकरणं वर्तते। मीमांसकास्तावन्मन्यन्ते - वेदस्य नित्यत्वात् वेदकर्तृतया नेश्वरसिद्धिः। यो वेदो देवदत्तेनाधीतः स एव यज्ञदत्तेनापि इति प्रत्यभिज्ञानात्, स एवायं गकार इति प्रत्यभिज्ञानाच्च वेदानां तथा वर्णानाञ्च नित्यत्वाद् वेदकर्ता ईश्वरो नाम कश्चिन्न सम्भवति। इदं मीमांसकमतं द्वितीयस्तबके निराकृतम्। वेदोऽपि न नित्य महाभारतादिवाक्यवज्जन्य एव महाजनपरिगृहीतत्वात् तस्य प्रामाण्यग्रहः। वक्तुर्भ्रमप्रमादादिदोषयुक्तत्वाद् वेदवक्ता भ्रमादिशून्यः भगवानीश्वरः सिद्ध्यति। 'उत्पन्नो गकारो नष्टो गकारः' इत्यादिभिः वर्णानामुत्पादविनाशौ प्रत्यक्षसिद्धौ। तस्मादेव 'सोऽयं गकारः' इति

प्रत्यभिज्ञा गत्वादिजातिं विषयीकरोति। तस्माद् वेदकर्तृतयेश्वरसिद्धिर्निराबाधा:। प्रसङ्गोऽत्र प्रमाज्ञानस्य गुणजन्यत्वव्यवस्थापनम्, महाप्रलयव्यवस्थापनम्, वेदादिसम्प्रदायस्य क्रमिकह्रासव्यवस्थापनम्, वेदप्रामाण्यविषये नास्तिकोक्तदोषाणां निराकरणञ्च विहितम्।

**तृतीयेऽध्याये** बौद्धानां विप्रतिपत्तिर्निरस्यते। सौगतास्तु मन्वते। प्रत्यक्षानुपलम्भबाधितत्वादीश्वरो न सिद्ध्यति, यथा घटादय: पदार्था भूतलादौ प्रत्यक्षेणोपलभ्यन्ते, तथेश्वरो नोपलभ्यते, तेन प्रत्यक्षानुपलम्भबाधितत्वादीश्वरस्य सिद्धिर्न सम्भवति। 'प्रत्यक्षानुपलम्भबाधितेऽर्थेऽनुमानं न प्रवर्तते' इति न्यायात् तत्राऽनुमानमपि न प्रवर्तते। अशरीरत्वादप्रयोजन-वत्त्वाच्च नेश्वर: क्षित्यादिकर्ता भवितुमर्हति। तस्मादाप्तकामत्वादीश्वरस्य कर्तृत्वाभावात् क्षित्यादिकर्तृत्वेन तस्य सिद्धिदूरापास्ता। इदं सौगतमतं तृतीयेऽध्याये निराकृतं वर्तते, उपलम्भयोग्यस्यानुपलम्भादभावो निश्चीयते न त्वनुपलम्भमात्रेण। एवं कञ्चिदाश्रयमधिकृत्य तस्मिन्नेवाऽनुमानं कस्यचित् प्रवर्तते, यथा पर्वते वह्नि:। ईश्वरे कर्तृत्वाभावानुमाने आश्रयस्येश्वरस्य स्वीकार्यत्वम् प्रसज्यते। तदस्वीकारे कस्मिन् कर्तृत्वाभावोऽनुमीयते? विपक्षे बाधकाभावात् कर्तृत्वशरीरित्वयो: कार्यकारणभाव: कश्चिन्नास्ति येनेश्वरस्य कर्तृत्वे शरीरित्वमापद्येत। निजप्रयोजनाऽभावेऽपि भूतानुग्रह: एवेश्वरस्य प्रयोजनमिति। अत ईश्वरसिद्धौ किमपि बाधकं नास्ति। एवमत्र प्रमाणानां चातुर्विध्यम्, तेषामीश्वराबाधकत्वम्, अर्थापत्यादीनां पृथक्प्रामाण्यनिराकरणञ्च महताश्रमेण मया कृतं वर्तते।

**चतुर्थेऽध्याये** जैनमतनिराकरणं विहितम्। जैनास्तु मन्वते ईश्वरो न प्रमाकरणं नापि प्रमाकर्ता। अस्मदादिप्रमायामीश्वरस्य कारणत्वान्न

प्रमाकरणत्वम्, ईश्वरज्ञानस्य नित्यत्वाभ्युपगमाज्ज्ञानकरणत्वं, ज्ञानकर्तृत्व-ञ्चेश्वरे न सम्भवति। एवमीश्वरज्ञानं न प्रमा सर्वज्ञस्येश्वरस्याऽज्ञातविषया-भावादज्ञाते विषये जातस्यैव ज्ञानस्य प्रमापदवाच्यत्वात्। तस्मादीश्वरज्ञान-स्याऽप्रमात्वादीश्वरस्य चाप्रमाणत्वादप्रमाणपुरुषस्य वचसि का श्रद्धेति नेश्वरसिद्धिरिति जैनमतनिराकृतम्। ईश्वरज्ञानस्य नित्यत्वेऽपि तदाश्रयतयेश्वरसिद्धिर्भवतुमर्हति । 'यो हि क्रियाश्रयः स एव कर्ता' इति न्यायात्, अज्ञाते विषये यज्ज्ञानं जायते तदेव प्रमेति न सम्यक्,'शुक्तौ इदं रजतम्' इति भ्रमज्ञानेऽतिव्याप्त्या, धारावाहिकज्ञानेऽव्याप्त्या च। अतो यथार्थाऽनुभव एव प्रमा, ईश्वरज्ञानस्य यथार्थत्वादिति। एवं प्रसङ्गत; प्रमाज्ञानस्य प्रमाणस्य च लक्षणम्, ज्ञातताया खण्डनम्, प्रमातुः प्रमाणादेश्च लोचनं कृतम्।

**पञ्चमेऽध्याये** सांख्यमतनिराकरणं क्रियते। सांख्यास्तु मन्वते प्रकृतेरेव जगत्कर्तृत्वात् क्षित्यादिकर्तृतया नेश्वरसिद्धिः, ईश्वरसिद्धौ वेदोऽपि न प्रमाणम्, तस्योपासनाविधिपरत्वात् स्वार्थे तात्पर्याभावादिति। तस्य निराकरणमित्थं कृतं—जडायाः प्रकृते कर्तृत्वाऽसम्भवात् कर्तुश्च चैतन्यनियमात्, यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यादिकार्यमपि। 'ईश्वरमुपासीत' इत्यादिवेदवाक्यमपि ईश्वरास्तित्वे मानम्। तत्र ईश्वरादिपदं स्वार्थद्वारैव विधिपरं 'स्वर्गकामो यजेत' इत्यत्र स्वर्गपदवत्। तस्मात् क्षित्यादिकर्तृतयेश्वरसिद्धिर्निराबाधा। एवं महर्षिगौतमादारभ्य उदयनाचार्य-पर्यन्तमीश्वरसाधकप्रमाणं विवेचितम्। अन्ते ग्रन्थकर्तुः परिचयः, ग्रन्थपर्या-लोचनम्। एवमुपसंहारे न्यायकुसुमाञ्जलिटीकाया विस्तृतं विवरणं दत्तम्।

सोऽयं शोधप्रबन्धः मया महताश्रमेण पूर्णतां नीतः। तथापि सम्भवन्त्यत्र केचन दोषाः प्रार्थये यद्विद्वांसः दोषान् मनसि नैव धारयन्तु मामनुगृह्णन्तु च।

**

# प्रथमोऽध्यायः

मङ्गलाचरणम्

सत्पक्षप्रसरः सतां परिमलप्रोद्बोधबद्धोत्सवो
विम्लानो न विमर्दनेऽमृतरसप्रस्यन्दमाध्वीकभूः ।
ईशस्यैष निवेशितः पदयुगे भृङ्गायमाणं भ्रम-
च्चेतो मे रमयत्वविघ्नमनघो न्यायप्रसूनाञ्जलिः ॥
इत्येषा सहकारिशक्तिरसमा माया दुरुन्नीतितो
मूलत्वात्प्रकृतिः प्रबोधभयतोऽविद्येति यस्योदिता ।
देवोऽसौ विरतप्रपञ्चरचनाकल्लोलकोलाहलः
साक्षात्साक्षितया मनस्यभिरतिं बध्नातु शान्तो मम ॥

## अदृष्टाधिष्ठातृत्वेनेश्वरसिद्धिः

# प्रथमोऽध्यायः

## विषयप्रवेशः

ईश्वरस्यास्तित्वं नवेति जागर्ति विचिकित्सा सर्वेषां हृदि। तस्याऽस्तित्वे प्रत्यक्षादिप्रमाणैः कथं नोपलभ्यते, नास्तित्वे च प्रतिदिनं नियतकाल एव भुवनभाष्करस्योदयः, प्रतिनक्तं सुधाकरस्य स्वरूपपरिवर्तनेनोपस्थितिः, ऋतूनां प्रतिवर्षं समयेन नियमानुसार-मेवागमनमिति दृष्ट्वाऽऽश्चर्यसिक्तेन मनसा चिन्तयन्नसावात्मानं पृच्छति - किमिदं सर्वम्? कुत एतत्सर्वमाविर्भवति ? केन चैतत् सर्वं परिचाल्यते ? कश्चैतत्परिचालयति ? सुनियन्त्रितयन्त्र इवायं संसारो ब्रह्माण्डश्च केन परिचालकेन नियन्त्रितम्? इत्यादयः प्रश्नाः पुनरपि 'ईश्वरो न वेति' चिन्तनसागरे विवेचकान् पातयन्ति। तेषां जिज्ञासोपसमनाय परमकारुणिकः परमभक्तः महर्षिकल्पः श्रीमदुदयनाचार्यः भगवद्भक्तानां कृते परमरत्नमिमं न्यायकुसुमाञ्जलिं प्रणिनाय। स च न्यायकुसुमाञ्जलिः बौद्धदार्शनिक-नागार्जुन-दिङ्नाग-वसुबन्धु-धर्मपाल-धर्मकीर्ति-कल्याणरक्षित-धर्मोत्तरा-चार्योक्तानामनीश्वरविषयकतर्काणां कृते ब्रह्मास्त्रमिव समभवत्। तदनन्तरं कोऽपि बौद्धः श्रीमदाचार्योक्तसुतर्काणां निरसितुं समर्थो नाऽभवत्। तेन सहस्राब्दाधिककालं यावत् प्रचलितः सन्घर्षोऽत्रैव समाप्तः। एवं परवर्तिविद्वद्भिरपि-अत्रत्येश्वरानुमानप्रणालीमनुसृत्यैवेश्वरोऽनुमितः, अत ईश्वरसाधकग्रन्थोऽयं पूर्णतया विदुषां समवाये महतीं प्रतिष्ठां भजत इति।

अस्तु तर्हीश्वरः तथापि को लाभः तस्य विवेचनेन । अत एव भामतिकाराः- 'भो भवतां ब्रह्म प्रसिद्धमप्रसिद्धं वा, यदि चेदप्रसिद्धं तर्हि करकट(काक)दन्तपरीक्षणवत् तस्य परीक्षणं निरूपणं वा वृथा। अथ

प्रसिद्धम्, तर्हि प्रसिद्धत्वात् सर्वे ज्ञास्यन्त्येव किमिति लक्षणस्वरूपादि-प्रतिपादनेन वृथा कालो नीयते विनाश्यते भवता' इति प्रतिपादयन्ति। अत्राहुः श्रीमदुदयनाचार्याः—

**स्वर्गापवर्गयोर्मार्गमामनन्ति मनीषिणः ।**
**यदुपास्तिमसावत्र परमात्मा निरूप्यते ।।**
**न्यायचर्चेयमीशस्य मननव्यपदेशभाक् ।**
**उपासनैव क्रियते श्रवणानन्तरागता ।।**

श्रुतो हि भगवान् बहुशः श्रुतिस्मृतीतिहासपुराणेष्विदानीं मन्तव्यो भवति, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इति श्रुतेः ।

**आगमेनानुमानेन ध्यानाभ्यासरसेन च ।**
**त्रिधा प्रकल्पयन् प्रज्ञां लभते योगमुत्तमम् ।। इति स्मृतेश्च ।**[१]

तथा च चतुर्विधपुरुषार्थेषु धर्मार्थकाममोक्षेषु परमपुरुषार्थः मोक्षः। तस्य प्राप्तिरेव मानवजीवनस्य साफल्यं तदर्थमेव ईश्वरमननात्मक-मुपासनमेवाऽत्र क्रियते।

**ईश्वरविषयकज्ञानं मोक्षोपयोगि**

सामान्यतः न्यायशास्त्रे ज्ञानाधिकरणत्वेन व्यपदिश्यमानोऽ-यमात्मशब्दः जीवेश्वरबोधकः। अत्रेदमाशंका जायते '-आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः'[२] इत्यादिश्रुत्याऽऽत्मविषयक-

---

१. *न्यायकुसुमाञ्जलि-स्वोपज्ञः पृ० ५ (विस्तरः)*

२. *बृहदारण्यकोपनिषद् २/४/५*

साक्षात्कारस्य मोक्षहेतुत्वं प्राप्यते। परन्त्वत्रात्मसाक्षात्कार इत्यस्य कोऽर्थः किमात्ममात्रसाक्षात्कारोऽर्थः, उत जीवात्ममात्रसाक्षात्कारोऽर्थः, अथवा स्वात्ममात्रसाक्षात्कारोऽर्थः, उत परमात्मसाक्षत्कारोऽर्थः इति। अत्र यद्यपि स्वात्ममात्रसाक्षात्कार इत्येव समाधानं भवितुमर्हति। यतोहि— आत्मसाक्षात्कारोऽपि न साक्षान्मोक्षजनकः किन्तु मिथ्याज्ञाननिवृत्तिद्वारैव। तदाह न्यायसूत्रे महर्षिगौतमः 'दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः'[१] इति। मिथ्याज्ञानञ्च न जीवात्ममात्रविषयकं संसारजनकं, न वा परमात्मविषयकं किन्तु स्वात्ममात्रविषयकं, तदेव मोक्षं कामयमानेन निवर्तयितुमिष्यते। तथा च स्वात्ममात्रविषयकमिथ्याज्ञान-निवृत्त्यर्थं न जीवात्ममात्रविषयकसाक्षात्कारोऽपेक्ष्यते, न वा परमात्मविषयकः, किन्तु स्वात्ममात्रविषयसाक्षात्कारः। तदुक्तम् —

**यदात्मानं विजानीयादहमस्मीति पूरुषः।**
**किमिच्छन् कस्य कामाय संसारमनुसंसरेत्।। इति।**

तथापि आचार्योदयन ईश्वरज्ञानस्यापि मोक्षहेतुत्वं स्वीकरोति। तथा चाचार्यमते परमात्मविषयकसाक्षात्कारसहकृतमेव जीवात्मविषयकं तत्त्वज्ञानं मोक्षं जनयति न केवलम्। तथा चोक्तम् 'द्वे ब्रह्मणी वेदितव्ये परञ्चापरमेव च' इत्यत्र वेदनमात्रस्याकाङ्क्षितत्वेन प्रकृतत्वादीश्वरवेदनस्यापि मोक्षहेतुत्वं प्रतिपाद्यते। 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति श्रुतिरपीश्वरविषयकज्ञानस्य मोक्षकारणतावगमयति। 'तमेव' इत्यत्र तत्पदेनेश्वरस्यैव परामर्शः। यतोहि-'ईशावास्यमिदं सर्वं

---

१. न्यायसूत्रम् १/१/२

यत्किञ्चिज्जगत्यां जगत्। तेन त्यक्तेन भुञ्जीथाः मा गृधः कस्यस्विद्धनम्' अस्मिन्मन्त्रे ईश्वरस्य स्पष्टतया निर्देशो दृश्यते, एतन्मन्त्रानन्तरमेव तमेव विदित्वा ........इति मन्त्रस्योल्लेखो विद्यते। अतोऽत्रापीश्वरस्यैव परामर्शः यतस्तत्पदस्य 'बुद्धिविषयतावच्छेदकत्वोपलक्षितधर्मावच्छिन्ने शक्तिमत्वात्। तथा च स्वात्मविषयकज्ञानस्येवेश्वरविषयकज्ञानस्यापि मोक्षहेतुत्वं सिद्धम्। यद्यपि ईश्वरस्य मननं मिथ्याज्ञानस्योन्मूलने नोपयोगि, तथापि स्वात्मसाक्षात्कारे उपयुज्यते। अत एव कुसुमाञ्जलिप्रकाशकाराः निरूपयन्ति 'स हि तत्त्वतो ज्ञातः स्वात्मसाक्षात्कारस्योपकरोति' इति। अथवा श्रुत्या ईश्वरविषयकमननस्य मोक्षहेतुत्वे प्रमाणिते तदनुपपत्त्याऽदृष्टमेव तद्द्वारं कल्प्यते। तथा सति ईश्वरविषयकं मननमदृष्टद्वारा मुक्तौ हेतुर्भवति। तदुक्तम्- हरिदासभट्टाचार्येण 'ईश्वरमननञ्च स्वात्मसाक्षात्कारद्वाराऽदृष्टद्वारा वा मुक्तौ हेतुः' इति।'[१]

अत्र भासर्वज्ञाचार्या अपि परमात्मविषयकज्ञानस्य मोक्षहेतुत्वं प्रतिपादयन्ति। 'अपरात्मतत्त्वज्ञानमधर्मक्षयहेतुत्वान्निःश्रेयसाङ्गम्, परमात्मतत्त्वज्ञानं तु परमात्मोपासनाङ्गत्वेनापवर्गसाधनम्। ईश्वरोपासनाविधिस्तु क्लेशकर्मक्षयसमाधिलाभार्थमनुष्ठेयः। अत्र योगाङ्गान्यपि सेवितव्यानि। ततोऽचिरेणैव कालेन भगवन्तमनौपम्यस्वभावं शिवमवितथं प्रत्यक्षतः पश्यति। तं दृष्ट्वा निरतिशयं श्रेयः प्राप्नोति। तमेव विदित्वाति-मृत्युमेतीत्यादि च। ईश्वरं ज्ञात्वा मृत्युमतिक्रामतीति श्रुत्यर्थः। तस्माच्छिवदर्शनान्मोक्ष इति'।[२] तस्मात् श्रुतिस्मृतिपुराणेतिहासेभ्यो गुरुमुखाद्

---

१. *न्यायकुसुमाञ्जलि-हरिदासी-पृ० १४*

२. *न्यायसारः पृ० १४२-१४३*

बहुशः श्रुतस्य परमात्मनो मननमावश्यकम्। मननं च हेतुभिरनुचिन्तनमत ईश्वरमननात्मिका ईश्वरसिद्धिरत्र क्रियते। नैयायिका हि प्रमुखतः त्रिभिः हेतुभिरीश्वरं साधयन्ति। अदृष्टाधिष्ठातृत्वेन, वेदप्रणेतृत्वेन, क्षित्यादिकर्तृत्वेन चेति। परन्तु पूर्वपक्षिणः चार्वाक-मीमांसक-बौद्ध-जैन-सांख्यदार्शनिका अदृष्टाधिष्ठातारं, वेदप्रणेतारं, निखिलचराचरात्मकजगत्कर्तारमीश्वरं न स्वीकुर्वन्ति। अतः क्रमशः पञ्चविधा विप्रतिपत्तयः प्रादुर्भवन्ति। तदुक्तमाचार्योदयनेन - तदिह सङ्क्षेपतः पञ्चतयी विप्रतिपत्तिः—

**(१) अलौकिकस्य परलोकसाधनस्याभावात्।**

**(२) अन्यथापि परलोकसाधनानुष्ठानसम्भवात्।**

**(३) तदभावावेदकप्रमाणसद्भावात्।**

**(४) सत्त्वेऽपि तस्याऽप्रमाणत्वात्।**

**(५) तत्साधकप्रमाणाऽभावच्चेति।**

आसां पञ्चविधविप्रतिपत्तीनां पञ्चाऽध्यायेषु यथाक्रमं निरस्यते। साम्प्रतन्तु 'अलौकिकस्य परलोकसाधनस्याऽभावात्' इति प्रथमविप्रतिपत्तेः, तस्या अवान्तरविप्रतिपत्तीनाञ्च निरासपूर्वकमदृष्टाधिष्ठातृत्वेन भगवन्तमीश्वरं साधयामि।

## चार्वाकमते अदृष्टादेरभावः

भारतीयदार्शनिकसम्प्रदाय आस्तिको नास्तिकश्चेति भागद्वयेन विभक्तोऽस्ति। तत्र क आस्तिकः कश्च नास्तिक इति विषये विमतिः दृश्यते। आस्तिकशब्दनिर्माणसमये महर्षिपाणिनिना 'अस्ति नास्ति दिष्टं

मतिः'[१] इति सूत्रितम्। अत्र दिष्टशब्दस्य 'दैवं दिष्टं भागधेयम्' इति कोशानुसारेण एवञ्च 'पूर्वजन्मकृतं कर्म तद्दैवमिति कथ्यते' इति रीत्या पूर्वजन्मकृतानि कर्माणि दैवशब्दवाच्यानि दिष्टशब्दस्यापि वाच्यतां लभन्ते। अतः पूर्वजन्मस्वीकर्तार आस्तिका इति वक्तुं शक्यन्ते। एतादृशपरिभाषया पूर्वजन्मस्वीकर्तॄणां बौद्धजैनदार्शनिकानामास्तिकानां पङ्क्तौ प्रवेशेऽपि नास्ति चार्वाकस्यात्र स्थानम्।

एवं व्याकरणमहाभाष्यकारैः 'अस्तीत्यस्येति परलोककर्तृका सत्ता विज्ञेया तत्रैव विषये लोके प्रयोगदर्शनात्, तेन परलोकोऽस्तीति मतिर्यस्य स आस्तिकः, तद्विपरीतो नास्तिकः'[२] इति प्रतिपादितम्, इत्यनेनापि चार्वाकस्य नास्तिकत्वं प्राप्नोति।

एवम् 'आस्तिक्यमस्तिभावः श्रद्धधानता आगमार्थेषु' अथवा 'आस्तिक्यं शास्त्रार्थे सत्यतानिश्चयः' अथवा 'आस्तिक्यं शास्त्रार्थविश्वासः' इत्यादीन् प्रतिपादयन्ति विद्वांसः। एतदनुसारेण 'अस्ति वेदः प्रमाणमिति मतिर्येषां ते आस्तिकाः' 'नास्ति वेदः प्रमाणमिति मतिर्येषां ते नास्तिकाः' इति व्युत्पत्त्या वेदप्रामाण्याभ्युपगन्तार आस्तिकाः तद्विपरीताश्च नास्तिका इति सिद्ध्यति। तदुक्तं मनुना 'नास्तिको वेदनिन्दकः' इति। प्राय एतदनुसारेणैव वैदिकाः 'चार्वाकजैनबौद्धाः नास्तिकाः' इति व्यवहरन्ति। तथा च केनचिद् व्युत्पत्तिबलेन बौद्धजैनयोरास्तिकत्वेऽपि नास्ति चार्वाकस्य आस्तिक-

---

१. पाणिनिसूत्रम् ४/४/६०

२. व्याकरणमहाभाष्यम् ४/४/६०

त्वप्रतिपादनकरी काचित् व्युत्पत्तिः। अत एव बहुत्र दर्शनेषु चार्वाकमभिलक्ष्यं 'नास्तिकशिरोमणि' इति पदप्रयोगो दृश्यते। सर्वेषु दर्शनेषु प्रायश्चार्वाकदर्शनं पूर्वपक्षरूपेणोपस्थाप्य तन्निराकरणपुरस्सरं स्वसिद्धान्तप्रतिपादनं विधीयते। यदि चार्वाकदर्शनस्यास्तित्वं नाभविष्यत् तदा पूर्वपक्षाभावाद् दर्शनानामेतावती प्रगतिरपि नाभविष्यत्, परन्तु एतादृशः सिद्धान्तप्रतिपादकः क आसीदिति विषये बहवो विभेदात्मकविचारा दरीदृश्यन्ते शास्त्रकाराणाम्। पुराणादिषु देवगुरुणा बृहस्पतिना दैत्यानामसुराणाञ्च सम्मोहनाय शास्त्रमिदं प्रणीय प्रचारितमिति श्रूयते। अत एव विरोचनप्रभृतयोऽसुराश्चार्वाकदर्शनस्याऽनुयायिन इति मन्यते।

चर्वयन्ति भक्षयन्ति इति चार्वाकाः, अथवा चारुः आपाततः कोमला वाक् वाणी येषां ते चार्वाकाः। अनया रीत्या ये केवलं भोजनादिसांसारिकसुखेप्सवस्ते चार्वाकाः। अथ च तत्सुखलाभाय कोमलवाग्व्यवहारशीलत्वात् तेषां चार्वाकसंज्ञेति। दर्शनस्यास्य सर्वसिद्धान्तप्रतिपादकः प्रामाणिको ग्रन्थो न प्राप्यते। केवलं बार्हस्पत्यसूत्रनाम्ना कानिचन सूत्राणि, 'तत्त्वोपप्लवसिंह' नामा ग्रन्थश्च चार्वाकसिद्धान्तं प्रतिपादयति। एतदतिरिक्तं तु तेषु तेषु दर्शनेषु पूर्वपक्षरूपेणोपस्थापिता विचारा एव चार्वाकदर्शनस्य ज्ञानसाधनानि भवन्ति।

चार्वाकसिद्धान्ते 'प्रत्यक्षमेकमेव प्रमाणम्' तथा सति प्रत्यक्षसिद्धानि 'पृथिव्यप्तेजोवायुरिति भूतानि चत्वारि तत्त्वानि। तेभ्य एव देहाकारपरिणतेभ्यः चैतन्यमुपजायते, कुतः ? 'किण्वादिभ्यो मदशक्तिवत्' इति तेषां सिद्धान्तः। प्रसिद्धपुरुषार्थचतुष्टयमध्ये अर्थकामद्वयपुरुषार्थवादिनः चार्वाकाः। अतः शरीरोपभोगाय ये ये पदार्था आवश्यकाः तान् कृषिगो-

रक्षवाणीज्यदण्डनीत्यादिभिः स्वोपभोगार्थं येन केनापि प्रकारेणाऽर्थः सम्पादनीयः। तयोः द्विविधपुरुषार्थयोः मध्ये अङ्गनालिङ्गनादिजन्यं कामात्मकसुखमेव परमपुरुषार्थः। तदुक्तम्—

**अङ्गनालिङ्गनाजन्यसुखमेव पुमर्थता।**
**कण्टकादिव्यथाजन्यं दुःखं निरय उच्यते।।**[१] **इति।**

अतः नहि तद्विषयजन्यैहिकसुखदुःखभिन्नः अदृष्टजन्यस्वर्ग-नरकपदवाच्यः परलोको विद्यते। 'परलोकिनोऽभावात् परलोकाभावः'[२] एवं 'न स्वर्गो नापवर्गो वा नैवात्मा पारलौकिकः'[३] इति चार्वाकसिद्धान्तः।

नैयायिका ह्यदृष्टाधिष्ठातृत्वेन जीवात्मव्यतिरिक्तमेवेश्वरं स्वीकुर्वन्ति। प्रयतन्ते चैवविधमीश्वरं प्रमाणेन प्रसाधयितुमपि। परन्तु एतेषां प्रयासः सर्वदा निष्फल एवेति चार्वाकाणां मतम्। यतो हि यद्यदृष्टस्य सत्ता स्यात् तदा कदाचिदधिष्ठातृतया परमेश्वरः साधयितुं शक्येत। अदृष्टस्य तु सत्त्वमेवासिद्धम्। कुत इति चेत्, नहि तस्य सिद्धौ प्रत्यक्षं प्रमाणम्, अदृष्टस्य प्रत्यक्षाविषयत्वात्। तथा सति प्रत्यक्षमूलकमनुमानमपि न शक्नोत्यऽदृष्टं साधयितुम्। लोके यद्वैषम्यं दृश्यते न तत्राऽदृष्टस्य काचिदावश्यकता। स्वभावत एवोत्पद्यते तत्। यथा च पशुपक्षिणां विचित्रतायां न किञ्चित् कारणं स्वभाव एवैष। तथैव विचित्रा सृष्टिरपि भूतचतुष्टयात्मिकया प्रकृत्यैव सञ्जायते न हि तत्राऽदृष्टापेक्षा। भूतेभ्यः

---

१. *सर्वदर्शनसंग्रहः पृ० ६*

२. *बार्हस्पत्यसूत्रम् - १७*

३. *सर्वदर्शनसंग्रहः पृ० १३*

यथाऽदृष्टनिरपेक्षेभ्यः सिकतागौरिकाश्मखण्डप्रभृतयः सञ्जायन्ते तथैवाऽदृष्ट-निरपेक्षेभ्यो भूतभ्य एव शरीराद्यात्मकः सर्गोऽपि सञ्जायते ।[१] अदृष्टस्यापेक्षैव नास्ति तर्हि कुतस्तदधिष्ठातृतया परमेश्वरस्य सिद्धिः। तथा च नैयायिकमतसिद्धे ईश्वरे प्रत्यक्षप्रमाणाभावात् न कथमपि एवं प्रकारक ईश्वरः प्रमाणिकानामुचित इति। चार्वाकाणां मते लोकप्रसिद्धो राजा एव परमेश्वरपदवीमधिरोहति ।[२]

पाणिनिनापि कतिषुचन सूत्रेष्वीश्वरशब्दः 'समर्थवान् स्वामी' इत्यर्थे प्रयुक्तः। यथा 'अधिरीश्वरे' 'यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी' 'स्वामीश्वराधिपतिदायादसाक्षिप्रतिभूप्रसूतैश्च' 'ईश्वरे तोसुन्कसुनौ' तस्येश्वरे' इत्यादिसूत्रस्याऽर्थविवेचनेन एवमुदाहरणेन स्फुटीभवति यद् ईश्वरशब्दस्य प्रयोगः समर्थवान् राजार्थे भवति। अत एव महाभाष्यकारेण महर्षिपतञ्जलिना 'तद्यथा लोक ईश्वर आज्ञापयति ग्रामादस्मान्मनुष्या आनीयन्तामिति'[३] इति। एवं गीतायां भगवताऽपि—

**ईश्वरोहमहं भोगी सिद्धोहं बलवान् सुखी ।'[४]**

इत्युक्तम्। अत ईश्वरशब्दः राजावाचक एव। तथा च राजा भिन्नः नास्ति कश्चनाऽप्रामाणिकेश्वर इति चार्वाकाः। न च सर्वज्ञेश्वरमन्तरा जगन्निर्माणं न

---

१. *भूतेभ्यो मूर्त्युपादानवत् तदुपादानम्। न्यायसूत्रम् ३/२/६३*

२. *लोकसिद्धो राजा परमेश्वरः। सर्वदर्शनसंग्रहः पृ. ६*

३. *महाभाष्यम् ६/२/१*

४. *गीता १६/१४*

सम्भवतीति वाच्यम्, प्रलयानभ्युपगमेन सर्वथा नूतनस्य जगतो निर्माणस्य निर्माणकर्तुश्चानावश्यकत्वात् । अस्तु वा सृष्टिः तथा सत्यपि नैयायिकानां मनोरथः न सिद्ध्यति । अस्माकं चार्वाकाणां मते अकस्मादेव स्वभावादेव वा सर्गोत्पत्तिसम्भवे कार्यकारणभावस्य निर्मूलकत्वात्। तदुक्तं गीतायां भगवता—

**असत्यमप्रतिष्ठं ते जगदाहुरनीश्वरम् ।**
**अपरस्परसम्भूतं किमन्यत्कामहैतुकम् ।।[१] इति ।**

अत एव क्षित्यादिभ्यः चतुर्भ्यो भूतेभ्यः स्वभावतः एव सर्गसम्भवात् नहि तत्कर्तृभूतोऽकिञ्चित्करोऽप्रामाणिकः परमेश्वरः । एवञ्च चार्वाकमतविवेचने-नैतदपि स्पष्टीभवति वेदानां धूर्तप्रलापतया नहि तत्कर्तृभूतः परमेश्वरः । किञ्चादृष्टस्यास्वीकारात् नहि तदधिष्ठातृभूतः परमेश्वरः, तस्मात् न्यायभिमतः परमेश्वरः चार्वाकदर्शनानुसारं शशशृङ्ग इवालीकः ।

## अदृष्टस्वरूपविमर्शः

वेदविहितकर्मगंगास्नान-पूजन-होमयाग-दानव्रतानुष्ठानादिकृते सति-आत्मनि समवायसम्बन्धेन धर्म उत्पद्यते । एवं वेदनिषिद्धहिंसानिन्दा-ऽभक्ष्यभक्षणागम्यागमनापेयपानात्मकनिन्दितकर्मभ्य आत्मनि समवायसम्बन्धेनाऽधर्म उत्पद्यते । तौ धर्माधर्मौ-अप्रत्यक्षत्वाददृष्टशब्देन व्यवह्रियेते नैयायिकैः । अत एव विश्वनाथभट्टाचार्येणोक्तम् 'धर्माधर्मावदृष्टं

---

१. *श्रीमद्भगवद्गीता १६/८*

स्यात्'[१] इति। शाब्दिकव्युत्पत्तिबलेनापि अदृष्टशब्दः 'दृशि- प्रेक्षणे' दृश् धातोः निष्ठा'[२] इति सूत्रेण क्तप्रत्यये निष्पन्नो दृष्टशब्दः ततो न दृष्टमिति 'अदृष्टम्' इत्यतः निष्पन्नोऽदृष्टशब्दः। तेन चाऽदृष्टशब्देन इन्द्रियाऽग्राह्यो वस्तुविशेषो बोध्यते। जीव अदृष्टस्य प्रत्यक्षं कर्तुं न शक्नोति अतः जीवो न अदृष्टस्य अधिष्ठाता। परमेश्वरस्तु सर्वज्ञोऽतो जीवगतमदृष्टमपि प्रत्यक्षं कर्तुं शक्नोति। अतः परमेश्वरेण गाह्य अस्माभिरग्राह्यः वस्तुविशेष एव अत्रादृष्टपदार्थः।

सतः कारणात् कार्योत्पत्तीति नियमाद् आशुतरविनाशि यागादिकर्म कालान्तरभावि स्वर्गरूपफलं दातुं न शक्नोति, अतो मध्ये कोऽपि व्यापारः कल्पनीयः। स एव धर्मः। स च धर्मः जीवानामात्यन्तिकदुःख-ध्वंसरूपमोक्षसम्पादकः।

**धारणाद् धर्म इत्याहुः धर्मो धारयते प्रजाः।**
**यः स्याद् धारणसंयुक्तः स धर्म इति निश्चयः॥**[३]

इत्यादिवाक्यादपि ज्ञातुं शक्यते धर्म एव जगत्साधारणहेतुः अयमेव सामाजिकमर्यादानां संरक्षकः, एतत्प्रभावादेव जगतिमातृस्वसृदुहित्रादीनां सत्ता। धर्मः कुमार्गे प्रतिबन्धकीभूतः, मानवानां त्राता सुखप्रदाता चास्ति। अत एवोक्तं 'धर्मो विश्वस्य जगतः प्रतिष्ठा' इति। लोके धर्मिष्ठं प्रति प्रजा उपसर्पन्ति।'धर्मेण पापमपनुदति, धर्मे सर्वं प्रतिष्ठितम्। तस्माद् धर्मं परमं

---

*१. न्यायसिद्धान्तमुक्तावली - कारिका १६१*

*२. पाणिनिसूत्रम् ३/२/१०२*

*३. महाभारतः - शान्तिपर्व १०८/११*

वदन्ति ।

वैशेषिकसूत्रकारेण आचार्यकणादेन 'यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः' इत्यादिना धर्मपदार्थः परिभाषितः । अभ्युदयः=मोक्षव्यतिरिक्तमैहिकमामुष्मिकञ्च फलम्, निःश्रेयसं=मोक्षः अनयोः प्राप्तिर्यस्मात् साधनाद् भवति स धर्मः, पुण्यं, सुकृतमिति चास्य व्यवहारः । एतदभ्युदयनिःश्रेयससाधनभूतस्य धर्मस्योपदेशादेव वेदस्य प्रामाण्यं भवति ।[१] महर्षिजैमिनिना 'चोदनालक्षणो धर्मः' इति सूत्रेण धर्मस्य लक्षणं कृतम् । मनुना—

**वेदस्स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।**
**एतच्चतुर्विधं प्राहुः साक्षाद् धर्मस्य लक्षणम् ।।[२]**

**अपि च- धृतिःक्षमा दमोऽस्तेयं शौचमिन्द्रियनिग्रहः ।**
**धीर्विद्यासत्यमक्रोधो दशकं धर्मलक्षणम् ।।[३] इति ।**

भट्टमते 'यागादिरेव धर्मः'[४] प्रभाकरमते-त्वपूर्वनाम पुण्यम्' सांख्यैः - 'श्रुतिस्मृतिविहितानां कर्मणामनुष्ठानाद् बुद्ध्यवस्थः सत्त्वावयव आशयभूतो धर्म इत्युच्यते'[५] बौद्धाः - विज्ञानगतज्ञानान्तरजन्यवासना धर्मः इति वदन्ति

---

१. तद्वचनादाम्नायस्य प्रामाण्यम् । वैशेषिकसूत्रम् ११/३

२. मनुस्मृतिः २/१२

३. ,, ६/९२

४. शाबरभाष्यम् - पृ० १८

५. युक्तिदीपिका पृ० १२

जैनाः- असंख्येयाः प्रदेशा धर्माधर्मयोः'[१]। अतः कायारम्भकः सूक्ष्मो मूर्तिमान् सुखहेतुः पुद्गलनामधेय इति वदन्ति॥ स च 'धर्मः पुरुषगुणः। कर्तुः प्रियहितमोक्षहेतुरतीन्द्रियोऽन्त्यसुखसंविज्ञानविरोधी पुरुषान्तःकरण-संयोगविशुद्धाभिसन्धिः वर्णाश्रमिणां प्रतिनियतसाधननिमित्तः'[२] इति वैशेषिका वर्णयन्ति। नैयायिका अपि 'जीववृत्ती त्विमौ (धर्माधर्मौ) गुणौ'[३] इति प्रतिपादयन्ति। एवञ्च 'इमौ तु वासनाजन्यौ ज्ञानादपि विनश्यतः'।[४] इत्यादिना जीवात्मवृत्तिधर्मस्य कर्मनाशजलस्पर्शकीर्तनभोगतत्त्वज्ञानादिना नाश्यत्वम्। एवञ्चाऽधर्मस्य भोगप्रायश्चित्तादिना नाश्यत्वम् स्वीकुर्वन्ति। एतावेवाऽदृष्टमिति। **अत्रेदं विभावनीयम्** - आपाततो यद्यप्यदृष्टापूर्वयोर्नैव लक्ष्यते भेदः। अत एव विविधस्थलेषु मिथः पर्यायभूतत्वं प्रदर्शितम्। अत एव नैयायिकाः यत्र तत्र स्थलेषु अपूर्वमदृष्टपदेन व्यवहरन्ति। एवं न्यायकोशे 'तददृष्टमपूर्वमिति मीमांसका आहुः' इति। तथैवाऽपूर्वमधिकृत्य शब्दकल्पद्रूमे 'कर्मजन्यमदृष्टं तत्पर्यायः' इति। तथापि सूक्ष्मतमो भेदोऽस्त्येव। तद्यथा— (१) अदृष्टं कार्यमात्रं प्रति निमित्तकारणं भवति। अत एव दृष्टसकलसामग्रीसत्वेऽपि यदि कार्याभावस्तदाऽदृष्टवैगुण्यं कल्प्यते। परन्त्वपूर्वं नास्ति कार्यमात्रजनकम्। (२) अदृष्टं वेदविहितकर्मजन्यं, वेदनिषिद्धकर्मजन्यं, वासना=मिथ्याज्ञानजन्यमपि। अपूर्वन्तु यागमात्रजन्यम्। तस्य यागमात्रनिष्ठजनकतानिरूपितजन्यतावत्त्वात्।

---

१. *तत्त्वार्थसूत्रम् ५/७*

२. *प्रशस्तपादभाष्यम् पृ०२२५*

३. *न्यायसिद्धान्तमुक्तावली का० १६३*

४. *,, का० १६४*

(३) अत एव अदृष्टमपूर्वापेक्षया व्यापकम्, अपूर्वन्त्वदृष्टापेक्षया व्याप्यम्। (४) अदृष्टस्य प्रायश्चित्तकीतर्नभोगतत्त्वज्ञानादिभिः नाश्यत्वम्। अपूर्वस्य तु केवलेन भोगेन नाश्यत्वम्। (५) अदृष्टं जीवात्मनि एव तिष्ठति। अपूर्वन्तु यागोपकरणनिष्ठं क्वचित् भोग्यनिष्ठमपि। (६) सुखदुःखादिसमवायि-कारणतावच्छेदकतया धर्मत्वाधर्मत्वयोरेवसिद्धिः न तु अदृष्टत्वस्य अतोऽदृष्टत्वं न जातिः, तस्य जातित्वे गुणानां चतुर्विंशतिसंख्या व्याहन्येत। परन्त्वपूर्वत्वं जातिविशेष इति। तथापि प्रायः मिथः पर्यायत्वेन व्यवह्रियते।

**अदृष्टसिद्धिः**

तत्र तावद् विहितक्रियाजन्यं यावत्फलोत्पत्यवस्थायि अदृष्टं नाम किञ्चिद्वस्तु स्वीकुर्वन्ति गौतमीयाः काणादाः मीमांसकाश्च। तदेवेदानीं चिन्त्यते किं तदभ्युपगमो युक्तियुक्तो न वेति।

अत्र पूर्वपक्षिचार्वाकाः प्रत्यवतिष्ठन्ते - नास्त्यदृष्टस्य सत्ता प्रमाणाभावात्। तथाहि न तावत्तत्र प्रत्यक्षं प्रमाणम् अदृष्टात्मकगुणस्य प्रत्यक्षग्राह्यरूपादिभिन्नत्वेनाऽतिन्द्रियत्वात् । अनुमानादीनां प्रामाण्याभावदेव तैरपि नादृष्टसिद्धिः। कथञ्चिदनुमानादीनां प्रामाण्येऽपि केनचिल्लिङ्गेन सहाऽदृष्टस्य सहचाराऽदर्शनात् नाप्यनुमानम्। उपमानगम्यमपि नास्ति सादृश्याभावात्। यद्यपि शब्दप्रमाणं तत्रोपलभ्यते परन्तु तेषां वैदिकवाक्यानां धूर्तप्रलापतया न प्रामाण्यम्। अतः प्रमाणाऽभावान्नादृष्ट-सिद्धिरिति चार्वाकाणामाशयः।

तदपि समीचीनं न प्रतीयते-यतोहि इह खलु जगति यावन्तोऽपि क्रियाकलापाः सन्ति ते सर्वेऽपि कारणाधीनाः पूर्वनिर्धारिताश्च। अन्यथा सर्वदा समेषां कार्याणामुपलब्धिरनुपलब्धिर्वापद्येत् नियामकस्य

कस्यचिद् विरहात्,तस्मात् संसारे स्थितानाम् असन्-वसन्-शून्यं इन्द्रियविकलं बुभुक्षापीडितं पिपासाकुलितं घर्मतप्तं शीतक्लान्तं दुःखिनम्, एवञ्च सर्वैश्वर्यसमृद्धिधनधान्यपुत्रपौत्रकलत्रादिपरिवृतं गोऽश्वगजवाहनादिभिरावृत्तं चिन्ताहीनं दयाक्षमाकरुणापरोपकारप्रभृतिगुणैरवच्छिन्नं सुखिनञ्जनमवलोक्य प्रतीयते यद् अत्रापि केनापि कारणेनावश्यं भाव्यम् । अनंयोः सुखदुःखयोः किमपि दृष्टं कारणं न दृश्यतेऽतः सुखदुःखकार्यकारणत्वेन जीवात्मनिष्ठं धर्माधर्मात्मकमदृष्टं परिकल्प्यते। नहि केवलं दृष्टेन कारणेन सुखदुःखाद्युत्पत्तिः सम्भवत्यपि तु यस्मिन्नात्मनि समवायेन धर्मः सन्तिष्ठते तस्मिन्नेवात्मनि समवायेन सुखमुत्पद्यते। यत्र च समवायेनाऽधर्मस्तिष्ठति तत्र समवायेन दुःखमुत्पद्यते। एकस्मिन्नेव कुटुम्बे स्थितानां मातृपितृभ्रातृस्वसृदुहितृप्रभृतीनां समेषां दृष्टहेतूनां समानत्वेऽपि पूर्वजन्मकृतकर्मजन्यादृष्टवशेन तत्परिवारस्थजनेषु कश्चिन्निरामयः सुखी कश्चिद्रोगरुग्णः दुःखी च दृग्पथविषयो भवति। तत्र सुखदुःखादिवैचित्र्यं नाऽदृष्टमन्तरा सम्भवति। तथा चानुमानप्रयोगः 'सुखदुःखात्मकं वैषम्यम्, अदृष्टजन्यं दृष्टकारणानां समानत्वेऽपि वैषम्यत्वात्' इत्याद्यनुमानेनैवाऽदृष्टसिद्धिः। अतोऽनिच्छन्नपि चार्वाकैरदृष्टमङ्गीकर्तव्यम्।

एवं लोकेऽस्मिन् जीव्त्मा विविधानि पुण्यानि पापानि चाचरति किन्तु तस्य फलमत्र नैवोपलभ्यते, जन्मान्तरे तस्य फलमुपलभ्यते। तत्रायं प्रश्नः समुदेति यदस्मिन् जन्मनि यत्कर्माचरितं तत्तु विनष्टमेव 'सतः कारणात् कार्योत्पत्तिः' इति नियमेन विनष्टात् कारणात् नैव किञ्चित् फलमुत्पद्यते। तदैव विनष्टात् कर्मणः किञ्चित् फलमुत्पत्तुं शक्यते यदा कश्चिद् व्यापार उत्पन्न : स्यात् स च व्यापारः फलनिष्पत्तिपर्यन्तं च स्थायी भवेत्। अतोऽदृष्टस्य कल्पना क्रियते।

एवं 'स्वर्गकामो यजेत' इत्यादिवैदिकवाक्ये यागेन स्वर्गं कुर्यादिति कर्मणः श्रेयसाधनत्वं श्रूयते। तत्र क्षणिकं यागादिकर्म, कालान्तरभावि च स्वर्गफलम्, विनष्टाच्च कारणात् कार्यस्यानुत्पत्तिः, श्रुतञ्च यागादेः कारणत्वम् तदेतदन्यथानुपपत्त्या फलोत्पत्त्यनुगुणं किमपि कालान्तरावस्थायि कर्मसामर्थ्यं (=अदृष्टं) कल्प्यते, यद्द्वारेण कर्मणां श्रुता फलसाधनता निर्वहति। तदुक्तम्—

**फलाय विहितं कर्म क्षणिकं चिरभाविने।**
**तत्सिद्धिर्नान्यथेत्येतदपूर्वमपि कल्पते।।[१] इति।**

एवमदृष्टस्वीकारे ईश्वरे वैषम्यनैर्घृण्यदोषौ नैवाप्नुतः। विषमोऽसमदृष्टिः। तस्य भाव वैषम्यम्। जीवानां सुखदुःखतारतम्य-दर्शनात्तत्कारणीभूतस्येश्वरस्य विषमदृष्टित्वम्। निर्घृणस्य (=निर्दयस्य) भावो नैर्घृण्यम्। जगतः संहर्तृत्वम्। प्राणिकर्मानपेक्षत्वे हीश्वर एतद्दोषद्वयं प्रसज्यते। ईश्वरस्य कर्मसापेक्षत्वाङ्गीकारे तु न दोषः सुखाद्युपभोगे प्राणिकर्मणोऽसाधारणकारणत्वात्। ईश्वरस्तु पर्जन्यवद् द्रष्टव्यः। यथा तत्तद्बीजे सत्यपि पर्जन्यं विना नाङ्कुरोत्पत्तिस्तद्वत्। न चेश्वरस्य प्राणिकर्मसापेक्षत्वेनानीश्वरत्वं स्यादिति वाच्यम्। भृत्यादिसेवानुसारेण फलप्रदस्य राज्ञोऽराजत्वादर्शनात्। तथा चेश्वरः जीवकृतशुभाशुभकर्म (अदृष्टं) आदायैव सुखदुःखात्मकं जगत् सृजति। तेन सिद्धमदृष्टम्।

एवं श्रीमदुदयनाचार्योऽत्र प्रथमस्तबके अदृष्टाधिष्ठातृतया ईश्वरं

---

१. न्यायकन्दल्यामुद्धृतः धर्मप्रकरणे पृ० ६६२

साधयितुं प्रयतते। एतदर्थं पूर्वमदृष्टसिद्धिः कार्या तदनन्तरमेवाऽदृष्टाधिष्ठातृतयेश्वरसिद्धिः सम्भवति। तदुक्तं हरिदासभट्टाचार्येण 'धर्माऽधर्मात्मकाऽलौकिकपरलोकसाधने विप्रतिपन्नं प्रति तत्साधनम्, सिद्धे च तस्मिन् तदधिष्ठातृतया ईश्वरसिद्धिः, अचेतनस्य कारणस्य सचेतनाधिष्ठानेनैव कार्यजनकत्वात्'[१] इति। अत एवाचार्येण पञ्चतयी विप्रतिपत्तिषु मध्ये प्रथमा विप्रतिपत्तिरदृष्टसाधनायैव प्रदर्शिता। अत्र प्रथमविप्रतिपत्तेरियमाकृतिः— **'अलौकिकस्य परलोकसाधनस्याभावात्'** इति। तदर्थश्चाऽलौकिकम्=अप्रत्यक्षं परलोकसाधनमदृष्टमस्ति न वा। अत्र विधिकोटिः नैयायिकानां निषेधकोटिश्च चार्वाकप्रभृतीनाम्। तत्र प्रथमविप्रतिपत्त्यन्तर्गतावान्तरविप्रतिपत्तयः पञ्च सम्भवन्ति—

(१) कार्यकारणभावस्यैवास्वीकारेण कार्यस्य कारणसापेक्षत्वं न सम्भवति।

(२) कार्यस्य क्वचित् कारणसापेक्षत्वदर्शनेऽपि सर्वत्र सापेक्षत्वनियमाभावात्।

(३) सत्यपि कार्यस्य कारणसापेक्षत्वनियमे सर्वत्रैकरूपकारणजन्यत्वसम्भवात्।

(४) विलक्षणविविधकारणावश्यकत्वेऽपि परलोकतत्साधनस्वीकारस्यानावश्यकत्वात्।

(५) परलोकतत्साधनस्वीकारस्यावश्यकत्वेऽपि यागदानादेरेव तत्साधनत्वसम्भवेनात्मसमवेताऽदृष्टसद्भावे प्रमाणाभावाच्चेति।

---

१. न्यायकुसुमाञ्जलि-हरिदासी - पृ० २६

आसामवान्तरपञ्चविधविप्रतिपत्तीनां निरसनेनैव प्रथमविप्रतिपत्तेर्निरासः सम्भवति तदनन्तरमेव पूर्णतयाऽदृष्टसिद्धिः सम्भवति अतोऽत्रासामेवाऽवान्तरविप्रतिपत्तीनां सविस्तारं यथाक्रमं निरसयितुं क्रमशः पञ्चविधाः हेतवः प्रदर्शिता आचार्योदयनेन—

**सापेक्षत्वादनादित्वाद्वैचित्र्याद् विश्ववृत्तितः ।**
**प्रत्यात्मनियमाद् भुक्तेरस्ति हेतुरलौकिकः ।।**[1] **इति ।**

अत्राऽस्ति हेतुरलौकिक इति प्रतिज्ञावाक्यम्। तत्साधनाय (१) सापेक्षत्वात् (२) अनादित्वात् (३) वैचित्र्याद् (४) विश्ववृत्तितः (५) भुक्तेः =भोगस्य प्रत्यात्मनियमादिति। ते च हेतवः पूर्वोक्तपञ्चविधविप्रतिपत्तिखण्डनपुरस्सरमदृष्टं साधयन्ति। तत्र प्रथमद्वितीयहेतू सामान्यकार्यकारणभावव्यवस्थापनपुरस्सरमदृष्टं साधयतः। तृतीयो हेतुरेकब्रह्मप्रकृतिकारणतावादं निराकृत्याऽदृष्टं साधयति। चतुर्थो हेतुः परलोकस्वर्गादिं साधयति। परलोकसिद्धौ च तत्साधनतयाऽदृष्टस्य सिद्धिर्भवति। पञ्चमो हेतुरपि सतः कारणस्यैव कार्यजनकत्वनियमेन चिरध्वंस्तस्य यागादिकर्मणः स्वर्गादिफलोत्पत्तये सामर्थ्याभावं प्रदश्यर्यात्मनिष्ठमदृष्टं साधयति। अत एतद्वक्तुं शक्यते पञ्चविधा अपि हेतवोऽदृष्टसाधकाः। अतोऽदृष्टसाधनार्थं पञ्चविधाः हेतवो यथामति सविस्तारं विविच्यते।

## कार्यकारणभावव्यवस्थापनम्

अदृष्टं जीवगतसुखदुःखानां कारणम्। तथा सति कारणविधयै-

---

१. न्यायकुसुमाञ्जलि- कारिका १/४

वादृष्टस्य सिद्धिर्भवति। अतोऽत्र सामान्यकार्यकारणभावव्यवस्थापनपूर्वकमदृष्टस्य सिद्धिर्विधीयते।

'अलौकिकस्य परलोकसाधनस्याभावात्' इति मूलोक्तप्रथमविप्रतिपत्तिरन्तर्गताषु पञ्चविधाष्ववान्तरविप्रतिपत्तिषु मध्ये प्रथमा विप्रतिपत्तिरस्ति 'कार्यस्य कारणसापेक्षत्वमस्ति न वा' इति। अत्र विधिकोटिः नैयायिकप्रभृतीनाम्, निषेधकोटिस्तु चार्वाकाणाम्।

चार्वाकाः हि कार्यकारणभावमेव क्वचिदपि न स्वीकुर्वन्ति। तन्मतस्य निवारणाय कारणसामान्यसाधनमावश्यकम्। अतस्तत्साधनाय 'सापेक्षत्वाद्' इति प्रथमो हेतुरुपन्यस्तः। अपेक्षया सह वर्तत इति सापेक्षं तस्य भावः सापेक्षत्वम्, तस्मादिति तु तदर्थः। सर्वं हि घटादिकार्यं कपालादिकारणमपेक्षयैव जायते। कारणं विना कस्यापि कार्यस्यानुत्पादात्। कार्यस्य सापेक्षत्वात् = कारणापेक्षत्वादेव कादाचित्कत्वम्। तदुक्तं धर्मकीर्तिना—

**नित्यं सत्त्वमसत्त्वं वा हेतोरन्यानपेक्षणात्।**
**अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः।।[१] इति।**

तथा सति प्रयोगोऽयम् - 'घटादिकार्यं सहेतुकं कादाचित्कत्वात् भोजनजन्यतृप्तिवदिति। अनेनाऽनुमानेन कार्यमात्रे सहेतुकत्वं सिद्ध्यति। तदुक्तं श्रीमदाचार्येण—'न ह्ययं संसारोऽनेकविधदुःखमयोः

---

१. प्रमाणवार्तिकम् ३/३४

निरपेक्षो भवितुमर्हति, तदा हि स्यादेव न स्यादेव वा, न तु कदाचित् स्यात्'[१] इति। तस्मात् किञ्चित्कालासम्बन्धित्वे सति किञ्चित्कालसम्बन्धित्वरूपं कादाचित्कत्वं सकलेषु कार्येष्ववलोक्य कादाचित्कत्वकारणजन्यत्वयोर्व्याप्तिर्गृह्यते, अर्थात् यत्र यत्र कादाचित्कत्वं तत्र तत्र कारणजन्यत्वं यन्नैवं तन्नैवं यथा गगनम्। एवं सापेक्षत्वं तत्रानुमाय यदपेक्षते तत्कारणमिति सुनिश्चीयते। ननु सहेतुकत्वाभाववति प्रागभावे किञ्चित्कालासम्बन्धित्वे सति किञ्चित्कालसम्बन्धित्वरूपहेतोः विद्यमानतया भवति व्यभिचार इति चेन्न, उत्पत्तिमत्त्वस्य हेतुविशेषणत्वे न व्यभिचारः। अतः कार्यकारणभावोऽङ्गीकारोऽपरिहार्यः। तथा सति संसारे कश्चित् सुखी, कश्चिद्दुःखी, कश्चिद्धनी, कश्चिच्च निर्धनः, कश्चित् स्वस्थः कश्चिच्चास्वस्थः दृश्यतेऽत्र किं कारणम्? तत्र दृष्टं किमपि कारणं न दृश्यते अतोऽदृष्टकारणमभ्युपगम्यताम्। अदृष्टसिद्धौ च तदधिष्ठातृत्वेन परमेश्वरस्यापि सिद्धिरिति।

## स्वभाववादनिरासः

सापेक्षत्वहेतुना कार्यकारणभावो व्यवस्थापित नैयायिकैः। परन्तु अत्र चार्वाकः स्वभाववादं आक्षिप्य वदति यत् - कार्याणां स्वाभाविकं कादाचित्कत्वं न तु कारणप्रयोज्यम्।

अत्रेदं बोध्यम्—न्याय-वैशेषिक- सांख्य-योग- मीमांसा-वेदा-

---

१. *न्यायकुसुमाञ्जलि- स्वोपज्ञः पृ० ९ (विस्तरः)*

न्त-जैन-बौद्धादिसर्वेषु दर्शनेषु कार्यकारणभावसिद्धान्तः स्वीकृतोऽस्ति। यद्यपि तेषां कार्यकारणभावसिद्धान्तः भिन्नभिन्नप्रकारकः, 'सतः सत् जायते' इति सांख्याः। 'असतः सत् जायते' इति बौद्धाः। 'एकस्य सतो विवर्तः कार्यजातं न वस्तु सत्' इति वेदान्तिनः। 'सतः असत् जायते' इति तु नैयायिकाः। तथापि कारणविशेषेण हि कार्यविशेषोत्पत्तिरित्यत्र नास्ति कस्यापि मतभेदः। परन्तु एभ्यः सर्वेभ्यः सिद्धान्तेभ्योऽतिरिक्तोऽस्ति चार्वाकसिद्धान्तः यत्र कार्यकारणभावो नाभ्युपेयते, तेषामयमाशयः- 'अग्निना दाहोत्पद्यते' इत्यनेन नहि वह्निः दाहकारणं, दाहश्च कार्यमिति सिद्ध्यति, अपितु दाहो वह्निस्वभाव एव इति सिद्ध्यति। कार्यनियतपूर्ववृत्तित्वात् कारणमित्यपि न, यथा वर्णमालायां कवर्णानन्तरं नियमेन खवर्ण आगच्छति। अतस्तत्र ककारः खकारपूर्ववृत्तिरिति स्वीकुर्वन्नपि ककारः खकारस्य कारणमिति कोऽपि न व्यवहरति। अतः कार्यकारणभावो निर्युक्तिकः, स्वाभाविकमेव सर्वमिति सिद्धम्। तदेव स्वभाववादं 'कालः स्वभावो नियतिर्यदृच्छा भूतानि योनिः पुरुष इति चिन्त्या'[१] इत्यादिश्रुतिरपि प्रवदति। महर्षिगौतमेनापि 'अनिमित्ततो भावोत्पत्तिः कण्टकतैक्ष्ण्यादिदर्शनात्'[२] इति पूर्वपक्षसूत्रेण भावोत्पत्तिः कारणं विनैव भवति, अर्थात् घटाद्युत्पत्तिः न कारणनियम्या उत्पत्तित्वात्, कण्टकतैक्ष्ण्याद्युत्पत्तिवदिति प्रयोगेण स्वभाववादः प्रकटितः। महाकविरश्वघोषः कण्टके तैक्ष्ण्यस्य, प्राणिषु वैचित्र्यस्य स्वभाववादं वर्णितवान्।[३]

---

१. *श्वेताश्वतरोपनिषद् १/२*

२. *न्यायसूत्रम् ४/२२*

३. *बुद्धचरितम् ९/६२*

स्वभाववादविषये दिङ्नागस्य प्रसिद्धः श्लोकोऽस्ति—

**वह्निरुष्णो जलं शीतं समस्पर्शस्तथाऽनिलः ।**
**केनेदं चित्रितं तस्मात् स्वाभावात्तद्व्यवस्थितिः ।।[१] इति।**

अग्नेरुष्णत्वं स्वभावः, जलस्य शीतलता, वायोः स्पर्शवत्त्वम्, सर्वमेतत् केन चित्रितं, न केनापि अतः स्वाभाविकमेवैतत् सर्वमिति सम्पन्नम्। अतो नैयायिकाभिमतः कार्यकारणभावोऽप्रामाणिकः ।

यद्वा 'घटादिकार्यं सहेतुकं कादाचित्कत्वात् भोजनजन्यतृप्तिवत्' इत्यनुमानेन सहेतुकत्वं साधयन्ति नैयायिकाः, परन्तु चार्वाक; स्वभाववादं स्वीकृत्य 'घटादिकार्यम् अहेतुकं भावत्वात् गगनवत्' इहति सत्प्रतिपक्षमाशङ्कते। अतः कादाचित्कत्वं कार्येषु सहेतुकत्वसाधने नालमिति चार्वाकसिद्धान्तः ।

तन्मतनिराकरणाय विवरणप्रमेयसंग्रहे आचार्या एवं वदन्ति—अत्र चार्वाकः प्रष्टव्यो यत् स्वभाववादस्य क आशयः ? किं स्वयमेव स्वस्यकारणमिति, अथवा कारणं विनैवोत्पद्यत इति। अत्र प्रथमपक्षो न संम्भवति, यतः स्वस्य स्वयमेव कारणत्व आत्माश्रयः प्रसक्तो भवति। द्वितीयस्यापि पक्षस्य सम्भवना नास्ति यतो हि यदि निमित्तं विना कार्यं सन्जायते तदा घटस्य समुत्पत्तिर्घटस्य विनाशश्चोभयमप्येकदैव युगपद्

---

१. *सर्वदर्शनसंग्रहः (चार्वाकदर्शनम्) पृ० १३*

स्याताम्, उभयस्यापि निमित्तनिरपेक्षत्वात्।[१] परन्तु घटस्योत्पत्तिविनाशौ युगपद् न जायेतेऽतः स्वभाववादसिद्धान्तो नैव साधुतामावहति।

अस्मिन् स्वभाववादविषये श्रीमदुदयनाचार्येणापि स्पष्टमुच्यते ात् - स्वभाववादः=अ-कस्माद् भवतीत्यस्य कोर्थोऽभिप्रेतः—

(१) यदि किं शब्दो हेतुपरस्तदा नञः किं शब्देन सम्बन्धे हेत्वभावे कार्यं भवतीत्यर्थं कृत्वा **हेतुनिषेधः** क्रियते ?

(२) यदा तु नञः भवनक्रियया सम्बन्धस्तदा हेतौ सति कार्यं न भवतीत्यर्थं कृत्वा **उत्पत्तिनिषेधः** क्रियते ?

(अत्रेदमपि बोध्यम् - किं शब्दसमस्यमानेनापि नञा भवतीत्यस्यान्वयात्। असामर्थेऽप्यसूर्य्यम्पश्या राजदारा इतिवत् समासः। अथवा अशब्दस्याऽत्र समासं विनैव प्रयोगः 'अ-मा-नो-ना निषेधवचनाः' इति कोषात्)

(३) अथवा किं शब्दोऽन्यपरः, तथा चान्यस्मान्न भवति, किन्तु स्वस्माद् भवतीति **स्वजन्यत्वं स्वस्य** विधीयते ?

(४) आहोस्वित् किंशब्दः प्रामाणिकपरः, तथा च प्रामाणिकान्न भवति, किन्त्वप्रामाणिकादनुपाख्याद् भवतीति - **असज्जन्यत्वं** विधीयते ?

(५) किं वा अकस्मादित्यस्य स्वभावे रूढिमङ्गीकृत्य **स्वभावजन्यत्वं** वर्ण्यते ?

---

*१. सर्वं कार्यं स्वाभावादेवोत्पद्यते इति बार्हस्पत्यो मन्यते। स प्रतिवक्तव्य.......।*

*विवरणप्रमेयसंग्रहः पृ० ६९४*

इमे पञ्चपक्षा 'अकस्माद् भवति' इत्यस्य भवितुं शक्नोति। परन्तु नास्त्यत्र कस्यचिदपि पक्षस्य सम्भावना। यतोहि—

**हेतुभूतिनिषेधो न स्वानुपाख्यविधिर्न च।**
**स्वभाववर्णना नैवमवधेर्नियतत्वतः ।।[1] इति।**

पञ्चानामपि कल्पानां निराकरणाय एकमेव हेतुं दर्शयति - अवधेर्नियतत्वतः= कार्याणां नियतावधिकत्वस्यावश्यकत्वात्। अनियतावधिकत्वे च कादाचित्कत्वव्याकोप इति।

विकल्पितेषु पञ्चविधेषु पक्षेषु यथाक्रमं विविच्यते—

(१) प्रथमो हेतुर्निषेधपक्षो न सम्भवति, यतोहि-कारणनाशादेव कार्यनाश इति नियमः। घटं प्रति कारणस्याऽस्वीकारे कारणस्याभावेन कस्य नाशात् कार्यस्य घटादेः नाशः स्यात्। यदि च घटादिकार्याणां नाशार्थं कारणनाशस्यावश्यकता नास्तीत्युच्यते तदा घटोत्पत्तिघटविनाशावुभावपि निर्हेतुकौ इति प्राप्तम्। उभयोश्च निमित्तहीनत्वे घटादीनामुत्पत्तिनाशावेकदैव स्याताम्। तथा सति घटादेः कादाचित्कत्वं नैव सम्भवति।

एवं हेतुनिषेधपक्षे घटोत्पत्तौ कारणस्यानपेक्षत्वेन सर्वदा घटादिकार्यस्य भवनं स्यात्, अभवनकालाद् भवनकाले हेतुरेव विशेषः, तस्यानावश्यकत्वे विशेषाभावाद् गगनादिवत् सर्वदा घटादिकार्यस्य सत्त्वं स्यादेव। तदा सर्वदा विद्यमानस्य घटस्य कादाचित्कत्वं व्याहन्येत। अतः कारणस्य निषेधो न सम्भवति।

---

१. न्यायकुसुमाञ्जलि - कारिका १/५

(२) द्वितीयः चार्वाकेण उक्तो भवननिषेधपक्षोपि नार्हः, कादाचित्कत्वव्याघातात्। तथाहि - यद्युत्पत्तिर्निषिध्यते तदा कारणव्यापारात्प्रागिव कारणव्यापारोत्तरमपि कार्यं न स्यातदुत्पत्तिप्रतिषेधाद् अनुत्पन्नस्य भावस्य विनाशाऽदर्शनात्। तथा सति उत्पत्तिविनाशशून्यस्य शशविषाणादिवदलीकस्य घटस्य कादाचित्कत्वं न सम्भवति। एवञ्चोत्पन्नोयमिति सर्वजनानुभवसिद्धप्रतीत्यपलापापत्तेः। अतो भवनप्रतिषेधो न सम्भवति।

(३) स्वस्माद् भवतीति तृतीये पक्षे स्वोत्पत्तेः पूर्वं स्वयमविद्यमानस्य स्वोत्पादनसामर्थ्यं न सम्भवति। अयं भावः - स्वत्पत्तेः पूर्वं यदि स्वं भवेत्तदा एव स्वमेव स्वं प्रति कारणम् भवेत्। कार्यकारणभावो नाम पौर्वापर्यभावः । स च पूर्वकालवर्तिकारणं परकालवर्ति च कार्यमिति कार्यकारणयोः पूर्वापरकालवर्तित्वनियमः। न चैकस्य वस्तुनः पूर्वत्वमपरत्वञ्च भवितुमर्हति, पूर्वापरभावस्य भेदघटितत्वात् सिद्धस्य पूर्वत्वं साध्यस्य परत्वम्। न चैककाले द्वयोरेकत्र समावेशः, युगपत् सिद्धत्वसाध्यत्वयोर्विरोधात्। तथा सति स्वस्मादिति पक्षः स्वीक्रियते चेत् कादाचित्कत्वं व्याहतं भवति। अतः स्वस्माद् भवतीति पक्षो न युक्तियुक्तः।

(४) चतुर्थः कल्पः, अकस्मात् किञ्चित्पदार्थभिन्नाद् - अपदार्थादलीकादुपाख्यातुमशक्याच्छशविषाणाद् भवति - इत्यपि समीचीनं न प्रतिभाति। यतोहि -अनुपाख्यस्य तुच्छस्य कारणत्वे तस्य सर्वदा सर्वत्र सुलभतया इदानीमिव प्रागपि तस्मादेवालीकादुत्पत्तिरापद्यते इति पुनरपि कार्यस्य सदातनत्वं स्यात्। तथा सत्यपि कादाचित्कत्वं न सम्भवति। तस्मादलीकाद् भवतीति पक्षोऽपि नैव साधुतामावहति।

(५) स्वभाववादिना चार्वाकेण उच्यते यत् - अस्तु तावदेतेषु चतुर्ष्वपि

पक्षेषु दोषः। नैते पक्षा अस्माभिः विवक्षिताः। किन्तु निरपेक्षमेव वस्तु नियतकालस्वभावं भवतीति स्वभावतो भवनरूपं पञ्चमं पक्षं वयं स्वीकुर्मः। तद्यथाऽऽकाशस्य शब्दाश्रयत्वं स्वभावो न तु सर्वस्य तथैव घटादीनां कादाचित्कत्वं स्वभावो नाकाशादीनामपीति। अत एव दिङ्नागेनोक्तम् —

**नित्यसत्त्वा भवन्त्येके नित्यासत्त्वाश्च केचन।**
**विचित्रा केचिदित्यत्र तत्स्वभावो नियामकः ।।[१] इति।**

किञ्च तदेवकार्यं घटादिकं दण्डचक्रकपालाद्यनेककारण-जन्यमपि तेषु कपालदेशमात्रवर्त्ति भवति न दण्डादिदेशवर्त्ति। तत्र यथा देशवृत्तौ स्वभाव एव नियामकः। तथैव किञ्चित्कालसम्बन्धित्वरूप (कादाचित्कत्वरूप) कालवृत्तावपि स्वभाव एव नियामको भवितुं शक्नोति को लाभः कारणापेक्षया इति दृष्टान्तबलेन स्वभाववादस्य सिद्धौ सत्याम्, अत्र नैयायिका वस्तुनो नियतदेशवर्त्तित्वमपि न निर्हेतुकं भवितुमर्हति। अनुभवबलादेव समवायिकारणस्य कपालस्य स्वस्मिन् घटोत्पादनसामर्थ्यं, निमित्तकारणदण्डचक्रादेश्च कपाले घटोत्पादनसामर्थ्यमिति कल्प्यते। अतः कारणबलादेव वस्तुनो नियतदेशवर्तित्वमिति दृष्टान्तासिद्धिः। प्रकृते च यदि नियतावधित्वं न स्वीक्रियते तदा कादाचित्कत्वं न स्यादेव। किं भवता कार्यस्यावधिरेव न स्वीक्रियते, अथवा अवधिस्वीकारेऽप्यस्य कार्यस्यायमवधिरित्यवधिनियमो न स्वीक्रियते। यदि कार्यस्य निरवधित्वं स्वीक्रियते तदा निर्गतोऽवधिः कारणं येषां ते गगनादयः सदातना एव दृश्यन्ते न कादाचित्काः, तद्वद्घटादेर्निरवधित्वे कादाचित्कत्वासम्भवेन

---

१. *न्यायकुसुमाञ्जलि-आमोदटीकातः (कारिका १/५)*

कार्यस्य सर्वदा भवनं स्यादेव। अवधिनियमस्वीकाराभावेऽपि अनियतावधिकतया सर्वमपि पूर्वपूर्वमवधिरिति सर्वदा सद्भावप्रसङ्ग एव। न च सदातनत्वेऽपि न कादाचित्कत्वव्याघातः किञ्चित्कालसम्बन्धित्वस्यैव तदर्थत्वादिति वाच्यम्। तावन्मात्रस्य कादाचित्कत्वे गगनादावपि कादाचित्कत्वव्यवहारापत्तेः। अतः प्रागसत्वे सति किञ्चित्कालसम्बन्धित्वमेव कादाचित्कत्वम्। नियतावधिकत्वाऽस्वीकारे च प्रागसत्वं दुरुपपादम् अतः नियतपूर्ववर्ती कश्चन स्वीकर्तव्यः स एव हेतुपदवाच्य इति सिद्धं कार्यमात्रस्य सहेतुकत्वम्।

अत्र चार्वाको वदति यत् - कादाचित्कत्वसंरक्षणाय नियतावधिकत्वस्यावश्यकत्वेऽपि तत्तत्कार्यप्रागभाव एव हेतुरस्तु इति प्रागभावेनैव सर्वसामञ्जस्य अलौकिकं परलोकसाधनमदृष्टं न सिद्ध्यति, न वा क्षित्यादिजनकत्वेन भगवतः सिद्धिरिति। अत्र नैयायिकाः-प्रागभाववद् नियतान्वयव्यतिरेकशालिनां कपालादीनां कार्याव्यवहितप्राक्काले सत्त्वात्, प्रागभावादतिरिक्तकपालादीनां कारणत्वं सिद्ध्यति इति वदन्ति। अन्यथा-प्रागभावोऽपि दुर्निरूपः स्यात्, समवायिकारणादिसामग्रीक्षण एव तज्ज्ञान-सम्भवात् प्रागभावस्यापि कारणत्वं न स्यात्। किञ्च यदि प्रागभाव-मात्रमवधिः स्यात्, तदा प्रागभावस्याऽनादित्वात् कारणव्यापारात्प्रागपि प्रागभावरूपकारणस्य विद्यमानत्वेन घटादेः सत्त्वापत्तिः। तथा सति कार्यस्यानुभूयमानं कादाचित्कत्वं भज्येत। अतः प्रागभाववद् कपालादेरपि कारणत्वं सिद्ध्यति। ननु सन्तु अन्येऽपि अवधयः दण्डकपालादयः किन्तु ते कारणत्वेन नापेक्ष्यन्ते प्रागभावमात्रस्यैव कारणत्वमिति चेदत्र ब्रूमः कुतो नापेक्ष्यन्ते ? किन्ते प्रागभाववन्नियता न? अथवा नियताऽपि अनुप-कारकाः ? तत्र यदि अनियतस्यावधित्वरूपप्रथमपक्षः स्वीक्रियते तदा धूमं प्रति दहनस्येव गर्दभस्याप्यवधित्वं स्यात् नियामकाऽभावात्। न चेष्टापत्तिः, लोके धूमार्थिनां नियमेन यथा वह्न्यानयने प्रवृत्तिः दृष्टा तथा गर्दभे नहि दृष्टा। द्वितीये तु किमुपकारान्तरेण, नियमस्यैवऽपेक्षार्थत्वात्। तथाहि यज्जातीयं कार्यं प्रति यज्जातीयस्यान्वयव्यतिरेकौ नियतौ, नियतजातीय

एव कारणंपदार्थः स एवाऽपेक्षणीयः कार्योत्पादनाय इति लोके प्रसिद्धम्। अतो धूमार्थं नियतपूर्वापेक्षणीयः वह्निरस्ति अतः स एव हेतुरिति। इत्थं प्रकारेण स्वभाववादं निराकृत्य कार्यकारणभावः सिद्धः।

अत्रेदमपि बोध्यम् - चार्वाकीयस्वभाववादस्य नायमाशयो यत् कारणमेव कस्यचित् कार्यस्य नास्ति, न वोत्पत्तिनिषेधः क्रियते। पृथिव्यादिचतुष्टयभूतेभ्यः चैतन्यस्योत्पत्तिः स्वीकृतत्वात्। किन्तु सांख्यानां प्रकृतिपरिणामवादेन साम्यमाधत्त एष स्वभाववादसिद्धान्तः। येषां दृष्टान्तानां चार्वाकैः प्रदर्शनं क्रियते-किण्वादिभ्यो मदशक्तिः, ताम्बूलपूगचूर्णानां योगाद्रागः। तत्र स्फुटमेतदेव प्रतीयते यदुपादानकारणस्य तु स्वीकारः चार्वाकैः क्रियते एव। उपादानकारणादन्यस्य निमित्तकारणस्यैव स्वीकारो नैव क्रियते -अत्र दृष्टान्तेषु किण्वादेः मदशक्त्युपादानकारणत्वं स्फुटमवगम्यते। सांख्यदर्शने प्रकृतिरेवोपादानकारणं यथा दुग्धमेव दधिरूपेण परिणमते तथैव प्रकृतिरेव महद्रूपेण परिणमते इत्यादि। तथैव चार्वाकदर्शने पृथिव्यादिचत्वारि तत्त्वान्येव परिणमन्ते चेतनावस्थां च प्राप्नुवन्ति। ताम्बूलपूगचूर्णानां योगाद्रागोत्पत्तिर्यथा स्वाभाविकी तथैव पृथिव्यप्तेजोवायुभ्यः चैतन्योत्पत्तिः सर्गोत्पत्तिश्च स्वाभाविकी। एषश्चार्वाक-दर्शनीय परिणामवाद एव स्वभाववादेन व्यपदिश्यते। सांख्यदर्शनीय-परिणामवादादत्र चार्वाकीयपरिणामवादे (स्वभाववादे) अन्तरमेतावदेव यत् सांख्यदर्शने प्रकृतिः प्रयोजनमुद्दिश्य प्रवर्तते। अपरञ्चान्तरमेतदस्ति यत् सांख्यदर्शने जडायाः प्रकृतेः संजातः सर्गोऽपि जड एव भवति, चार्वाकदर्शनानुसारन्तु पृथिव्यप्तेजोवायुसमष्ट्यात्मिकायाः प्रकृतेः सञ्जातः सर्गः चेतनोऽपि भवति। वस्तुतः चार्वाकदर्शने नास्ति काचिद्विभाजनरेखा यदिदं चेतनं यदिदमचेतनम्। सर्वमपि भूतजातमवस्थावशात् 'जडः' इत्युच्यतेऽवस्था-वशाच्च 'चेतनः' इति। **इदं तु सारम्** - चार्वाकैरपि कारणस्य निषेधः भवनस्य (=उत्पत्तेः) निषेधः, स्वस्य विधिः (स्वहेतुकत्वं) अलीकहेतुकत्वं वा न स्वीक्रियते। तथापि प्रमाणपटुना आचार्योदयनेन अ-कस्माद् भवति इति स्वभाववादस्य सम्भावितान् पक्षान्नपि समुपस्थाप्य निराकरणेनाऽतिसूक्ष्मतमा दृष्टिर्दृश्यते आचार्यस्य।

इत्थं प्रकारेण अकस्माद् भवतीति स्वभाववादखण्डनपुरस्सरं कार्यकारणभावसिद्धौ, अस्मिन् संसारे कश्चित् सुन्दरः प्रतिभावान् भवति। अन्यः कुरूपो बुद्धिहीनो वा दृश्यते। कश्चित् स्वामी कश्चित्सेवकः। ईदृशं वैषम्यं कारणं विना न भवेदतस्तत्र किञ्चित्कारणं वाच्यम्। न च दृष्टं कारणमत्रोपलभ्यत इत्यदृष्टमेव तत्र कारणं कल्पनीयम्।

## कार्यकारणभाव आगतदोषनिराकरणम्

'अलौकिकस्य परलोकसाधनस्याभावात्' इति प्रथमविप्रतिपत्यन्तर्गताषु पञ्चस्ववान्तरविप्रतिपत्तिषु मध्ये द्वितीया विप्रतिपत्तिरस्ति 'कार्यस्य क्वचित् कारणसापेक्षत्वदर्शनेऽपि सर्वत्र सापेक्षत्वनियमाभावात्' इति। तदर्थश्च - कादाचित्कत्वेन हेतुना कस्यचित् कार्यस्य सहेतुकत्वसिद्धावपि सर्वत्र कार्ये सहेतुकत्वं साधयितुं न शक्यते अनवस्थादोषदूषितत्वात्। तथाहि - घटादिहेतोः कपालसंयोगादेः सदातनत्वे घटादेरपि सदातनत्वापत्तिः। अतो घटादिहेतौ कपालादिसंयोगादौ कादाचित्कत्वमेव स्वीकर्तव्यम्। तथा सति कपालसंयोगादिः सहेतुको वाच्यः। एवं कपालसंयोगहेतुचङ्क्रमणस्यापि कादाचित्कत्वात् सहेतुको वाच्यः। तच्चङ्क्रमणमपि दण्डसंयोगाधीनम्, स च दण्डाधीनः, सोऽपि वृक्षाधीनः, वृक्षश्च बीजाधीनः, इति रीत्या एकैककार्यकारणधारा कादाचित्की सहेतुकी वाच्या तथा सति भवति अनवस्था। 'अतीतास्पृष्टमन्यान्यग्रहणं त्वनवस्थितिः'[१] अतः सर्वत्र कार्यकारणसिद्धान्तो न समीचीन इति चेन्न। 'अनादित्वात्' इति। कार्यकारणभावस्यानादित्वाद् अनवस्थायाः सत्वेऽपि दोषाभाव एव। अत्र यद्यपि तान्त्रिकैः अनवस्थादोषदूषणभिया अन्यान्य-

---

१. *मानमेयोदयः, पृ० ४५*

पन्था आद्रितो वर्तते। एतेन ज्ञायते यत् - अनवस्थायामपि दूषणत्वं प्राप्नोति। तथाहि - यथा घटसमुदायस्य 'अयं घटः, अयं घटः' इत्याकारकानुगतप्रतीतिविशेष्यत्वेन घटत्वजातिमत्त्वं तथा घटत्वपटत्वादिजातिसमुदायस्यापि 'इदं सामान्यमिदं सामान्य'मित्यनुगतप्रतीतिविशेषत्वेन जातेरपि जातिमत्त्वप्रसङ्गः, एवं सिद्धजातौ तदाश्रयजातिषु च 'इदं सामान्यमिदं सामान्यमित्यनुगतप्रतीतिविशेष्यत्वेन सिद्धजातिघटितक्लृप्तजातिसमुदायेऽपि जात्यन्तरस्वीकारापत्तिः। एवमनन्तजातिस्वीकारेऽनुमानमपि प्रमाणं दर्शितं भवति-घटत्वादिजातिसमुदायः जातिमान् अनुगतप्रतीतिविशेष्यत्वाद् इत्यादि-अनुमानादपि जातौ जातिसिद्धौ-अपि अप्रामाणिककल्पनासमाप्त्यभावरूपाऽनवस्थादोषदूषणात् जातौ जातिः न स्वीक्रियते।

एवञ्च-अनुमितिकारणीभूतं यत् व्याप्तिज्ञानं तस्य प्रतिबन्धकं व्यभिचारज्ञानं तस्य निवर्तकः धूमो यदि वह्निव्यभिचारी स्यात् तदा वह्निजन्यो न स्यात् - इत्याकारकस्तर्कः। अत्र च तर्के आपाद्याभावेन आपादकाभावस्य सिद्धिर्भवति, अर्थाद् वह्निजन्यत्वाभावाभावेन वह्निजन्यत्वेन वह्निव्यभिचाराभावस्य सिद्धिर्भवति। परन्तु आपाद्याभावेन आपादकाभावसाधने आपाद्यव्याप्यापादकवत्तानिश्चयः, अथ च आपाद्य-व्यतिरेकनिश्चयः कारणम्, तादृश आपाद्यव्याप्य अपादकवत्तानिश्चये च आपाद्यव्यभिचारसंशयः प्रतिबन्धकः। तादृशसंशयवारणाय यदि तर्कान्तरं क्रियते तत्रापि तर्के अपाद्यव्याप्य आपादकवत्तानिश्चयः कारणम्, तादृशनिश्चये पुनः आपाद्यव्यतिरेकसंशयः प्रतिबन्धकः, यदि तद्वारणायापि तर्कान्तरं क्रियते तदा अनन्ताप्रामाणिकतर्कः कल्पनेन भवति अनवस्था। तद्दोषभिया एव 'यत्र च व्याघातेन शङ्कैव नावतरति तत्र तर्कं विनैव व्याप्तिग्रहः'[१] इति

---

१. तर्कप्रकरणम् पृ० २

पंक्तिद्वारा वारणं कृतं चिन्तामणिकारेण। अथवा 'व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः'[१] इति कारिकाव्याख्यानावसरे अनवस्थादोषवारित-माचार्योदयेन। आकरे यत्र तत्र स्थलेषु अनवस्थादोषस्य वारणं दृष्ट्वा एतद् ज्ञातुं शक्यते अनवस्थादोषमपि नेच्छन्ति जनाः। तथापि - बीजादङ्कुरोऽङ्कुराद्वाबीजमित्यत्रैकसिद्धान्ताभावादेतादृशप्रवाहस्यानादित्वं स्वीकृत्यानवस्थादोष उररीक्रियते।

सारांशत एतदायाति - यत्रानवस्थादोषस्य वारणं शक्यं जातितर्कादौ तत्राऽनवस्थायाः दूषणत्वम्, यत्र चाऽनादित्वादनवस्थादोषस्य वारणमशक्यं बीजाङ्कुरादौ तत्राऽनवस्थाया भूषणत्वमेव। तथैवात्रापि अनादिकालात् कारणेऽपि कादाचित्कत्वं सहेतुकत्वञ्च परम्पराक्रमेणाया-तीति स्वीकृत्यानवस्थायाः सत्त्वेऽपि बीजाङ्कुरवत् प्रामाणिकीयमनवस्था न दोषायेति। अतएव मानमेयोदये 'मूलक्षयकरीं प्राहुरनवस्थां हि दूषणीम् इति। मूलक्षयाभावेनास्या अनवस्थाया अदूषणत्वात्।'[२] अर्थात् उत्तरोत्तरवृक्षं प्रति पूर्वपूर्वबीजस्य कारणत्वेन मूलक्षयाभावादनवस्थायाः सत्त्वेऽपि दूषणाभाव एव। अत आचार्या : 'प्रवाहो नादिमान्नेष' इति।

## शक्तिवादनिरासः

कार्यकारणभावनिरूपणावसरे मीमांसकैः शक्तिः कारणत्वेन

---

*१. न्यायकुसुमाञ्जलि - कारिका ३/७*

*२. मानमेयोदयः पृ० ४५*

रूपेणाङ्गीक्रियते। अतोऽत्र शक्तिपदार्थः विविच्यते। शक्तिस्त्रिधा भवति सहजशक्तिः, आधेयशक्तिः, पदशक्तिश्च। तत्र सहजशक्तिः वह्न्यादिनिष्ठा दाहकार्यानुकूला, आधेयशक्तिः प्रोक्षणादिजन्या व्रीह्यादिनिष्ठा, कांस्यपात्रादौ च भस्मसंयोगादिजन्या शुद्धिपर्याया। पदशक्तिश्च तत्तत्पदनिष्ठा तत्तदर्थनिरूपिता। तेषु त्रिषु शक्तिषु मध्ये पदशक्तिः वयमपि स्वीकुर्मः। आधेयशक्तिरदृष्टस्याधिकरणनिरूपणावसरे निरस्यते। अत्र दाहकारणीभूता सहजशक्तिः विविच्यते। सा सहजशक्तिः अर्थापत्तिगम्या द्रव्यगता गुणस्वरूपा इति भाट्टाः। अनुमानगम्या पदार्थान्तरा इति प्राभाकराः।[१]

तत्र अन्वयव्यतिरेकव्यभिचारवारणाय शक्तिस्वीकार आवश्यक इति मीमांसकाः। तेषामयमाशयः - 'वह्निर्दहति' 'विषं हन्ति' इत्यस्माकमनुभवः परन्तु चन्द्रकान्तमणिसमवधाने वह्निर्दाहयितुं नैव समर्थः। मन्त्रादिप्रभावाच्च विषमपि न मारणाय अलमिति। तत्र कार्यकारणभावहेतुरन्वयव्यतिरेकौ वह्निदाहयोर्विषमारणयोश्च न दृश्यते। तथाहि वह्निर्यदि वह्नित्वेन रूपेण दाहाकारणं तर्हि मणिसमवधाने सत्यपि वह्निर्वह्नित्वेन रूपेण तिष्ठति एव वह्निस्वरूपं तावन्नैव भ्रष्टमिति कुतः कार्यं न दृश्यते ? 'तत्सत्त्वे तत्सत्त्वं' 'तदभावे तदभावः' इत्यन्वयव्यतिरेकौ हि कार्यकारणभाव निर्धारणे हेतू। अत्र तु मण्यादिसमवहिनेन वह्निना दाहो न जन्यते, तच्छून्येन तु जन्यते अतो 'वह्निसत्त्वे दाहसत्त्वम्' इति नास्त्येव स्थितिः, कदाचित् क्वचित् वह्निसत्त्वेऽपि दाहाभावात् यथा वह्निः+चन्द्रकान्तमणिः=दाहाभावः, अतो भवत्यन्वयव्यभिचारः।

---

१. मानमेयोदयः पृ० २४६-२४८

एवं व्यतिरेकव्यभिचारोऽपि वर्तते शक्तिमस्वीकृत्य कार्यकारणभावस्वीकारे। तथाहि वह्नेस्तृणादिजन्यत्वात् तृणारणिमणिनामेव तत्र कारणता वाच्या, सा च व्यतिरेकव्यभिचारान्न सम्भवति। कारणत्वग्रहो हि अन्वयव्यतिरेकाभ्यामुभाभ्यामेव सम्भवति नान्वयमात्रात् न वा व्यतिरेकमात्रात् केवलात्। अत्र च तृणादीनां वह्निकारणानामन्वयमात्रं दृश्यते न व्यतिरेकः। 'तृणसत्त्वे वह्निसत्ता' इत्यन्वयस्तूपपद्यते किन्तु 'तृणाभावे वह्न्याभावः' इति व्यतिरेकोऽरण्यादिहेत्वन्तरजन्यस्य वह्नेर्विद्यमानत्वान्न घटते। एवमरणिस्थले मणिस्थले चान्वयोपपद्यमानेऽपि व्यतिरेको न प्रसरति। अतो भवति व्यतिरेकव्यभिचारः। तथा चान्वयव्यतिरेकव्यभिचारात् कार्यकारणभावसिद्धान्तो समीचीनो न स्यात्, अतोन्वयव्यभिचारदोषवारणार्थं शक्तिस्वीकार आवश्यक इति। तत्स्वीकारे च नान्वयव्यतिरेकव्यभिचारौ। तथाहि वह्निर्न्न वह्नित्वेन रूपेण दाहकारणम्, अपितु वह्निनिष्ठदाहानुकूलशक्तिमत्त्वेन रूपेणैव वह्निः दाहं जनयति। तथा च यदा वह्निः शक्तिमान् तदा दहति, यदा तु मण्यादिना वह्नौ दाहानुकूला शक्तिर्नाश्यते तदा दाहो न जन्यते उत्तेजकेन मण्याद्यपसारणेन च जन्यते तदा दाहो भवत्येवातः शक्तिः कल्प्यते। तथा सति नान्वयव्यभिचारः। एवं तृणारणिमणिषु न तृणत्वेनारणित्वेन मणित्वेन वा कारणतापितु सर्वेष्वपि कारणेषु वह्न्यनुकूलैकशक्तिमत्त्वेन कारणता इति स्वीकृते सति न व्यतिरेकव्यभिचारोऽपि। एवं शक्तिस्वीकारे 'शक्तिमत्वे कार्यं शक्त्यभावे कार्याभावः' इत्यन्वयव्यतिरेकसहचारोऽपि सुप्रतिष्ठतो भवति। किञ्च शक्त्यनभ्युपगमे द्रव्यविशेषो न स्यात् तदा पादपछेत्तुं परशुर्यथा उद्यम्यते तथा पादुकाप्युद्यम्येत, घटार्थी तन्तुसमुदायं स्वीकुर्यात् तथा पटार्थी मृत्पिण्डम्, परन्तु न तथा दृश्यते। तत्तत्कार्यजनने तत्तत्कारणमेवोपादीयतेऽस्माभिः। एवं रीत्या कारणोपादाननियमादपि तत्तत्कार्यानुकूला कारणनिष्ठा शक्तिरेव

साक्षात्कारणत्वेन रूपेण सिद्ध्यतीति ।

नन्वेवं शक्तिसिद्धावपि तस्या (नैयायिकाभिमतपदार्थ) अतिरिक्तत्वासिद्धिरिति चेन्न ? उक्तपदार्थेष्वनन्तर्भूतत्वात्। तथाहि - न तावद् द्रव्यात्मिका शक्तिः, गुणादिवृत्तित्वात्। अत एव न गुणात्मिका कर्मात्मिका वा। न च सामान्याद्यन्यतमरूपा, उत्पत्तिमत्त्वे सति विनाशित्वादिति' ।[१] एवं रीत्या अतिरिक्तां शक्तिं प्रसाधयन्ति मीमांसकाः ।

अत्र नैयायिका अन्वयव्यतिरेकव्यभिचारवारणाय स्वीकृतं शक्तिवादं न स्वीकुर्वन्ति, तेषां मते शक्तिस्वीकारपक्षे—

(१) धूमादिना वह्न्यनुमानं न स्यात्

(२) प्रतिनियमो न स्यात्

(३) गौरवञ्च स्यात् इति त्रयो दोषाः प्रसज्यन्ते ।

(१) तत्र धूमादिना वह्न्यनुमानं न स्यात् इति प्रथमदोषस्यायमभिप्रायः अनुमाने व्याप्तिग्रह आवश्यकः स च धूमसामान्यवह्निसामान्ययोः कार्यकारणभावे-नैव सम्भवति। किन्तु शक्तिस्वीकारे न वह्निसामान्यस्य धूमसामान्यं प्रति हेतुता अतो वह्नित्वं न कारणतावच्छेदकं किन्तु धूमानुकूलैकशक्तिमत्त्वमेव कारणतावच्छेदकमतो धूमादिना धूमानुकूलैक-शक्तिमत्त्वावच्छिन्नस्यानुमानं, न वह्नित्वावच्छिन्नस्य। अतो धूमादिना वह्न्यनुमानं न स्यात्' इति शक्तिस्वीकारपक्षे प्रथमो दोषः ।

---

१. *न्यायसिद्धान्तमुक्तावली - दिनकरी पृ० ३७*

(२) प्रतिनियमो न स्यात् इति द्वितीयो दोषः, प्रतिनियमो=व्यवस्था तृणारणिमणिषु वह्निकारणेषु व्यवस्था दृश्यते तृणारणिमणिसम्बद्धं फूत्कार-मन्थन-प्रतिफलितरविकिरणसंयोगरूपमपरमपि कारणत्रयमत्रोपलभ्यते। तत्र तृणफूत्कारसमवधाने, अरणिमन्थनयोः समवधाने, मणिप्रतिफलित-रविकिरणयोश्च समवधान एव वह्निरूपं कार्यं जन्यते इति प्रतिनियमो दृश्यते। स च शक्तिस्वीकारपक्षे षट्स्वपि सर्वेषु कारणेषु वह्न्यनुकूलैकशक्तिमत्त्वस्य कारणतावच्छेदकत्वाद् वह्नित्वस्य च तत्राहेतुत्वाभावान्न घटते। ततश्च कयोरपि द्वयोः कारणयोः समवधाने वह्न्युत्पत्तिसम्भवात् पूर्वोक्तव्यवस्थाभङ्गः सञ्जायते। अतः शक्तिः कारणता-वच्छेदिका न स्वीकार्या इति प्रतिनियमो न स्यात्' इत्यस्य द्वितीयदोषस्या-भिप्रायः।

(३) गौरवञ्च स्याद्' इति तृतीयो दोषः शक्तिस्वीकारपक्षे—'नित्ये नित्यैव सा शक्तिरनित्ये भावहेतुजा' इति मीमांसकसिद्धान्तादनित्याऽपि शक्तिः स्वीक्रियते। ततश्च तदुत्पत्तेः पूर्वं तस्याः प्रागभावः ध्वंसानन्तरञ्च प्रध्वंसाभावः, अनन्तशक्तिकल्पनापत्तिश्चेति पदार्थजातं कल्प्यं भवति ततश्च गौरवं भवति। अतः शक्तिपक्षः सर्वथा हेय इति नैयायिकाभिप्रायः।

अत्र मीमांसकाः—अन्वयव्यतिरेकव्यभिचारवारणाय स्वीकृतं शक्तिवादं न स्वीकुर्वन्ति चेत्। शक्त्यस्वीकारे प्रतिबन्धकसमवधाने कथं कार्यं न दृश्यते इत्यत्र नैयायिकशिरोमणिजयन्तभट्टाः युक्तिं ददति—यदपि विषदहनसन्निधाने सत्यपि मन्त्रप्रयोगात्तत्कार्यादर्शनं तदपि न शक्तिप्रतिबन्धननिबन्धमपि तु सामग्र्यन्तरानुप्रवेशहेतुकम्। ननु मन्त्रेण प्रविशता तत्र किं कृतं न किञ्चित्कृतम्, सामग्र्यन्तरं तु सम्पादितं काचिद्धि

सामग्री कस्यचित्कार्यस्य हेतुः'[१] इति।

अत्र मीमांसकः पुनः शंकते—यद्यपि मन्त्रः कृतस्तथापि विषदहनयोः स्वरूपं तु तदवस्थमेव, न तत्र कश्चन विपरिणामो दृश्यते। अत्र जयन्तः—'यद्येवमभक्षितमपि विषं कथं न हन्यात्? तत्रास्य संयोगद्यपेक्षणीयमस्तीति चेद् - मन्त्राभावोऽप्यपेक्ष्यताम्'[२]। अयमभिप्रायः—आस्यसंयोगादिः कारणसामग्रीमध्य आवश्यकस्तर्हि मन्त्राभावोऽपि सहकारिकारणसमुदायघटक एव। तदभावे कार्यं नैवोत्पद्यत इति सर्वमुपपन्नं शक्तिं विनैव।

नव्यनैयायिकैरपि शक्तेः खण्डनं प्रतिबन्धकाभावं कार्यसामान्यं प्रति कारणत्वेन रूपेणस्वीकृत्यैव क्रियते। तथाहि—वह्निः वह्नित्वेन रूपेणैव दाहकारणम्। यदा तु मण्यादिसन्निधानं भवति, तदा प्रतिबन्धकस्य तत्र सत्त्वात्, प्रतिबन्धकाभावस्य च कार्यत्वावच्छिन्नं प्रति कारणत्वान्न कार्योत्पत्तिरिति। ननु - प्रतिबन्धकाभावो यदि कार्यत्वावच्छिन्नं प्रति हेतुः स्यात्, तर्हि उत्तेजकसन्निधानात् प्रतिबन्धकसत्वे कथं कार्योत्पत्तिरिति चेन्न, उत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्य हेतुत्वं स्वीक्रियते। अत्रोत्तेजकत्वम्-प्रतिबन्धकतावच्छेदकीभूताभावप्रतियोगित्वम्। सूर्यकान्तमणिमन्त्रौषध्याद्यभावविशिष्टचन्द्रकान्तमणेः प्रतिबन्धकत्वेन, प्रतिबन्धकतावच्छेदकीभूतो योऽभावः सूर्यकान्तमणिमन्त्रौषध्याद्यभावः, तत्प्रतियोगित्वं - सूर्यकान्त-

---

१. न्यायमञ्जरी पृ० ३९

२. तत्रैव।

मणिमन्त्रौषधिनिष्ठमतः सूर्यकान्तमणिमन्त्रौषध्यादेरुत्तेजकत्वम्। प्रतिबन्धकत्वञ्च कारणीभूताभावप्रतियोगित्वम्। दाहस्य कारणीभूतोऽभावश्चन्द्रकान्तमण्याद्यभावस्तत्प्रतियोत्वस्य चन्द्रकान्तमण्यादौ सत्त्वात् चन्द्रकान्तमण्यादेर्दाहं प्रति प्रतिबन्धकत्वम्। अत्रेदं बोध्यम् - विशिष्टाभावस्त्रिविधः विशेषणाभावप्रयुक्तविशिष्टाभावः, विशेष्याभावप्रयुक्तविशिष्टाभावः, उभयाभावप्रयुक्तविशिष्टाभावश्च।

उत्तेजक+प्रतिबन्धक+वह्नीनां समवधानस्थले उत्तेजकाभावरूपविशेषणाऽसत्त्वेन विशेषणाभावप्रयुक्तो विशिष्टाभावो वर्ततेऽतो भवति दाहः। यत्र च वह्निमात्रं वर्तते तत्र उत्तेजकाभावरूपविशेषणस्य सत्त्वेऽपि मणिरूपविशेष्यस्याऽसत्त्वेन विशेष्याभावप्रयुक्तो विशिष्टाभावो वर्ततेऽतो भवति दाहः। एवं यत्र उत्तेजकवह्निश्च तत्र उत्तेजकाभावरूपविशेषणस्य मणिरूपविशेष्यस्य चासत्त्वादुभयाभावप्रयुक्तो विशिष्टाभावो वर्ततेऽतो अत्रापि भवति दाहः। परन्तु यत्र प्रतिबन्धकवह्नी, तत्रोत्तेजकाभावविशिष्टमणेरेव सत्त्वान्न दाह इति। एवं वस्त्रादिप्रदेशे वह्निरस्ति प्रतिबन्धकमन्त्रश्चौषधिश्च विद्येतेतत्र दाहो न भवति किन्तु मन्त्रौषध्यन्तरे प्रयुक्ते यदि दाह उत्पद्यते तदा मन्त्रौषध्यन्तरस्यैवोत्तेजकत्वं बोध्यम्। इत्थं प्रकारेणैव व्यभिचारादिवारणसम्भवे कृतं नानाशक्तिः कल्पनेव।

अत्र मीमांसका वदन्ति यत् - कारणत्वं भावत्वव्याप्यमिति सिद्धान्तात् भाव एव कारणं भवितुमर्हति, अभावस्य च विधिरूपरहितत्वेन तुच्छत्वेन कारणत्वं न सम्भवति। तथा सति प्रतिबन्धकाभावस्याऽभावरूपत्वेन कारणत्वं न प्राप्नोतीति।

अत एव 'विहितनित्यनैमित्तिककर्माण्यकरणमभावस्वरूपः,

अभावस्तु भावस्य न हेतु:,अतो नास्मात् प्रत्यवायोत्पत्तिरिति चेन्न, विहिताकरणेऽन्यकरणात् प्रत्यवाय सम्भवात् । अभावस्य हि स्वातन्त्र्येण हेतुत्वं नेष्यते न तु भावोपसर्जनतया। न च शरीरी सन्ध्यादिकाले कायेन वाचा मनसा वा किञ्चिन्न करोति, शरीरधारणादीनामपि करणात्। यथोक्तम्-

**कर्मणां प्रागभावो यो विहिताकरणादिषु ।**
**न चानर्थकरत्वेन वस्तुत्वान्नापनीयते ।।**
**स्वकाले यदकुर्वंस्तत् करोत्यन्यदचेतनः ।**
**प्रत्यवायोऽस्य तेनैव नाभावेन स जन्यते ।। इति ।**

अभावेन केवलेन नासौ जन्यत इत्यर्थ:'।[१] इति श्रीधरभट्टः न्यायकन्दल्यां प्रतिपादयति—

परन्तु श्रीमदुदयनाचार्या अभावस्यापि कारणत्वेन स्वीकुर्वन् युक्तिं प्रदर्शयन्ति।

**भावो यथा तथाऽभाव कारणं कार्यवन्मतः।।[२] इति ।**

अर्थात् येन प्रकारेण भावपदार्थ: कारणं भवति, तेनैव प्रकारेणाऽभावोऽपि कारणं भवितुमर्हति। तथा चाऽयं प्रयोग:—'अभाव कारणं नियतान्वयव्यतिरेकशालित्वात्, भाववत्' अनेनाऽनुमानेनाऽभावस्यापि कारणत्वं सिद्ध्यति। अथवा यथाऽभावो ध्वंसः कार्यो भवति तथाऽभाव:

---

*१. न्यायकन्दली पृ० ६८४*

*२. न्यायकुसुमाञ्जलि - कारिका १/१०*

कारणमपि भवति। यथा ध्वंसरूपाभावस्य किञ्चिद्वस्तु नियतोत्तरवर्तित्वेन किञ्चिद्वस्तुकार्यत्वं तथाऽभावस्य किञ्चिद्वस्तुनियतपूर्ववर्तित्वेन कारणत्वमपि विद्यते। दृष्टं हि प्रायश्चित्तादौ पापनाशस्य, तोयपानादौ पिपासादुःखाभावस्य च कार्यत्वम्। अभावस्य कारणत्वाभावे प्रमाणं नास्ति। कारणत्वं भावत्वव्याप्यमित्यस्याऽप्रयोजकत्वात्। अन्यथा यद्यभावः कारणं न स्यात्तदाऽभावः कार्योऽपि न स्यात्। यथा भावत्वे कारणत्वव्यापकत्वं स्वीक्रियते तथा तुल्ययुक्त्या भावत्वे कार्यत्वव्यापकत्वमपि सम्भवेत्। तथा च ध्वंसरूपाऽभावे व्यापकस्य भावत्वस्याऽभावात् तत्र व्याप्यस्य कार्यत्वस्याऽभावः सिद्ध्येद् विशेषभावात्। अतः कार्यत्ववत् कारणत्वस्याप्यभावस्य सिद्धिरिति भावः। तथा च चन्द्रकान्तमण्याद्यभावस्य दाहकारणत्वं सिद्धम्।

अत्र मीमांसकाः—चन्द्रकान्तमण्याद्यभावस्य दाहकारणत्वे सिद्धे चन्द्रकान्तमण्यादेः दाहं प्रति प्रतिबन्धकत्वमवश्यं स्वीकर्तव्यम्। प्रतिबन्धकत्वञ्च 'कार्यानुकूलधर्मविघटकत्वम्' तच्च शक्तेर्नाशस्य कुण्ठनस्य वा कारित्वेनैव सम्भवति। अकिञ्चित्करस्य प्रतिबन्धकत्वाऽसम्भवात्। तथा च शक्त्यस्वीकारे प्रतिबन्धकत्वान्यथानुपपत्त्या शक्तिसिद्धिः।

अत्र नैयायिकाः—'प्रतिबन्धकत्वं न कार्यानुकूलधर्मविघटकत्वम्, बाधज्ञानस्याऽनुमितिप्रतिबन्धकत्वाभावापत्तेः। किन्तु कारणीभूताभावप्रतियोगित्वम्, तच्च मण्यभावस्य हेतुत्वे एवोपपद्यते, न त्वतिरिक्तशक्तिसत्व इति भावः।'[१]

---

१. *न्यायसिद्धान्तमुक्तावली - दिनकरी पृ० ३९*

अथवा भवता युदुक्तं शक्त्यस्वीकारे मन्त्रादेः प्रतिबन्धकत्वं न घटते तदिष्टमेव, तथाहि प्रतिपूर्वकबन्धधातो; कर्तरि 'ण्वुल्तृचौ'[१] इति सूत्रेण कर्त्रर्थे ण्वुल्प्रत्यये निष्पन्नप्रतिबन्धकशब्देन प्रतिबन्धकर्तृत्वस्य बोधनात्, अचेतने अकिंचित्कुर्वाणे मण्यादौ प्रतिबन्धकर्तृत्वस्याऽसम्भवात्। के तर्हि प्रतिबन्धका इति जिज्ञासायां आह श्रीमदाचार्यः—**'प्रतिबन्धो विसामग्री तद्धेतुः प्रतिबन्धकः।**[२] इति विसामग्री=कारणाभावः, स एव प्रतिबन्धः पदार्थः। तस्य प्रतिबन्धस्य यो हेतुः प्रयोक्ता पुरुषः स प्रतिबन्धक उच्यते। दाहस्थले च दाहस्य कारणं चन्द्रकांन्तमण्याद्यभावः तस्याभावश्चन्द्रकान्तमण्यादिरेव प्रतिबन्धः न तु असौ प्रतिबन्धकः। एवं सति मण्यादेरकिंञ्चित्करत्वेऽपि न क्षतिः। ये तु चन्द्रकान्तमण्यादिप्रयोक्तारः पुरुषाः प्रतिबन्धकास्ते तु चन्द्रकान्तमण्यादिसमवधानकरत्वात् किञ्चित्करा एव। तथा च चन्द्रकान्तमण्यादिरूपप्रतिबन्धसमवधानहेतुभूतपुरुषे एव प्रतिबन्धकशब्दस्य मुख्यः प्रयोगः। यत्र कुत्रापि यदि चन्द्रकान्तमण्यादौ प्रतिबन्धकशब्दप्रयोगः क्रियते चेत् प्रतिबन्धशब्दात् स्वार्थे कप्रत्ययेन बोध्यम्। तथा च कार्यमात्रे साधारणकारणत्वेन क्लृप्तेन प्रतिबन्धकाभावेनैवोपपत्तौ वह्न्यादौ दाहानुकूलातिरिक्तशक्तिकल्पने मानाभावः।

अत्र मीमांसकाः-उत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्य हेतुत्वोपगमे प्रतिबन्धकप्रतियोगिकत्वेन प्रागभावस्य, प्रध्वंसाभावस्य, अत्यन्ताभावस्य च पृथक्-पृथक्कारणत्वे व्यभिचारो भवति। तथाहि यदि दाहं प्रति प्रतिबन्धकप्रागभावः कारणं, तर्हि प्रतिबन्धकप्रध्वंसे सति दाह-

---

१. *पाणिनिसूत्रम् ३/१/१३३*

२. *न्यायकुसुमाञ्जलि- कारिका १/१०*

रूपकार्यं जायते । परन्तु प्रतिबन्धकप्रागभावरूपस्य कारणस्य च तत्राऽसत्वात् भवति व्यभिचारः। एवं प्रतिबन्धकध्वंसस्य, प्रतिबन्धकात्यन्ताभावस्य च कारणत्वे चालनीयन्यायेन भवति व्यभिचारः। संसर्गाभावत्वस्य चानुगतस्यैकस्याऽभावात् प्रतिबन्धकसंसर्गाभावत्वेनापि कारणत्वं न सम्भवति। प्रागभावादेरभावत्वेनानुगतरूपेण कारणत्वस्वीकारेण व्यभिचारपरिहारे तु चन्द्रकान्तमणिसत्त्वेऽपि वह्नौ चन्द्रकान्तमणिभेदरूपाभावः सत्त्वाद्दाहापत्तिः। अतः दाहं प्रति शक्तिरेव हेतुः स्वीकर्तव्यः।

अत्र नैयायिकाः—'अत्र नास्ति' इति प्रतीतिगम्येन प्रागभावप्रध्वंसाभावात्यन्ताभावरूपत्रितयसाधारण्येन प्रतिबन्धकसंसर्गाभावत्वेनानुगतरूपेण दाहं प्रति कारणमिति न व्यभिचारः। न च नास्तिपदेन अत्यन्ताभावस्यैव व्यवहारात् कथं ध्वंसप्रागभावयोः ग्रहणमिति वाच्यम् 'श्यामघटे रक्तो नास्ति रक्तघटे श्यामो नास्तीति धीश्च प्रागभावं ध्वंसं चावगाहते न तु तदत्यन्ताभावं तयोर्विरोधात्'[१] इत्यतः ज्ञायते यत् नास्तिपदेन प्रागभावस्य ध्वंसस्यापि ग्रहणं सम्भवति। अत एव अत्र घटो नास्तीत्येकरूपेण त्रयाणां प्रतीतिर्भवति। न च तथापि - अभावेषु जातेरभावात् संसर्गाभावत्वस्य जातित्वाभावात् संसर्गाभावत्वेन कथं त्रयाणां प्रागभावादीनां दाहकारणत्वमिति वाच्यम्। मा भूत् संसर्गाभावत्वं जातिः। नहि जात्युपगृहीतानामेव व्यवहारविषयत्वमिति नियमः। भूतत्वमूर्तत्वरूपोपाधिविशिष्टानामपि वस्तूनां व्यवहारविषयत्वदर्शनात्। तथा च उत्तेजकाभावविशिष्टप्रतिबन्धकाभावस्य दाहकारणत्वं स्वीकर्तुं शक्यतया, तेनैव सकलदोषवारणसम्भवे को लाभः नानाशक्तिकल्पनेन।

---

१. न्यायसिद्धान्तमुक्तावली पृ० ६४

एवं वह्नेः तृणारणिमणिजन्यत्वात् तेषां सर्वेषां कारणता वाच्या। तथा सति व्यतिरेकव्यभिचारः तस्य च मीमांसकेन शक्तिमुखेन वारितमासीत्, नैयायिकेन शक्तिः खण्डिता अतो व्यतिरेकव्यभिचारवारणस्य भारो नैयायिके आपतितः। तेन च कार्येषु वैजात्यं प्रकल्प्य निवारितः। तथाहि - तृणजन्यस्तारणो वह्निः वह्न्यन्तरात् भिन्नः, एवमरणिजन्यो वह्निरपि भिन्नः, मणिजन्योऽपि वह्निः वह्न्यन्तराभ्यां भिन्नः, अतस्तृणस्य तार्णवह्निं प्रत्येव कारणता न वह्न्यन्तरं प्रति, एवमरणिजन्यवह्निविशेषं प्रत्येव अरणि-कारणता, मणिजन्यवह्निविशेषं प्रति च मणेरेव कारणता न वह्न्यन्तरं प्रति। ततश्च तृणसत्त्वे तार्णवह्निसत्ता तृणभावे तार्णवह्न्यभाव इत्यन्वयव्यति-रेकावुभावप्युपपन्नौ, एवमरणिजन्यमणिजन्यवह्निस्थलेऽपि अन्वयव्यतिरेकौ सम्भवतः। इति सर्वमभिप्रेत्य कारिकायामुक्तं—

**प्रवाहो नादिमानेष न विजात्येक शक्तिमान्।**
**तत्त्वे यत्नवता भाव्यमन्वयव्यतिरेकयोः।।[१] इति।**

अर्थात् - एष कार्यकारणभावप्रवाहोऽनादिरविच्छिन्नरूपेण प्रचलति। तस्मादत्र नूतना शक्तिः न कल्पनीया, अपि त्वन्वयव्यतिरेकयोस्तत्त्वे नियतत्वे ग्राह्ये पुरुषेण यत्नवता भाव्यम् यत्नः करणीयः कार्येषु तार्णवह्न्यादिषु वैजात्यं कल्पनीयमित्यर्थः। कार्येषु वैजात्ये च कल्पिते सति व्यतिरेकव्यभिचारदोषवारणं सुतरां सम्भवतीति। तथा च कार्यमात्रं सहेतुकं न तु किमपि वह्न्यादिकार्यं निर्हेतुकं भवितुमर्हतीति वह्न्यादौ कादाचित्कत्वं न सहेतुकत्वव्यभिचारि।

---

१. न्यायकुसुमाञ्जलि- कारिका १/६

एवञ्च संक्षेपतः सिद्धे कार्यकारणभावे, इह संसारे सुखिनं दुःखिनञ्च जनमवलोक्य प्रतीयते यदत्रापि केनापि कारणेनावश्यं भाव्यम्। तयोश्च सुखदुःखयो दृष्टं किमपि कारणं नैवावलोकमानो जनः सुखदुःखकार्यकारणत्वेन जीवात्मनिष्ठं धर्माधर्मात्मकमदृष्टं परिकल्पयति। सिद्धे चाऽदृष्टे तदधिष्ठातृत्वेनेश्वरसिद्धिरिति।

## ब्रह्म+प्रकृतिकारणतावादनिरासः

पञ्चस्ववान्तरविप्रतिपत्तिषु मध्ये तृतीयविप्रतिपत्तिरस्ति 'सत्यपि कार्यस्य कारणसापेक्षत्वनियमे सवत्रैकरूपकारणजन्यत्वसम्भवात्' इयं विप्रतिपत्तिः वेदान्तमतं, साख्यमतं चावलम्ब्याशङ्किता। तदर्थश्च 'सापेक्षत्वात्' 'अनादित्वात्' इति हेतुद्वयेन कृत्स्नस्यैव कार्यस्य सहेतुकत्वं सिद्ध्यतु, तथापि कार्याणां नानाकारणानि नानाजातीयानि च न स्वीकुर्मः। किन्त्वेकमेव ब्रह्म, किम्वा एकजातीया प्रकृतिरेव कारणमस्तु को लाभः नानाकारणकल्पनेन इति।

न च कार्यभेदार्थं कार्यवैजात्यार्थं च नानाकारणं विजातीय-कारणञ्चावश्यकमिति वाच्यम्, यथा एकस्यैवाऽविचित्रेण प्रदीपेण तमोहरणकारितया, वर्तिविकारकारितया च साकं रूपान्तरव्यवहारित्वं संपाद्यते, तथैवाऽविचित्रादपि - एकस्माद् ब्रह्मणो साक्षाद्विचित्रं कार्यजातं जनयितुं प्रभवति। तदर्थमदृष्टस्यावश्यकता नास्ति, अदृष्टाऽसिद्धौ तदधिष्ठातृतयेश्वरस्यापि सिद्धिर्न सम्भवतीति। अयमाशयः - वेदान्तमते 'यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति, यत्प्रयन्त्यभिसंविशन्ति, तद्विजिज्ञास्व, तद्ब्रह्मेति'[१] इत्यादिभिरनेकैः श्रुतिभिरेकब्रह्मैव कारणमिति

---

१. *तैत्तरीयोपनिषद् ३/१*

लभ्यते ।अत एव 'जगज्जन्मादिकारणत्वम्' ब्रह्मणस्तटस्थलक्षणं कृतम्। अत्र जगत्पदेन कार्यजातं विवक्षितम्।[१] अत्र ब्रह्मैव साक्षात् शुभाशुभफलं प्रददाति, अदृष्टसद्भावे प्रमाणाभावाद् । तदाह 'यतोऽपूर्वस्य संसिद्धौ प्रमाणं नोपपद्यते'[२] इति। नैयायिका हि प्रथममदृष्टं कल्पयन्ति तदनन्तरञ्च तदधिष्ठातृत्वेनेश्वरं साधयन्ति। तथा च ईश्वराधिष्ठितं सददृष्टं फलं प्रददाति। परन्तु वेदान्तिन एवं प्रवदन्ति—एषा च फलप्राप्तिरदृष्टं विनाऽप्युपपद्यते इति। तथाहि - 'क्रिया हि द्विविधा दृष्टफलाऽदृष्टफला च। दृष्टफलापि द्विविधाऽनन्तरफलाऽऽगामिफला च, अनन्तरफला गतिभुजिलक्षणा (क्रियाया अनन्तरमेव भवति)। कालान्तरफला च कृषिसेवादिलक्षणा। तत्रान्तरफला क्रिया फलोदयपर्यन्तं तिष्ठति। फलोदयेन चानन्तरफलायाः क्रियायाः नाशो भवति। कालान्तरभाविफला क्रिया तूत्पन्ना सती विनश्यति पुनश्च कालान्तरे तस्याः क्रियायाः फलं भवति।[३] कालान्तरभाविफलायाः क्रियायाः फलमात्मसेव्याद्यधीनं भवति। तथाहि - घटाद्युत्पत्तौ नष्टेऽपि दण्डे चक्रभ्रमिरूपस्य व्यापारस्य विद्यमानत्वात् तत्र भवतु व्यापारस्यावश्यकता परन्तु यागादीनां कर्मणां विनाशे सति यागादिफलावाप्तयेऽदृष्टात्मक-व्यापारस्य कल्पनं नैवौचित्यं वहति। व्यापारकल्पनाभावेऽपि यागादिफलावाप्तिसम्भवात् यथा च राजसेवारूपेण कर्मणा नहि किंचिददृष्टमुत्पद्यते किन्तु राज्ञो बुद्धिः संस्कारिता भवति, कालान्तरे च राजा सेवकाय पारितोषिकं प्रददाति। तथैव परमेश्वरोऽपि कालान्तरे कृतस्य

---

१. वेदान्तपरिभाषा पृ० ३२८

२. बृहदारण्यकोपनिषद्भाष्यवार्तिकम् ३/८/१४६

३. के०उप० शांकरभाष्यम् १४/३/१

शुभस्य कर्मणः फलं पारितोषिकं ददाति, कृतस्याशुभस्य कर्मणः फलं दण्डं प्रददाति। अत एव 'तथा च कर्मफलप्राप्तौ न दृष्टन्यायहानमुपपद्यते'[१] इति। एवञ्च—

**सर्वकर्मफलप्राप्तिरीश्वरादेव नान्यतः।**
**इत्याह भगवान् व्यासः सर्वज्ञोऽपि महामति।।**[२]

स हि भगवान् सर्वाध्यक्षः देशकालविशेषाद्यभिज्ञः कर्मिणां कर्मानुरूपं फलं प्रददाति एतेनैवाऽऽशुतरविनाशिनः कर्मणः कालान्तरभाविफलं भवितुं शक्नोति - अदृष्टं विनैवेति।[३] एवमदृष्टं स्वयमपि निष्प्रमाणं, तस्य च फलदानशक्तिरपि निष्प्रमाणिका।[४] एवमदृष्टस्याऽस्वीकारेऽपि यागादिफलानां सम्पादनं साधुसम्भवति। यद्राजवदस्य फलदातृत्वस्वीकारे राजवदस्य रागादिमत्वमपि प्राप्तं भवतीश्वरस्येति न वाच्यम्, यथा लोके निर्णायको निरपेक्षोऽपि कस्यचिज्जयहेतुः कस्यचिच्च पराजयहेतुर्भवति तथा सत्यपि नहि रागदिमानुच्यते यथोपलब्धभाषित्वात्। तथैवेश्वरोऽपि क्रियादिसाक्षी सन् रागादिमान् न भविष्यति।[५] अत एतदेव स्वीकार्यं यद्यथा सेव्यः सेवककृतां सेवां स्मरन् कालान्तरे तदनुरूपं फलं प्रददाति। तथैव 'सेव्यबुद्धिवत् सेवकेनेश्वरबुद्धौ तु संस्कृतायां यागादिकर्मणा विनष्टेऽपि कर्मणि सेव्यादि-

---

१. के०उप० शांकरभाष्यम् १४/३/१

२. बृहदारण्यकोपनिषद्भाष्यवार्तिकम् पृ० ६८

३. स हि सर्वाध्यक्ष ...............। ब्रह्मसूत्रशांकरभाष्यम् ३/२/३८

४. अदृष्टं निष्प्रमाणं च दातुं शक्तिरथास्य च। बृहदारण्यकोपनिषद भाष्यवार्तिकम् पृ० ८६२

५. यथा लौकिकसाक्षी .......' के०उप० शांकरभाष्यम् आनन्दगिरिः, पृ० ४८

वेश्वरात् फलं कर्तुर्भवतीति युक्तम्'।[१] अतो वेदान्तिनो यागोत्तरभाविनः फलप्राप्तिपर्यन्तस्थायिनोऽदृष्टात्मकस्य व्यापारस्य सत्तां निराकुर्वन्ति।

सांख्यास्तु - अदृष्टं स्वीकुर्वन्ति जगद्वैचित्र्याय तदुक्तं सांख्यसूत्रे 'न धर्मापलापः प्रकृतिकार्यवैचित्र्यात्'[२]। परन्वत्र पूर्वपक्षिणा एकजातीयकारणं दर्शयितुमेव सांख्यमतमवलम्बनं कृतमिति बोध्यम्। अधिकमग्रे।

अत्र नैयायिकाः—

**एकस्य न क्रमः क्वापि वैचित्र्यञ्च समस्य न।**
**शक्तिभेदो नचाऽभिन्नः स्वभावो दुरतिक्रमः।।[३] इति।**

यदि सहकार्यऽदृष्टनिरपेक्षमेकं कारणं सर्वस्य कार्यस्य स्यात्तर्हि क्रमेण कार्योत्पत्तिर्न स्यात् कार्यक्रमस्य कारणक्रमाधीनत्वात्, तदा सर्वेषां कार्याणामेकस्मिन्नेव काले उत्पत्तिः प्राप्येत। सहकार्यपेक्षत्वे तु सामग्र्याः=सहकारिमेलनरूपायाः क्रमभावित्वात् कार्यस्य क्रमः सम्भवति। अन्यथा क्रमप्रसक्तिरहितात्कारणान्न कार्यसम्भवः। तथा चानन्तरोत्पत्तिको घटो यदि पूर्वोत्पन्नघटकारणमात्रजन्यः स्यात् तदा तद्घटोत्पत्त्यनन्तरोत्पत्तिको न स्यात् तद्घटवदिति। एवम् एतद्घटो यदि तद्घटकारणमात्रजन्यः स्यात् तदा तद्घटोत्पत्तिकक्षणोत्पत्तिकः स्यादित्या-

---

१. के०उप० शांकरभाष्यम् पृ० ४९

२. सांख्यसूत्रम् ५/२०

३. न्यायकुसुमाञ्जलि - कारिका १/७

पत्तिरेव कार्यजातस्येकमात्रकारणजन्यत्वे बाधिका। ननु यथा दीपस्य युगपत्कार्यजनकत्वस्वभावकत्वाद् युगपत् प्रकाशादिकार्यं करोति, तथैवाऽक्रमस्यापि कारणस्य क्रमवत्कार्यजनकत्वस्वभावकत्वस्वीकारेणैव क्रमिककार्यसम्भवे कृतं विचित्रकारणेनेति चेत्, तर्हि - एकस्मिन् कारणे प्रथमकार्यजननकाले द्वितीयकार्यजनकत्वस्वभावकत्वमस्ति न वा ? नाद्यः, प्रथमस्येव द्वितीयस्यापि तदानीमेवोत्पत्त्यापत्तेः। नान्त्यः, प्रथमकार्यजनन-समयेऽविद्यमानस्य स्वभावस्य द्वितीयकार्यजननसमये कुतः समागतः ?यदि सहकारिकारणेन इत्युच्यते तदाऽदृष्टस्य सिद्धिः सञ्जातः। अतः स्वभावात् क्रमिककार्योत्पत्तिः न सम्भवति। तस्माद् ब्रह्मैककारणतावादो नोचितः। एवमेकजातीयप्रकृतित एव सकलभूतभौतिकोत्पत्तिसम्भवे किमीश्वरेणेति सांख्योक्तमपि न साधु। तथाहि एकजातीयस्य कारणत्वे कार्यवैचित्र्यानुपपत्तिः, कार्यवैचित्र्यस्य कारणवैचित्र्याधीनत्वात्।

यदि यादृशं कारणं दहनस्य ततोऽन्यूनानतिरिक्तं दहनकारणमात्रमदहनस्यापि कारणं स्यात् तदोत्पद्यमानं कार्यमदहनात्मकं न स्याद् दहनकारणस्वभावाद्दहनात्मकं स्यात्। एवमदहनस्याऽन्यूनानतिरि-क्तकारणं दहनस्यापि कारणं स्यात् तदोत्पन्नकार्यं दहनात्मकमपि स्यात्। अथवा दहनत्वादत्त्वयोर्विरोधस्य स्थिततया कारणस्य परस्पर-विरोधिसामग्रीरूपत्वात् तत्कार्यं दहनोऽदहनो वा न भवेत्। यदि दहनत्वाऽ-दहनत्वयोरविरोधस्वीकारे तु कार्यं दहनाऽदहनोभयरूपं स्यादित्यापत्तिः। एवञ्च घटो यदि पटसामग्र्यविलक्षणसामग्रीकः स्यात् तदा पटविलक्षणो न स्यात् पटवदिति द्विविधापत्तिरेव कार्यजातस्येकजातीयकारणजन्यत्वे बाधिका। तथा सति कार्यस्य क्रमानुपपत्त्या वैजात्यानुपपत्त्या च कारणनानात्वं कारणवैजात्यञ्च सिद्ध्यति।

न च एकं ब्रह्म, एकजातीया प्रकृतिर्वा कारणं स्वीयशक्ति-विशेषसहकारेण दहनशक्तिविशिष्टं सत् तदेव दहनं जनयति, अदहनशक्तिविशिष्टं सददहनं जनयति इति शक्तिभेदमादायैव विभिन्नानि विजातीयानि च कार्याणि करोतीति वाच्यम्, अयं शक्तिविशेषो धर्मिणोऽभिन्नः, भिन्नश्चेति, यदि धर्मिणोऽभिन्नस्तत्सजातीयश्च तदा कार्यस्य क्रमवैजात्ययोरनुपपत्तिस्तदवस्थैव। यदि शक्तिविशेषो धर्मिणो भिन्नस्तद्विजातीयश्च स्वीक्रियते तदा शक्तिविशेषः शक्तिमाँश्चोभयमेव कारणमिति। एकम्, एकजातीयं वा कारणमिति स्वमतपरित्यागात् कारणभेदः कारणवैजात्यञ्च स्वीकृतमित्यस्मदिष्टसिद्धिः।

ननु मास्तु शक्तिः। तदेव कारणं द्विविधकार्यजनकत्वस्व-भाववत्त्वात् पृथगेव दहनमदहनञ्चोत्पादयति अतो निर्दुष्टोयं पक्ष इति चेद्, अत्र नैयायिकाः—'दहनस्य कस्माददहनत्वं न' इत्याशंकायामदहनसामग्र्य-जन्यत्वादित्येवोत्तरस्य वक्तव्यतया तदर्थं दहनोत्पत्तिकाले दहनजननस्व-भावास्वीकारेण पश्चात्तत्स्वीकारे तस्य स्वभावत्वभङ्गापत्तेः। क्षणभेदेन स्वभावभेदशालिनो वस्तुनोऽपि भेदाङ्गीकारे बौद्धमतप्रवेशः स्यात्। ननु एककारणकत्वरक्षणाय क्षणभङ्गपक्षमवलम्ब्य क्षणस्यैव कारणत्वं स्वीक्रियते इति चेत्, नहि क्षणेऽपि सहकार्यनपेक्षः कारणं भवितुमर्हति। अन्यथा कुसूलादाहृत्य क्षेत्रे समुप्तबीजस्यैव कुसूलस्थबीजस्यापि तावति काले कुर्वद्रूपत्वविशिष्टबीजोत्पादकत्वसम्भवेन तत्रैवाङ्कुरोत्पत्त्यापत्तेः बौद्धैरपि सहकार्यपेक्षताया वक्तव्यत्वादिति। प्रदीपस्थले च नानाजातीयकार्यस्य एकः प्रदीप एव कारणमित्यपि नास्ति। तथाहि वर्तिविकारे वर्त्यासह प्रदीपस्य संयोगः कारणम्, घटादिप्रत्यक्षे च घटाद्यवच्छेदेन प्रदीपसंयोगः, इन्द्रियसंयोगश्च कारणमिति न प्रदीपदृष्टान्तेन एकेन कारणे

नानाजातीयकार्यसिद्धिः सम्भवति। तस्माद् दृश्यमानानि विचित्राणि कार्याणि विचित्रकारणजन्यान्येव नाविचित्रकारणजन्यानीति मन्तव्यम्। तथा सति एक एव परमेश्वरोऽथवा सजातीयप्रकृतिः विचित्रनानाऽदृष्टमन्तरा विचित्राणि नानाविधानि कार्याणि कर्तुं न प्रभवति। तस्मात् सिद्धमदृष्टं, तत्सिद्धौ तदधिष्ठातृत्वेनेश्वरोऽपि सिद्ध्यति।

## परलोकसिद्धिः

'अलौकिकस्य परलोकसाधनस्याभावात्' एतद्विप्रतिपत्त्यन्तर्गता चतुर्थ्यवान्तरविप्रतिपत्तिरस्ति 'विलक्षणविविधकारणस्यावश्यकत्वेऽपि परलोकतत्साधनस्वीकारस्यानावश्यकत्वात्' इति। एतद् विप्रतिपत्तेः खण्डनार्थमेव 'विश्ववृत्तितः' इति चतुर्थो हेतुः।

अत्र पूर्वपक्षिचार्वाकाणामयमाशयः-पूर्वोक्ताभिः हेतुभिः विविधविलक्षणकारणस्वीकारस्यावश्यकत्वे 'उप्तं बीजमङ्कुरं जनयति, ततः सस्यं जायते ततश्च व्रीह्यादिकमिति' पूर्वं पूर्वं दृष्टमेवोत्तरोत्तरं प्रति कारणमस्तु अङ्कुरादेः प्रत्यक्षसिद्धत्वात्। स्वर्गादौ तु प्रत्यक्षप्रमाणाभावात् तत्र यागादेर्न कारणत्वमिति। अत एव श्रीमज्जयन्तभट्टोऽदृष्टस्य स्वर्गादेः शास्त्रैकगम्यत्वं प्रतिपादयति 'अदृष्टे तु स्वर्गापवर्गमात्रे नैसर्गिकमोहान्धतमसविलुप्तालोकस्य लोकस्य शास्त्रमेव प्रकाशः, तदेव सकलसदुपायदर्शने दिव्यं चक्षुरस्मदादेर्न योगिनामिव योगसमाधिजज्ञानाद्युपायान्तरमपीति तस्मादस्मदादेः शास्त्रमेवाधिगन्तव्यम्'[१] इति। परन्तु शास्त्रप्रमाणास्वीकर्तॄणां

---

१. न्यायमञ्जरी पृ० २

चार्वाकाणां मते तु शास्त्रैकगम्यस्वर्गादिः शशविषाणवदलीकः, अत उक्तम्- 'परलोकिनोऽभावात्परलोकाभावः'[१] इति। पुराणेष्वपि यत्र तत्र परलोकखण्डनप्रतिपादकप्रमाणमुपलभ्यते। तद्यथा-

**'न स्वर्गो नैव मोक्षोऽत्र लोकाः क्लिश्यन्ति वै वृथा।'[२]**

एवञ्च रामायणे-

**स नास्ति परिमित्येतत् कुरु बुद्धिं महमते।**
**प्रत्यक्षं यत्तदातिष्ठ परोक्षं पृष्ठतः कुरु॥[३] इति।**

अत एव प्रत्यक्षसिद्धस्यैव लोकस्य प्रामाण्यम्। तदुक्तम् —

**एतावानेव लोकोऽयं यावानिन्द्रियगोचरः।**
**भद्रे वृकपदं पश्य यद्वदन्ति बहुश्रुताः॥[४]**

विषयेऽस्मिन् भगवता शङ्कराचार्येणापि पूर्वपक्षरूपेण-

**'इहलोकात्परो नान्यः स्वर्गोस्ति नरको न च।[५]**

इति प्रतिपादितम्। अत एव चार्वाकसिद्धान्ते ऐहिकसुखोत्कर्ष एव स्वर्गपद-

---

१. *बार्हस्पत्यसूत्रम्*

२. *पद्मपुराणं सृष्टिखण्डः १३/३२३*

३. *वाल्मीकिरामायणम् २/१०९/१७*

४. *षड्दर्शनसमुच्चयः। श्लोकः ८१*

५. *सर्वसिद्धान्तसंग्रहः पृ० ८*

वाच्यः । कण्टकादिजन्यमैहिकदुःखमेव नरकः न तु वैदिककर्मजन्य-धर्माऽधर्मद्वारेण प्राप्तः पारलौकिकः स्वर्गनरकादिः प्रमा शक्या प्रत्यक्षमात्रेण तज्ज्ञानासम्भवात्। तथा चाप्रमितार्थं प्रतिपादयन् वेदादिशास्त्रनिर्माता न प्रमाणभूतः। चार्वाकाः हि वैदिककर्माणि ब्राह्मणानां जीवनोपायानीति मत्वा वैदिककर्माणि निराकुर्वन्ति। मरणादूर्ध्वं जीवस्य न कस्यचिदपि अस्तित्वं भविष्यति। स्वर्गनरकादिकं सर्वं धूर्तेन परेषां वञ्चनायोल्लिखितम्। अतः शरीरपोषणाय यावन्ति वस्तूनि सन्ति तानि सर्वाणि प्राप्तव्यानीति। उक्तञ्च- 'ऋणं कृत्वा घृतं पिवेदिति'। चार्वाका हि दुःखात्यन्तनिवृत्तिमपवर्गं स्वीकुर्वते। परन्तु नैयायिकमत इव तादृशदुःखात्यन्तनिवृत्त्यर्थं न तत्त्वज्ञानादिप्रयासापेक्षा। यदा मनुष्यः प्रेति तदा तस्य स्वत एव दुःखात्यन्तनिवृत्तिः भवत्येव। तदुक्तम् -

भस्मीभूतस्य देहस्य पुनरागमनं कुतः।'[१] इति तस्मान्मरणमेवा-वश्यंभावि जीवस्यापवर्गः, अत एव च बार्हस्पत्यसूत्रम् - 'मरणमेवापवर्गः' इति। मरणञ्च प्राणवायुनिर्गमनम्। मरणे सति सर्वे जीवात्मानो मुच्यन्ते। एतेन मुक्तिप्राप्त्यर्थं जन्मजन्मान्तरायाससाध्यसाधनानुष्ठानादिप्रयासश्च निरर्थक एवेति निष्कर्ष आयाति। तदुक्तम् -

**परलोकफलो धर्मः कीर्त्यते तदसङ्गतम्।**
**परलोकोऽपि नास्त्येवाऽभावतः परलोकिनः ।।**[२] इति।

तथा सति अलीकपरलोकसाधकं यागादिकर्म कथं कार्यनियतपूर्ववृत्तित्व-

---

*१. सर्वदर्शनसंग्रहः पृ० १४*

*२. त्रिषष्टिशलाका १/१/३३०*

रूपकारणताभाक् भवति। इत्थं प्रकारेण यागादेः स्वर्गकारणत्वखण्डिते सति यागजन्यमदृष्टं खण्डितं भवति । तथा सति अदृष्टाधिष्ठातृत्वेन, स्वर्गसाधनताबोधकवेदोपदेशकत्वेन वा परमात्मनः सिद्धिर्न सम्भवति ।

अत्राचार्याः -

**विफला विश्ववृत्तिर्नो न दुःखैकफलापि वा ।**
**दृष्टलाभफला नापि विप्रलम्भोऽपि नेदृशः ।।**[१]

विश्वेषां सर्वेषां प्रज्ञावतां परलोकार्थिनां यागादौ प्रवृत्तिर्दृश्यते। सा प्रवृत्तिः निष्फला सफला वा, अन्त्येऽपि दुःखैकफला सुखफला वा। तत्राप्यन्ते किं लाभादिजन्यसुखफला, आहो विप्रलम्भफला अथवा विलक्षणसुखफला इति विकल्पाः सञ्जायन्ते। तेषु न तावदाद्यः कल्पः सम्भवति। यतोहि—पृथिव्या ओषधयः, ओषधीभ्योऽन्नं, अन्नात्पुरुष इति यथा दृष्टं पूर्वपूर्वमुत्तरोत्तरकार्यजनकं स्वीक्रियते, परन्तु यदि परलोकमुद्दिश्यकृतानां यागदानहोमादिकर्मणां, वापीकूपतडागादिकर्मणाञ्च किञ्चित्फलादर्शनात् फलशून्यत्वं स्वीक्रियते, तदा 'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते' 'न कुर्यान्निष्फलं कर्म' इत्यादिवचनाद् यदि मन्दबुद्धिरपि जनः फलरहिते कर्मणि न प्रवर्तते, तर्हि यागादीनां कर्मणां फलशून्यत्वे तत्र प्रज्ञावन्तः कथं प्रवर्तेरन्? प्रवृत्तिमात्रं प्रति इष्टसाधनताज्ञानस्य कारणत्वात्।

यदि यागादिकर्मणां किञ्चिदपीष्टं फलं न स्यात्तर्हि तत्र 'यागादिर्मदिष्टसाधनम्' इत्याकारकयागादिधर्मिकेष्टसाधनताज्ञानरूपकारणा-

---

*१. न्यायकुसुमाञ्जलि-कारिका १/८*

भावात् कस्यापि प्रवृत्तिर्न स्यात्। अतो यागादेः किञ्चित्फलमवश्यं वाच्यम्। तदेव स्वर्गपदवाच्यम्। न च यागादेर्धनव्ययशरीरक्लेशादिदुःखफलकत्वेन प्रवृत्तिहेतुरिति द्वितीयो पक्ष अस्तु तावतापि इष्टसाधनता ज्ञानात्प्रवृत्ति-र्निराबाधेति वाच्यम्, व्यर्थो धनव्ययः कायक्लेशश्च कस्यापि पुरुषस्य फलत्वेन अभीष्टो न भवति धनव्ययस्य कायक्लेशस्य च दुःखजनकत्वेन दुःखरूपत्वात् सर्वस्य च सुखैकलिप्सावत्त्वात्। तथा च केवलधन-व्ययकायक्लेशयोरिष्टत्वाभावाद् यागादेस्तन्मात्रफलकत्वे तत्र कस्यापीष्ट-साधनताज्ञानाभावाद् , द्वेषज्ञानस्य प्रवृत्तिप्रतिबन्धकत्वाच्च यागादौ कस्यापि प्रवृत्तिर्न स्यात्। भवति च प्रवृत्तिस्तेनानुमीयते यद् यागादिजन्यः परलोकोऽ-स्त्येव।

ननु लाभाय पूजायै ख्यातये वा प्रेक्षावतां यागादौ प्रवृत्तिः सम्भवति। यो यागादिं करोति धार्मिकोऽसाविति मत्वा जनस्तस्मै द्रव्यं प्रयच्छतीति लाभः, पूजा=प्रतिष्ठा, ख्यातिः=प्रसिद्धिरित्याद्येव प्रयोजनानि यागादिप्रवृत्तेरस्तु। लाभपूजाख्यात्यादिफलं सर्वेषामिष्टमेव। अतस्तत्र इष्टसाधनता ज्ञानमपि सुलभमिति, अतो तृतीयपक्षः स्वीकार्य इति चेन्न, कृषिसस्ययोरिव यागलाभयोः कार्यकारणभावाऽसम्भवात्। न खलु यागे कृते स्वयमेव लाभः पूजा वा भवितुमर्हति, स्वरूपतो यागादेर्लाभहेतुत्वे धनाभिलाषुकस्याऽपि तत्र प्रवृत्त्यापत्तेः, धनमिच्छन्तस्तेऽपि तत्कुर्युरिति। पूजाधनलाभादेः पुरुषान्तरद्वारकत्वेन यागमात्रादसम्भवात्। ननु पुरुषान्तरद्वारैव याजकानां तपस्विनां च पूजाधनलाभादिर्भवेदिति चेत् यो हि पुरुषो याजकेभ्यस्तापसेभ्यश्च धनं दद्यात् तांश्च पूजयेत् तत्कस्य हेतोः ? तस्य स्वस्य किञ्चित्फलाभावे स तेभ्यो धनदानादावौदासीन्यमेव भजेत्। ननु स खलु पुरुषो याजकेभ्यस्तपोधनेभ्यश्च धनदानेन लोके मम कीर्तिर्भवेत्,

पूजाधनलाभादिना सन्तुष्टा याजकास्तापसाश्च मय्यनुरागं वहेयुरित्यालोच्य धनदानं करोति। अनुरागस्य दानपूजाफलत्वं च लोके सिद्धम्। उक्तञ्च भारविकविना 'जनानुरागप्रभवा हि सम्पदः' इति। अतः सर्वो व्यापार एवेति चेन्न - ये खलु न्यायकर्तारः, आमोदप्रदपरिहासादिक्रियाकुशलाश्च एभ्यो दृष्टमेव ख्यातिं स्वस्मिंस्तेषामनुरागं च कामयमाना राजादयः धनं ददति। तपस्विवनस्थादिभ्यो यत् गुप्तधनदानं करोति तददृष्टार्थमेव प्रयोजनं विना दानानुपपत्तेः दृष्टस्याभावाददृष्टमेव तत्र फलं कल्पते। तथा च याजकेभ्यस्तापसेभ्यश्च धनदानेन मम धर्मलाभो भवेन्मदीयं पापं विनश्येदित्यालोच्यैव धनिका राजानश्च तेभ्यो धनं ददति, तेषां पूजासम्मानादिकं च कुर्वन्तीति। ननु वैदिका यज्ञादिकर्तारो बकवद्धूर्ता अर्थकामाः दृष्टार्थमेव भावयन्तोऽदृष्टार्थमिवाचरन्ति इति चेत्, न दृष्टसम्पदं ग्रामपशुहिरण्यादिकं, तेषु द्रव्येषु तेषामपेक्षाविरहात्तदप्यनुपपत्तेः। ननु मास्त्वन्या दृष्टसम्पत्, सुखमेवाद्दिश्य तथा दानादिं करोतीति चेत् - यदि ततः सुखं प्राप्यते तदा नास्तिका अपि सम्भोग इव तत्र सहसा प्रवर्तन्ताम्। यद्यपि फलमनुद्दिश्य विहितेषु नित्येषु संन्ध्यावन्दनादिषु विज्ञा यथा प्रवर्तन्ते वेदव्यवहारसिद्धत्वात् तथाऽफलेष्वपि विहितेषु श्रौतस्मार्तकर्मसु प्रवर्तन्ते लोकव्यवहारसिद्धत्वात् इति। न च सन्ध्यावन्दनादेरपि विश्वजिदादिवत्फलं कल्प्यमिति वाच्यम् नित्यत्वव्यघातापत्तेः, काम्यत्वापत्तेः अकरणे निन्दानुपपत्तेश्च। न च तर्हि प्रवृत्त्यनुपपत्तिरिष्टसाधनताज्ञानाभावादिति वाच्यम्। इष्टसाधनताज्ञानं हि न साक्षात्प्रवृत्तिं प्रति कारणम्, किन्तु कार्यताज्ञानद्वारा। तच्च कार्यताज्ञानं प्रकारान्तरेण भवति। तथा च संध्योपासनादिवत् निष्फले यज्ञादौ जनानां

---

१. *न्यायसिद्धान्तमुक्तावली पृ० ४८३-४८४*

प्रवृत्तिः सम्भवति। तथापि संध्यावन्दनादि नित्यं कर्माफलमिति मीमांसकाः। नैयायिकास्तु 'ग्रहणश्राद्धादौ नित्यत्वनैमित्तिकत्वयोरिव भरणीश्राद्धे काम्यत्वनैमित्तिकत्वयोरिव नित्यत्वकाम्यत्वयोरप्यविरोधात्'[१] इति। तथाहि 'अहरहः सन्ध्यामुपासीत' इति विधिवाक्येन नित्यत्वप्रतिपादनात्, रात्रिसत्रन्यायेन च -

**सन्ध्यामुपासते ये तु सततं संशितव्रताः ।**
**विधूतपापास्ते यान्ति ब्रह्मलोकं सनातनम् ।।**

इत्यादिवाक्येनोदितफलसाधनत्वप्रतिपादनाच्च काम्यत्वमपि सिद्धम्। तथा सति नित्यत्वकाम्यत्वोभयस्वीकारे बाधकाभाव :।

न च सन्ध्यावन्दनादिनित्यकर्मणां काम्यत्वे कामनाशून्यपुरुषस्य सन्ध्यावन्दनादौ प्रवृत्तिर्न स्यादिति वाच्यम्, यथा त्रैकालिको विष्णुसहस्रनामस्तवादिपाठो विधिप्राप्तत्वान्न काम्यं कर्म तथापि 'त्रिसन्ध्यं कीर्तयेद्यस्तु सर्वान्कामानवाप्नुयादि'ति फलकामनया पुरुषास्तत्र प्रवर्तन्ते तद्वत् प्रकृतेऽपि 'अकुर्वन् विहितं कर्म नरो भवति किल्विषीति वचनात् प्रत्यवायाऽभावकामनाऽवश्यं कल्पनीया[१] इति।

मीमांसकैः पूर्वं यदुक्तम् - नित्यकर्मणि श्रुतिघटकविधिबोध्यकृतिसाध्यताज्ञानेनैव कारणेन भवति प्रवृत्तिः, न तु इष्टसाधनताज्ञानं प्रवृत्तौ कारणं, तथा च फलकल्पनमनुचितमिति तदपि न साधुः। यतोहि - निष्फले प्रवृत्त्यभावेनान्वयव्यतिरेकाभ्यां प्रवृत्तित्वेन फलात्मकेष्टसाधनताज्ञानत्वेन च

---

१. न च कामनाभावेऽकरणापत्ति........ न्यायसिद्धान्तमुक्तावली पृ० ४८४

कार्यकारणभावस्यावश्यकत्वात्, इष्टसाधनताज्ञानं विना केवलसहस्र-कार्यताज्ञानादपि प्रवृत्त्यनुत्पादादिति।[१] स्मृतिरपि निगदति - 'दिवाकृतस्य पापस्य सायं सन्ध्यावन्दनतो रात्रिविहितपापस्य प्रातः सन्ध्यावन्दनतश्च नाशो भवति। इत्थं प्रकारेण सन्ध्यावन्दनादिनित्यकर्मणि सफलत्वसिद्धौ दृष्टान्तासिद्धिः। अतः तद्दृष्टान्तीकृत्य निष्फले यागादौ प्रवृत्तिरसम्भवात्। भवति च प्रवृत्तिरतो यागादेः किमपि फलं वाच्यं तदेव स्वर्गपदार्थः।

अस्तु तर्हि विप्रलम्भ एव यागादिप्रवृत्तिफलमिति चतुर्थः पक्षोपि न, तद्वृद्धयोपदेशादर्शनात्, वृद्धस्य स्वयमनुष्ठातृत्वेन प्रतारक-त्वायोगात्, स्वयं तदननुतिष्ठन् केवलं परस्मै य उपदिशति अनुष्ठानं स एव लोके प्रतारक उच्यते। वृद्धैर्वञ्चितो बालो निष्फले कर्मणि प्रवर्तते तदानीं फलविवेचनशक्तेर्वैधूर्यात्, अनन्तरञ्च-अभ्यासादेव तदनुवर्तते इत्यपि न, वृद्धानां स्वयं तदनुष्ठानप्रवृत्तिदर्शनात्, अन्यथाजातमर्थम् - अन्यथा यो ब्रवीति न स्वयमनुतिष्ठति स वञ्चक इति कथ्यते। वृद्धास्तु स्वयं कुर्वन्तः कथं विप्रलम्भका भवेयुः। परवञ्चन कुतूहली प्रतारकः स्वात्मानं न प्रतारयति किन्तु परमेवेति। ननु तेऽपि वृद्धाः वृद्धतरैर्विप्रलब्धाः। एवं तेऽपि वृद्धाः पूर्वतरवृद्धैः इत्यनन्तसन्तानादिरेव प्रतारणप्रवाहः प्रचलति इति चेन्न दृष्टफलनिरपेक्षानादिकालप्रवृत्तेरदृष्टफलकत्वनियमात्। अपि च स एव प्रतारक अन्यथाज्ञातमर्थं - अन्यथा य उपदिशति, अथवा भ्रान्तोऽफलमेव यः फलवत्त्वेनोपदिशति। परन्तु अत्र स्वपूर्वपूर्वकृतोपदेशमनुसरन्तो यागाद्यनुष्ठाने प्रवर्तन्ते अतो विप्रलम्भशङ्का नास्ति। ननु नाऽमत्यन्त-मनादिर्विप्रलम्भप्रवाहः किन्तु प्रथमतः कश्चिद् विप्रलिप्सुः परवञ्चनापरायण

---

१. *ननु वेदबोधितकार्यताज्ञानात् प्रवृत्ति............। न्यायसिद्धान्तमुक्तावली पृ० ४८४*

अन्योपदेशं विनैव स्वबुद्ध्या विप्रलम्भोपायं प्रकल्प्य स्वयमननुष्ठाने च परे न प्रवर्तेरन्निति जागरूकः स्वयं यागादिकमनुष्ठाय पराँस्तत्र प्रवर्तयामास। तदारभ्यैष प्रवाहः प्रचलतीति चेत् , लोकविलक्षण एवाऽयं पुरुषो भवेत्। यतः सर्वोऽपि जनः सुखमात्रं कामयमानो नानाविधभोगान् भोक्तुमभिलषन् पुत्रपौत्रबन्धुपरिवृत्तो जीवितुं स्पृहयति। परन्तु 'असौ सर्वलोकोत्तर एव, यः सर्वस्वदक्षिणया सर्वबन्धुपरित्यागेन सर्वसुखविमुखो ब्रह्मचर्येण तपसा श्रद्धया वा केवलपरवञ्चनकुतूहली यावज्जीवमात्मानमवसादयति। कथं चैनमेकं प्रेक्षापूर्वकारिणोऽप्यनुविदध्युः ? केन वा चिह्नेनायमीदृशस्त्वया लोकोत्तरप्रज्ञेन प्रतारक इति निणीतः ?[१] ईदृशस्यैकस्य विप्रलम्भकस्य वशे इमे सर्वे पूर्वे परे च प्रेक्षापूर्वकारिणः स्थिताः, एष्वेकस्याप्ययं विवेको नोदमुदिनीदमप्यद्भुतम्। एवं सर्वैरपि समकण्ठं सम्मानितोऽपि स पुरुषो भवता सर्वदेशकालवेदिना सकलजनातिशायिशेमुषीसमृद्धेन विप्रलम्भकत्वेन विशेषतः साक्षादेवाध्यक्षित इत्यद्भुततरस्ते प्रभावः। किमेतावतोऽर्थकाम-बन्धुपरित्यागदुःखनिवहादप्यतिशयितं प्रतारणसुखम्, येन स वा तथा करिष्यति त्वं वा तादृशमनुमास्यसि। तथा च विश्वजनप्रवृत्त्यन्यथानुपपत्त्या सिद्धं यागादिकर्मणां स्वर्गादिफलकत्वम्। स च स्वर्गः—

**यन्नदुःखेन सम्भिन्नं न च ग्रस्तमनन्तरम्।**
**अभिलाषोपनीतञ्च तत्सुखं स्वपदास्पदम्।।**

इत्थं प्रकारेण परलोकसिद्धौ यागोत्तरभाविनः स्वर्गपर्यन्तस्थायिनोऽदृष्टा-त्मककारणस्यापि सिद्धिर्भवति। तदनु तदधिष्ठातृत्वेनेश्वरस्यापि सिद्धिः।

---

१. *न्यायकुसुमाञ्जलि - स्वोपज्ञः पृ. २४ (विस्तरः)*

तथा च स्मृतिः—**ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा ।**[१] इति । अन्ते च—

**सन्दिग्धे परलोकेस्मिन् कर्तव्यो धर्मसञ्चयः ।**
**नास्ति चेन्नास्ति का हानिरस्ति चेन्नास्तिको हतः ।। इति ।**

## यागादिःसाक्षान्न परलोकहेतुः

पञ्चतयी विप्रतिपत्तिषु मध्ये प्रथमविप्रतिपत्त्यन्तर्गता अवान्तरपञ्चविप्रतिपत्तयः सन्ति। तेषु मध्ये पञ्चमा अवान्तरविप्रतिरस्ति 'परलोकतत्साधनस्वीकारस्यावश्यकत्वेऽपि यागदानादेरेव तत्साधनत्वसम्भवेनात्मसमवेतादृष्टसद्भावे प्रमाणाभावादिति। अस्या विप्रतिपत्तेः भागद्वयम्, एकं दानाध्ययनादिदृष्टोपायेनैव परलोकरूपफलसम्भवे किमदृष्टेन। अपरञ्च कथञ्चिददृष्टस्य सिद्धावपि तस्याऽत्मसमवेतत्वे प्रमाणाभाव इति। तस्याऽत्मनिष्ठत्वसाधनाय 'प्रत्यात्मनियमाद् भुक्तेः' इति पञ्चमो हेतुरुक्तः ।

प्रथमं तावत् चार्वाकाः हि कार्यकारणभावं न स्वीकुर्वन्ति स्मः। परन्तु 'सापेक्षत्वाद्' अनादित्वाद् 'वैचित्याद्' 'विश्ववृत्तित' इति चतुर्भिः हेतुभिः कार्यकारणभावपुरस्सरं परलोकस्वर्गादिसिद्धौ सत्याम्, चार्वाकः पुनरपि शंकते यद् यागादिः साक्षादेव स्वर्गादिहेतुरस्तु किं यागादिव्यापारत्वेन अदृष्टकल्पनया प्रयोजनम्। अदृष्टासिद्धौ तदधिष्ठातृत्वेन परमेश्वरसिद्धिरपि न सम्भवतीति चेत् -

---

१. *महाभारतवनपर्वः ३०/२८*

**चिरध्वस्तं फलायालं न कर्माऽतिशयं विना' ।।[1] इति ।**

अर्थात् यागादेः - आशुतरविनाशित्वात् स्वर्गरूपफलस्य च कालन्तरभावित्वात् मध्ये व्यापारस्यावश्यकत्वात्। न हि बहोः कालात् प्रागेव ध्वस्तं कर्म यागजन्यस्वर्गादिफलानुकूलमदृष्टरूपं व्यापारं विना फलजनने समर्थम्। अतः सतः कारणात्कार्योत्पत्तिरिति न्यायेन स्वर्गप्राप्तिपर्यन्तस्थायी कश्चित् व्यापारो ज्योतिष्टोमादियागजन्यः स्वर्गरूप-कार्यस्य कारणत्वेनाऽवश्यमभ्युपगन्तव्यः। तथा चानुमानप्रयोगः 'चिरध्वंस्तयागादिकर्म स्वजन्यव्यापारवत्त्वसम्बन्धेन फलजनकं साक्षात्स-म्बन्धेन फलोत्पत्तिप्राक्क्षणावृत्तित्वे सति फलजनकत्वात्, स्मृतिजनकानु-भववदिति'। स च व्यापारः अदृष्टमिति अपूर्वमिति वा आख्यायते। न चापूर्वेणैव स्वर्गादिफलोपपत्तौ यागादेरन्यथासिद्धत्वमिति वाच्यम्, व्यापारेण व्यापारिणोऽन्यथासिद्धत्वाभावात्। ननु यागध्वंस एव यागादेर्व्यापारोऽस्तु किमतिरिक्तादृष्टकल्पनेन ? यागध्वंसस्य क्लृप्तत्वात्तत्र केवलं व्यापारत्वं कल्पनीयम्। अदृष्टपक्षे त्वतिरिक्तादृष्टपदार्थकल्पनं तत्र व्यापारत्वकल्पनञ्चेति गौरवमिति चेन्न, कारणस्य यागस्य, कारणाभावस्य यागध्वंसस्य च मिथो विरोधितया एकत्र स्वर्गे कारणत्वं नाप्नोति। अतो यागस्य कारणत्वेन, अदृष्टस्य च व्यापारत्वेन कारणत्वं स्वीकर्तव्यम्।

ननु यागध्वंसानन्तरमेव अदृष्टं उत्पद्यते तथा सति यागादृष्टयोरपि एकत्र कालेऽसत्त्वात् परस्परविरोधिनः कथं एकत्र स्वर्गे कारणत्वमाप्नोति। तथा सति यत्रोभय समो दोषः परिहारोपि तादृश इति

---

१. न्यायकुसुमाञ्जलि- कारिका १/९

चेत्। अस्तुतर्हि कारणत्वस्य भावत्वव्याप्यत्वनियमेन यागध्वंसस्य चाऽभावत्वेन तस्य यागव्यापाररूपकारणत्वं न सम्भवति। तदप्यसत् तादृशनियमस्याप्रयोजकत्वस्य भवता एव 'भावो यथा तथाऽभावकारणं कार्यवन्मत' इति व्याख्यानावसरे उक्तत्वात्। अस्तु तथापि यागध्वंसस्य कारणत्वे ध्वंसस्य साऽऽदररनन्तत्वेन ध्वंसाप्रतियोगित्वात् सर्वदा यागध्वंसरूपकारणस्य सत्त्वेन सर्वदैव स्वर्गमापद्येत। तथा सति 'क्षीणे पुण्ये मर्त्यलोकं विशन्ति' इत्यादिस्मृतेः का गतिः। अदृष्टस्य कारणत्वस्वीकारपक्षे तु चरमफलस्य स्वर्गस्यान्तिमभोगरूपस्याऽदृष्टात्मकधर्मनाशकत्वात् न सार्वदिकत्वापत्तिः। न च शुद्धयागध्वंसः स्वर्गं प्रति न कारणम् अपितु 'येन यागेन यावती स्वर्गे स्थितिः स्मृत्यादौ निश्चिता तादृशकालविशिष्टयाग-ध्वंसस्य स्वर्गं प्रति कारणत्वं स्वीक्रियते, तथा सति न सार्वदिकत्वापत्तिरिति वाच्यम्, सर्वत्र करणध्वंसस्य व्यापारत्वे सर्वाङ्गीणजलसंयोगरूपस्य गंगास्नानादेः सहस्रजलसंयोगध्वंसरूपव्यापारद्वारा स्वर्गहेतुत्वमपेक्ष्य लाघवात्तावत्संयोगानामेकमेवाऽदृष्टं द्वारं कल्प्यते। ननु करणध्वंसोऽदृष्टं वा व्यापार एव मास्तु-इति चेन्न, तथा सति चिरध्वस्तस्य स्नानादेरव्यवहितपूर्व-त्वाऽभावात् 'कार्याऽव्यवहितपूर्ववृत्तित्वरूपकारणलक्षणस्याभावात् स्नानादेरपि कारणत्वं न स्यादतः स्वर्गपर्यन्तस्थायी व्यापारः कल्पनीयः। अत्र यद्यप्यव्यवहितपूर्ववर्त्तित्वं हि चक्षुःसंयोगादेः कारणत्वेऽपि न सर्वत्र समवायिकारणे कार्यकालवृत्तित्वस्यावश्यकत्वम्, अतोऽव्यवहिताऽघटित-स्याऽन्यथासिद्धिशून्यत्वे सति नियतपूर्ववृत्तित्वस्य कारणलक्षणस्य वक्तव्यतया, तस्य च चिरध्वस्ते गंगास्नानादौ सत्वान्न कारणत्वानुपपत्तिः। तथापि यद्यदृष्टं न स्यात् तदा कर्मनाशजलस्पर्शकीर्तनभोगतत्त्वज्ञानादिना नाश्यत्वं धर्मस्य न स्यात्। तथा सति तन्नाश्यत्वबोधकवाक्यस्याऽप्रामाण्या-

पत्तिः स्यात्। अतोऽदृष्टं कल्पनीयम्। ननु 'यागादिरेव धर्मः'[१] इति शाबर-भाष्यानुरोधेन धर्माऽत्मकादृष्टपदेन यागादिरेव ग्राह्य इत्यपि वक्तुं न शक्यते कर्मनाशजलस्पर्शादिना यागस्य नाशो नहि कर्तुं शक्यः, नाशस्य पूर्वमेव जायमानत्वात्, न वा प्रतिबन्धः कर्तुं शक्यः, यागस्य तत्पूर्वमेव वृत्तित्वात्। तस्माद् यागादिक्रियाभिन्नमदृष्टं स्वीकर्तव्यमेव।[२] अत्र चार्वाकेण वक्तुं शक्यते यद् वेदाप्रामाण्यस्येष्टत्वाददृष्टात्मकव्यापारः न कल्पनीयः इति। तदप्यत्यन्तमसत् - सतः कारणात्कार्योत्पत्तिरिति सर्वजनानुभव-सिद्धस्य नियमस्य भङ्गापत्त्या, चिरविनष्टस्य गंगास्नानादेः कारणत्वा-सम्भवादतः फलपर्यन्तस्थायि किमपि कारणं कल्प्यते तदेवाऽदृष्टमिति। तादृशादृष्टबलेनैव सर्वोऽपि लोकः सुखं वा दुःखं वा प्राप्नोति, स्वर्गं नरकं वा भुङ्क्ते, सुन्दरमसुन्दरं वा शरीरमाप्नोति। अर्थाद् यत्र समवायसम्बन्धेन धर्मः सन्तिष्ठते तस्मिन्नात्मनि समवायसम्बन्धेन सुखमुत्पद्यते। यत्र च समवायेनाऽधर्म तिष्ठते। तत्र च समवायसम्बन्धेन दुःखमुत्पद्यते। तावेव धर्माऽधर्मौ अदृष्टशब्देन व्यवह्रियेत इति सिद्धमदृष्टम्।

## अदृष्टस्याधिकरणनिरूपणम्

सामान्यतया न्यायनये आत्मपदेन जीवात्म-परमात्मनोः बोधो भवति। तयोर्मध्ये जीवत्ममात्राधारौ धर्माधमौ, न तु ईश्वराधारौ तद्गुणत्वा-भावात्, अवच्छेदकतासम्बन्धेन शरीरस्य, विहितनिषिद्धकर्मणोश्च

---

१. *शाबरभाष्यम् पृ० १८*

२. *न्यायसिद्धान्तमुक्तावली पृ० ४९६*

धर्माधर्मकारणतया ईश्वरे शरीरकर्माऽभावान्न धर्माधमाविति। अत एव मुक्तावल्यां विश्वनाथः 'जीववृत्तीत्विमौ गुणौ' एवम् 'इमौ तु वासनाजन्यौ'[१] इति। अर्थात् मिथ्याज्ञानजन्यो योऽसत्संस्कारो वासना तदात्मकनिमित्तकारणजन्यौ धर्माऽधमौ, ईश्वरे तु मिथ्याज्ञानाभावान्न वासना, वासनारूपकारणाभावान्न धर्माधर्मावुत्पद्येते। अत एव ज्ञानिकृतशुभाशुभकर्मणी न धर्माधर्मोत्पादनसमर्थे, तत्र वासनारूपसहकारिकारणाभावात्। तथा च मिथ्याज्ञानविशिष्टजीवात्मनि एव अदृष्टमुत्पद्यते न तु परमेश्वरे, अदृष्टादिरूपकारणाभावादेव परमात्मनि न सुखदुःखाद्युत्पत्तिरिति।

## अदृष्टस्य भोग्यनिष्ठत्वनिरासः

त्रिविधशक्तिषु मध्ये सहजशक्तेर्निरासः पूवमेव कृतः, अधुना आधेयशक्तिर्विविच्यते। आधेयशक्तिर्नामप्रोक्षणादिजन्या व्रीह्यादिनिष्ठा, कामिनीचरणाघातजन्या अशोकादिनिष्ठा, कांस्यपात्रादौ भस्मसंयोगादिजन्या शुद्धिपर्याया। उत्पन्ने समवायिनि मन्त्राद्यधीनत्वमाधेयत्वम्। सा च शक्तिः द्रव्यगुणकर्मनिष्ठा, तदुक्तं मानमेयोदये—

**शक्तित्वसामान्यवतीं द्रव्यकर्मगुणाश्रयाम्।**
**श्रुत्यर्थापत्तिविज्ञेयां शक्तिमाहुः कुमारिलः।।**

सा तु लौकिकवैदिकभेदेन द्विविधा। तत्राद्या पुनरर्थापत्तिगम्या, यथा अग्न्यादीनां दाहकत्वशक्तिः। अन्या तु चोदनैकगम्या, यथा यागादीनां स्वर्गादिसाधनत्वशक्तिः। तत्राग्न्यादीनां दाहकत्वशक्तिर्द्रव्यगता। हिंसादीनां

---

१. न्यायसिद्धान्तमुक्तावली - कारिका १६३-१६४

नरकपातसाधकत्वशक्तिः कर्मगता। 'वायव्यं श्वेतमालभेत भूतिकामः' इत्यादिषु श्वेतत्वादिगुणविशिष्टस्यैव द्रव्यस्य भूतिसाधनत्वश्रवणात्। गुणगतोऽपि कोऽप्यतिशयः कल्पनीयः। स एव गुणगता शक्तिरित्युच्यते'[1] इति। अतः भाट्टमते शक्तिः द्रव्येऽपि तिष्ठति। द्रव्यगतशक्तिं दृष्टान्तीकृत्य अदृष्टस्य भोग्यनिष्ठत्वसाधनाय शङ्कते—नन्वदृष्टसिद्धावपि यागकर्तुः पुरुषविशेषस्य स्वर्गरूपसुखविशेषसाक्षात्कारात्मकभोगं प्रति शरीरेन्द्रिय-स्रक्चन्दनादिविशेषा एव हेतवो भवन्ति, अतस्तेष्वेव यागजन्योऽदृष्टरूपः संस्कारविशेषः स्वीकार्यस्तस्यैव स्वर्गजनकत्वसम्भवे आत्मनिष्ठादृष्ट-कल्पनमनुचितमिति चेदत्राचार्याः— **संभोगो निर्विशेषाणां न भूतैः संस्कृतैरपि।**[2] अर्थाद् भोग्यनिष्ठादृष्टस्वीकारे संस्कृतैरपि यागादिजन्याऽदृष्टरूपसंस्कारवद्भिरपि भूतैः स्रक्चन्दनवनितादिभिः निर्विशेषाणामदृष्टरूपविशेषगुणशून्यानामात्मनां प्रत्यात्मनियतः समीचीनो भोगो न सम्भवति। आत्मनो विभुत्वेन सर्वमूर्तसंयोगानुयोगित्वेन शरीरादीनां मूर्तद्रव्याणां सर्वात्मसंयुक्तत्वात्। तथा चादृष्टस्य भोग्यनिष्ठत्वे समवायसम्बन्धेन भोगं प्रति स्वाश्रयसंयुक्तत्वसम्बन्धेनाऽदृष्टं कारणमिति कार्यकारणभावो वाच्यः। स्वमदृष्टं तदाश्रया भोग्याः शरीरादयस्तत्संयुक्तत्वं सर्वेष्वात्मसु इति स्वाश्रयसंयुक्तत्वसमबन्धेनाऽदृष्टरूपकारणस्यात्ममात्रे सत्त्वात् पुरुषान्तरीयकर्मजन्यादृष्टेन पुरुषान्तरीय भोगापत्तिः। तत्तत्पुरुष-निवेशे त्वनन्तकार्यकारणभावकल्पनं स्यात्। अतः समवायसमबन्धेन भोगं प्रति समवायसम्बन्धेनाऽदृष्टं कारणमिति कार्यकारणभावः कल्पनीयः। न च यथा दाहानुकूलाशक्तिः वह्नौ अस्ति तथैव भोग्यसाधनस्रक्चन्दनवनितादिषु भोगजनकतावच्छेदिका शक्तिरस्तु इति वाच्यम्, वह्निनिष्ठा दाहानुकूलासहजशक्तेः पूर्वमेव निरासाद् दृष्टान्तासिद्ध्या दार्ष्टान्तासिद्धिः। अस्तु तर्हि आधेयशक्तिस्वीकारस्यावश्यकत्वेन तां दृष्टान्तीकृत्याऽदृष्टस्य

---

१. *मानमेयोदयः, पृ० २४६*

२. *न्यायकुसुमाञ्जलि-कारिका १/९*

भोग्यनिष्ठत्वसाधयितुं शक्यते। तथाहि 'व्रीहीन् प्रोक्षति व्रीहीनवहन्ति' इत्यत्र प्रोक्षणजन्यकालान्तरभाव्यवघातजनको व्यापारो व्रीहिनिष्ठः कल्प्यते 'प्रोक्षिता एव व्रीहयोऽवघाताय कल्पन्ते' इति वाक्यशेषात्'। अत्र प्रोक्षणादिना यदि व्रीह्यादौ संस्कारो न स्वीक्रियते तदा 'व्रीहीनवहन्ति' इत्यादिवाक्यविहिताऽवघातविधिकाले चिरध्वस्तस्य स्वरूपेणाऽवर्तमानस्य प्रोक्षणस्याऽप्रोक्षितव्रीह्यादिव्यावर्तकत्वासम्भवादप्रोक्षितानामपि व्रीहीणामवघातापत्तिः स्यात्प्रोक्षणविधिश्च व्यर्थो भवेत्। अत एवोक्तं पूर्वमीमांसायाम् 'प्रोक्षणाद्यतिशयस्य व्रीह्यादौ'[१] इति। तथा च प्रोक्षणादिजन्य आधेयशक्तिविशेषः संस्कारो भोग्यनिष्ठ इति सिद्धम्। तद्दृष्टान्तीकृत्य भोग्येष्वेव यागजन्यादृष्टं स्वीकार्यमिति पूर्वपक्षस्याशयः।

अत्र समाधानमिदं - प्रोक्षणादिभिः जायमानोऽतिशयविशेषोऽस्माभिरपि स्वीक्रियते। परन्तु तत्संस्कारः पुरुषनिष्ठ एव न तु भोग्यनिष्ठः। तत्र सकलव्रीहिनिष्ठ एक एव संस्कारो न सम्भवति, तथा सति एकव्रीहिनाशेऽपि आश्रयनाशेन संस्कारनाशापत्तेः, आश्रयनाशे आश्रितनाशस्यावश्यम्भावादतः प्रतिव्रीहिनानाशक्तिः कल्पनीया। तथा च प्रतिव्रीहिनानासंस्कारकल्पनापेक्षया पुरुषनिष्ठस्यैकस्यैव संस्कारस्य कल्पने लाघवात्। ननु पुरुषनिष्ठस्य संस्कारस्याऽवघातजनकत्वे तस्य स्वाश्रयसंयुक्तत्वसम्बन्धेनाऽप्रोक्षितेष्वपि व्रीहिषु सत्त्वात्तेषामप्यवघातापत्तिरिति चेन्न, स्वजनकप्रोक्षणजनकाभिप्रायविषयत्वरूपस्वरूपसम्बन्धेनाऽदृष्टस्याऽवघाते कारणत्वकल्पनात्, तेन च सम्बन्धेनाऽदृष्टस्य प्रोक्षितेष्वेव व्रीहिषु सत्त्वान्नाऽप्रोक्षितानां व्रीहीणामवघातापत्तिः। तथा सति 'संस्कृतो व्रीहिः' इति प्रतीतिरप्युपपद्यते। इत्थं प्रकारेण मीमांसकस्वीकृता आधेयशक्तिराचार्येण सविस्तारमस्मिन् न्यायकुसुमाञ्जलौ निरस्ता। तथा कृते तद्दृष्टान्तीकृत्या-

---

१. पूर्वमीमांसा २/१/४

ऽदृष्टस्य भोग्यनिष्ठत्वं साधयितुं न शक्यते। अतोऽदृष्टमात्मनिष्ठमेवेति।

## अदृष्टस्य बुद्धिनिष्ठत्वनिराकरणम्

सांख्या अदृष्टं स्वीकुर्वन्ति एव। एवञ्च तेऽपि न्यायमत इवाऽदृष्टस्य जगत्कारणत्वमङ्गीकुर्वन्ति जगद्वैचित्र्याय। यतोहि यद्यदृष्टस्य जगत्कारणत्वं न स्यात् तदा प्रकृतेर्नित्यत्वात् प्रकृतिस्वभावस्य चैकविधत्वाद् विचित्राणां कार्याणां समुपपत्तिर्न स्यात्। अतः प्रकृतिकार्य-वैचित्र्याददृष्टस्यापलापः कर्तुं नैव शक्यते। तदुक्तं सांख्यसूत्रे 'न धर्मापलापः प्रकृतिकार्यवैचित्र्यात्'[१] इति। एवं श्रुत्याऽनुमानेन चादृष्टस्य जगत्प्रति कारणतासिद्धो भवति।[२] परन्त्वस्यादृष्टस्याधिकरणं नात्मा बुद्धिनिष्ठत्वाद-दृष्टस्य। यत्रादृष्टं तत्रैव सुखादयः भोगा जायन्ते अतो बुद्धावेव ज्ञानसुखदुःखेच्छाद्वेषप्रयत्नधर्माधर्मश्चेत्यष्टौ गुणाः तिष्ठन्ति। पुरुषस्तु चेतनः सन्नपि भोक्तृत्वादिगुणरहित इति सांख्यनयः।

इत्थं प्रकारेण कृतिचैतन्ययोः वैयधिकरण्य प्रतिपादकः सांख्यसिद्धान्तोऽपि न समीचीनः। यतोहि—'शास्त्रदेशितं फलमनुष्ठातरि' इति न्यायेन ज्ञानेच्छाकृतिसमानाधिकरणावेव धर्माधर्मौ समानाधिकरणं भोगं जनयतः। समानाधिकरणयोरेव धर्माधर्मयोर्भोगनियामकत्वम्। चैतन्यवान् पुरुषः कर्तैव 'चेतनोऽहं करोमि' इति प्रतीत्या कृतिचैतन्ययोः सामानाधिकरण्येनाऽनुभवात्। ननु 'चेतनोऽहं करोमि' इति प्रत्ययो भ्रम एव, तस्य कर्तृभूतायामचेतनायां बुद्धौ चैतन्यप्रकारकत्वात्। बुद्धिपुरुषयोर्भेदा-

---

१. सांख्यसूत्रम् ५/२०

२. ,, ५/२१

ग्रहादचेतनायामपि बुद्धौ चैतन्यं भासते इति चेन्न, तस्य प्रमात्वे बाधकाभावात्। ननु 'बुद्धिरचेतना परिमाणित्वात् घटवदिति बुद्धावचेतनत्वसाधकमनुमानं 'चेतनोऽहं करोमि' इत्यनुभवस्य प्रमात्वे बाधकमिति चेत्, तर्हि 'बुद्धिर्न कर्त्री परिमाणित्वात् घटवत्' इत्यनुमानेन बुद्धौ स्वाभाविकं कर्तृत्वमपि न स्यात्। एवं बुद्धेरनित्यत्वे तत्र कर्तृत्वं न सम्भवति। कर्तुर्जन्यत्वे प्रमाणाभावात्। प्रत्युत 'वीतरागजन्मादर्शनात्'[१] इत्यतः कर्तुरनादित्वमेव सिद्ध्यति। वीतरागस्य रागरहितस्य जन्म न दृश्यते। अपितु सरागस्यैव जन्म। जातमात्रस्यैव प्रथमतः स्तन्यपानादौ प्रवृत्तिदर्शनेन तत्कारणं स्तन्यपाने रागोऽवश्यं स्वीकार्यः। स च राग इष्टसाधनताज्ञानजन्य उपायेच्छात्वात्। जातमात्रस्य स्तन्यपानादेरिष्टसाधनतानुभवजनकसामग्री नास्ति, ततस्तदिष्टसाधनता ज्ञानं स्मरणात्मकमेव स्वीकार्यं, तच्च स्मरणं संस्कारजन्यम्, स च संस्कारो जन्मान्तरोत्पन्न एव वाच्यः। एवं पूर्वपूर्वजन्मन्यपि स्वीकारे कर्तुरनादितायां पर्यवसानात्। तथा चाऽनित्या बुद्धिः न कर्त्री कर्तुः नित्यत्वस्यावश्यकत्वात्। 'चेतनोऽहं करोमि' इति प्रत्ययबलाद् कृतिचैतन्ययोः सामानाधिकरण्यस्याऽबाधितत्त्वाच्चेतनः कर्तैवेति सिद्धम्।
**अन्यथानपवर्गः स्यादसंसारोऽथवा ध्रुवः।**[२] कर्तुश्चेतनत्वमस्वीकृत्य निर्लेपस्य पुरुषस्य चैतन्यस्वीकारे बन्धमोक्षव्यवस्था न सम्भवति। तथाहि यदि बुद्धिर्नित्या तर्हि सर्वदा बुद्धिसम्बन्धसत्त्वान्मोक्ष एव न स्यात्। आत्मनो बुद्ध्युपधानस्यैव संसारत्वात्। यदि बुद्धिरनित्या तर्हि

---

१. *न्यायसूत्रम् ३/१/२५*

२. *न्यायकुसुमाञ्जलि कारिका १/१४*

पुरुषस्य निर्धमकत्वात् प्रकृतेरेकतयाऽनियामकत्वात् बुद्धेरेव तदानीमसत्त्वेन तन्निष्ठस्यादृष्टस्य नियामकत्वासम्भवादसंसारापत्तिः स्यात्। अतो नित्यचेतनकर्ता सिद्धौ तत्रैवाऽदृष्टं स्वीकर्तव्यम्। यो जानाति स एवेच्छति य इच्छति स एव यतते, यत्र कृतिः तत्रैवाऽदृष्टमिति सामानाधिकरण्यस्यानुभवसिद्धत्वाददृष्टमात्मनिष्ठमेवेति।

अस्तु तावददृष्टस्याधिकरणमात्मा, परन्त्वस्याऽदृष्टस्याऽधिष्ठाता नहि कश्चिच्चेतन आवश्यकः सांख्यनये। अत्र नास्ति कश्चिदेतादृशो नियमो यदचेतनं चेतनाधिष्ठितमेव कार्यसम्पादने क्षमं भवति, प्रकृतिरचेतनापि चेतनाधिष्ठातारं विनैव सर्गे प्रवृत्ता भवति। तदुक्तं सांख्यकारिकायाम्-'वत्सविवृद्धिनिमितं क्षीरस्य यथा प्रवृत्तिरज्ञस्य'[१] इति। तथैवाऽदृष्टमपि चेतनमधिष्ठातारं विनैव फलसम्पादने सक्षममस्ति। अतोऽत्र पक्षे नेश्वराधिष्ठिते फलसम्पत्तिः केवलेन कर्मणैव फलसम्पत्तिसिद्धत्वादीश्वरोऽन्यथासिद्धः।[२] अतोऽदृष्टाधिष्ठातृत्वेन परमेश्वरस्य सिद्धिः न सम्भवतीति सांख्याः।

अत्र नैयायिका अचेतनं चेतनाधिष्ठितं सत् कार्यं करोतीत्यत्र न किमपि बाधकम्। क्षीरस्य वृद्धिरपि चेतनाधिष्ठितमेव भवति। तदाहुरुद्योतकराचार्याः 'यदि क्षीरादि स्वतन्त्रं प्रवर्तेत, मृतेष्वपि प्रवर्तेत, न तु प्रवर्तत अतोऽवगम्यते बुद्धिमत्कारणाधिष्ठितं तदपि'[३] इति। अतोऽदृष्टस्याधिष्ठातृत्वेनेश्वरसिद्धिरिति।

---

१. सांख्यकारिका ५७

२. नेश्वराधिष्ठिते फलसम्पत्तिः कर्मणा तत्सिद्धेः। सांख्यसूत्रम् ५/२

३. न्यायवार्तिकम् ४/१/२१ पृ० १४७

## देहात्मवादनिराकरणम्

यद्यपि चार्वाका अदृष्टं न स्वीकुर्वन्ति तथापि सापेक्षत्वादिहेतुनाऽदृष्टसिद्धौ तस्याधिकरणनिरूपणावसरे पुनः प्रत्यवतिष्ठन्ते यत् - अस्तु तावद्दृष्टाधिकरणमात्मा किन्तु स आत्मा न नित्यः न च विभुः, अपितु शरीरमेवात्मा तदेव चाऽदृष्टाधिकरणमिति। अयमाशयः - यदि नित्यो विभुश्चेतनः कश्चित् भोक्ता स्यात्तदा एव प्रत्यात्मनियत-भोगोपपत्तयेऽदृष्टमात्मसमवेतमिति स्वीकर्तव्यं स्यात्। किन्तु तादृशे भोक्तरि प्रमाणाभावः। तथाहि चार्वाकाः प्रत्यक्षमेकमेव प्रमाणं स्वीकुर्वन्ति। तथा सति प्रत्यक्षसिद्धानि पृथिव्यप्तेजोवायुरिति भूतानि चत्वारि तत्त्वानि तेभ्य एव देहाकारपरिणतेभ्यः चैतन्यमुपजायत इति चार्वाकसिद्धान्तः। पृथिव्यादिजडेभ्यः कथं चैतन्युत्पद्यत इति शंकायाम् 'किण्वादिभ्यो मदशक्तिवत्' इति। तथाहि यथा अन्नगुडादौ मादकताभावेऽपि तेभ्यो यदा मद्यं निर्मीयते तदा तत्र मादकता प्राप्यते, एवञ्च पृथग्भूतेषु ताम्बूल-पूगीफलचूर्णेषु रागः कुत्रापि न दृश्यते, तथापि ताम्बूलपूगीफलचूर्णानां संयोगाद्राग उत्पद्यते। तथैव पृथिव्यादिभूतेभ्य एव देहाकारपरिणतेभ्यः चैतन्यमुपजायते, तेषु विनष्टेषु सत्सु स्वयं विनश्यति।[१] एतेषु आत्मा क इति प्रश्ने चार्वाकेष्वपि पूर्वापरयोर्मतभेदो दृश्यते, केचन इन्द्रियाण्येवात्मा, अपरे मन एवात्मा, केचित् प्राण एवामा, अन्ये चैतन्यविशिष्टदेह एवात्मा इति वदन्ति।

अतः ते हि भूतातिरिक्तत्वमात्मनो नाभ्युपगच्छन्ति। चार्वाकमते सर्वं भौतिकतत्त्वं चेतनं भवति, भौतिककणानां चैतन्यं स्फुटाऽस्फुटभेदेन

---

१. *सर्वदर्शनसंग्रह - चार्वाकमतम्*

द्विविधम्। तत्र भौतिककणसमष्टिरूपशरीरमेवात्मा। तदतिरिक्तः कश्चन चेतनस्वरूपः आत्मा नास्ति। यद्यपि चेतनताया घटे आत्मनि च विद्यमानतया जडचेतनस्वरूपयोः घटात्मनोरभेदप्रसङ्गः स्यात्। तथापि चैतन्यस्य स्फुटाऽस्फुटभेदेन द्वैविध्यात् शरीरानतिरिक्ते आत्मनि स्फुटचैतन्यस्य वर्तमानतया भवत्यात्मनि चैतन्यप्रतीतिः। घटपटादीनाञ्च-अस्फुटचैतन्यवत्त्वेन न तत्र चैतन्यवत्त्वं प्रतीयते। इत्थं प्रकारेण घटात्मनोर्भेदः सम्पादयितुं शक्यते। यथा अन्नेषु प्रतिकणं मादकताया विद्यमानत्वेऽपि यावत्कालपर्यन्तं जलगुडादिसम्मिश्रणेन पाकक्रिया न सम्पाद्यते तावत्तत्र मादकता स्फुटा न भवति। सम्पन्नायाञ्च पाकक्रियायां तत्र स्फुटा मादकतोत्पद्यते। उत्पन्नञ्च तद्द्रव्यं मद्यसंज्ञकं भवति। तथैवास्फुटचेतनवद्भिः पृथिव्यादिचतुर्भूतकणैः संहतापन्नैः स्फुटचेतनवच्छरीरमुत्पद्यते स्फुटचेतनावत्त्वाच्च शरीराऽभिन्नस्यात्मनः चेष्टावत्त्वम्। इत्थमेव च शरीरानतिरिक्ते आत्मनि स्फुटचैतन्यस्य विकसितवत्त्वेन तत्र भवति हिताऽहितप्राप्तिपरिहारानुकूला चेष्टा। अस्फुटचैतन्यवत्त्वेन घटपटादौ तादृशचेष्टा न जायते।

एवञ्च आत्मनः शरीरात्मकत्वे प्रत्यक्षमेव प्रमाणमस्ति। अत्र भवति 'अहं गौरः', 'अहं श्यामः', 'अहं स्थूलः' इति प्रत्यक्षप्रतीतिः। गौरत्वश्यामत्वस्थूलत्वादिकञ्च शरीर एव सम्भाव्यते न तु शरीरभिन्न आत्मनि। सुखदुःखादयोऽपि शारीरिकीमवस्थां परिवर्तयन्ति। तदुक्तं प्रकरणपञ्चिकायां 'न ह्यन्यगुणो गुणिनं विकर्तुमुत्सहते। विक्रियते हि शरीरं नानाविकारमुखप्रसादरोमहर्षादिभिः'[1] अतः 'अहं सुखी' इत्यादिप्रतीतिरपि

---

१. प्रकरणपञ्चिका पृ० १४७

शरीर एव प्रत्यक्षबलादङ्गीकर्तव्या। ममेदं शरीरमित्यादिप्रतीत्याऽपि शरीरभिन्न आत्मा न सिद्ध्यति। सैषा प्रतीतिः राहो शिरो मात्रत्वेऽपि 'राहोः शिरः' इति प्रतीतिवत् काल्पनिकी।[१] अतः चार्वाकैः शरीरभिन्नस्यात्मनोऽस्तित्वं नैव स्वीक्रियते।

मतमिदं समीचीनं न प्रतिभाति। यतो हि परमाणूनां चेतनत्वेनैव तन्निमित्तकस्य शरीरस्य चेतनसमष्टित्वमभ्युपेयं स्यात्। लोके विभिन्नानां चेतनानां मतैक्यं न दृश्यते कस्मिन्नपि विषये। अतः परमाणुकणसमष्टिरूपः चेतनो यद्यात्मा स्यात्तदा कुत्रापि निष्कम्पप्रवृत्तिर्न स्यात् सर्वे निश्चेष्टाः भवेयुः। यदा लोकें एकत्र दशसंख्याकानां जनानां चेतनानां समवधाने मतभेदो दृश्यते तदाऽनन्तपरमाणुस्वरूपचेतनसमष्टिस्वरूपात्मनः मतैम्यं नहि कथमपि सम्भवति। यदि समितिघटकानां चेतनानां मतभेदे संजाते तत्र प्रधानमतं निर्णायकं भवति, तथैवात्रापि स्यात् किञ्चित् प्रधानचेतनमिति चेत् तथा सति शरीरातिरिक्तस्य कस्यचन चेतनस्य स्वीकर्तव्यतया तस्यैव चेतनस्यात्मत्वमभ्युपेयताम्। तदनेनैव निर्वाहे अनन्तचेतनस्वीकारो निष्प्रयोजनकः।

एवम् - **शरीरस्य न चैतन्यं मृतेषु व्यभिचारतः।**[२]

चैतन्यं ज्ञानं समवायेन शरीरस्य गुण इति चार्वाकमतम्, समवायेन ज्ञानं प्रति शरीरं कारणमिति तन्मते कार्यकारणभावः, तत्र शरीरात्माककारण-

---

१. *शरीरं तु ममेत्येषां कल्पना राहुमूर्धवत् - न्यायमञ्जरी प्रमेय प्र० ५*

२. *न्यायसिद्धान्तमुक्तावली - कारिका ४८*

सत्त्वेऽपि कार्यस्य ज्ञानस्याऽसत्त्वात् भवति मृतशरीरे अन्वयव्यभिचारः। ननु यथा न्यायमते ज्ञानं प्रति आत्मा कारणमित्युक्ते मुक्तात्मनि व्यभिचारात्, ज्ञानं प्रति शरीरविशिष्टमनःसंयोगावच्छिन्नात्मा कारणमित्युच्यते, तर्हि मया चार्वाकेणापि ज्ञानं प्रति प्राणविशिष्टशरीरं कारणमिति निवेश्य व्यभिचारवारणं क्रियते इति चेत्, अत्राचार्याः—

**नान्यदृष्टं स्मरत्यन्यो नैकं भूतमपक्रमात्।**
**वासनासङ्क्रमो नास्ति न च गत्यन्तरं स्थिरे ।।**[1]

समानाधिकरणोऽनुभवः समानाधिकरणं संस्कारं जनयति। समानाधिकरणः संस्कारः समानाधिकरणं स्मरणं जनयतीति तावदविवादम्। अन्यैरनुभूतमन्यः न स्मरति । तथा च शरीरस्य चैतन्यस्वीकारे बाल्येऽनुभूतस्य यौवने स्मरणं न स्यात्। शरीराणामवयवोपचयापचयै-रुत्पादविनाशालित्वात् बालशरीरयुवशरीरयोर्भिन्नत्वमेव। बालशरीरेणा-नुभूतस्य युवशरीरेण स्मरणस्वीकारे चैत्रेणाऽनुभूतस्य मैत्रेण स्मरणापत्तेः। न च पूर्वशरीरमेवोपचयेन वर्द्धितं न तु शरीरान्तरोत्पत्तिः 'तदेवेदं शरीरम्' इति प्रत्यभिज्ञानादिति वाच्यम्। परिणामभेदेन द्रव्यभेदात्। पूर्वपरिमाणनाशे आश्रयनाशस्य हेतुत्वात्। न हि एकस्मिन्नेव द्रव्ये एकपरिमाणनाशं विना अपरपरिमाणोत्पत्तिः सम्भवति। 'तदेवेदं शरीरम्' इति प्रत्यभिज्ञानं तु 'तदेवेदमौषधम्' इत्यादिवत्साजात्यमवलम्ब्यैव जायते। ननु मृगमदवासनावासितवसन इव पूर्वपूर्वशरीरगतसंस्काराः उत्तरोत्तरशरीरे संक्रमिता भवन्ति, अतः कालान्तरे स्मरणं निराबाधमिति चेत्तर्हि मातृगत-

---

१. न्यायकुसुमाञ्जलि- कारिका १/१५

संस्कारस्य गर्भस्थे शिशौ सङ्क्रमात् मात्राऽनुभूतस्य तेनापि स्मरणप्रसङ्गः। न चोपादानेनाऽनुभूतमुपादेयेन कार्येण स्मर्यते, मातृपुत्रयोर्नोपादानोपादेयभावः, पुत्रं प्रति मातुर्निमित्तकारणत्वात् तथा च न मातृदृष्टं पुत्रः स्मर्तुमर्हति[१] इति वाच्यम्, क्षणिकतापक्षे पूर्वपरमाणुपुञ्जादुत्तरपरमाणुपुञ्जोत्पत्तिरिति भवतु उपादेये उपादानवासनासङ्क्रमः। अस्मदुभयसम्मते स्थिरपक्षे तु वस्तूनां क्षणिकत्वस्वीकाराभावात् परमाणूनामुपादानोपादेयभावासम्भवादुपादानपरमाणुपुञ्जानुभूतमुपादेयं स्मरतीति कल्पयितुं न शक्यते। स्थिरपक्षे करचरणादिशरीरस्योपादानं वाच्यं, तथा सति विच्छिन्ने करादौ तदनुभूतस्य स्मरणं न स्यात्, भवति च स्मरणमतः शरीरभिन्नमेव आत्मतत्त्वं स्वीकर्तव्यम्। एवं इन्द्रियस्वरूपमपि नात्मा। यतोहि इन्द्रियाणां प्रत्येकं चेतनत्वम्? सम्भूय वा? प्रत्येकपक्षे सर्वेषां स्वातन्त्रे कदाचिदनेकमत्ये विरुद्धक्रियाकर्तृकैस्तैः शरीरं विदीर्येत। सम्भूय पक्षे तथात्वे तु उपघाते कथं स्मृतिः। एवं **मनोऽपि न तथा ज्ञानाद्यनध्यक्षं तदा भवेत्'**[१] **इति**। अर्थाद् मनसोऽणुपरिमाणवत्त्वात्, प्रत्यक्षं प्रति च महत्परिमाणस्य कारणत्वात्, मनसि च महत्परिमाणाभावात् मनस एवाऽप्रत्यक्षत्वात् मन आत्मवादिमते मनोरूपात्मनि समवेतानां ज्ञान-सुखादिगुणानां 'मनसाऽहं जानामि' इत्याद्यनुभवसिद्धः प्रत्यक्षमेव न स्यादित्यापत्तिः। अतः शरीराद्यतिरिक्तः विभुरात्मा स्वीकर्तव्यः।

---

१. *न्यायसिद्धान्तमुक्तावली - कारिका ४९*

## अदृष्टमचेतनमेव

नैयायिकानां मते अचेतनमदृष्टं चेतनाधिष्ठातारं विना न प्रवर्तत अतस्तदधिष्ठाता परमेश्वरः कल्पनीयः। तथा चाऽयं प्रयोगः - 'अदृष्टं चेतनाधिष्ठितम् अचेतनत्वे सति फलजनकत्वात्' इति। परन्तु बौद्धाः (जैनाश्च) अदृष्टं चेतनमिति मन्यन्ते।[१] अदृष्टमेवात्र कर्मपदेनोच्यते। कर्म यदि स्वयमेव चेतनारूपं तदा परचेतनासाधकं निरर्थकमेव भवति। तदुक्तम् - 'कर्मचेच्चेतनारूपमस्ति तदा परचेतनासाधनं व्यर्थम्'[२] इति। अतोऽधर्मस्य धर्मस्य च फलं जीवः ईश्वरादृतेऽपि भोक्तुं समर्थोऽतः ईश्वरस्य कारणता नैवाङ्गीकरणीया जीवफलभोगं प्रति। तदुक्तम्—

**अधर्मस्य फलं भुङ्क्ते लोकः किं नेश्वराद्विना।**
**विनाऽपि यदि कस्तस्य कारणत्वं प्रकल्पयेत्।।** इति।

तस्मात् चेतनाऽदृष्टस्याऽधिष्ठातारं विनापि प्रवृतिः सम्भवात्, तदधिष्ठातृत्वेन कस्यचित् परमेश्वरस्यावश्यकता नास्ति। एवञ्च पूवोक्त-चेतनाधिष्ठितत्वसाधकानुमाने पक्षस्वरूपेऽदृष्टे अचेतनत्वरूपहेतुविशेषण-स्याऽसत्त्वाद् भवति विशेषणासिद्धिनामकस्वरूपासिद्धिरिति अदृष्टचेतन-वादिनामाशयः।

अत्रेदं तावच्चिन्तनीयं किमु सम्भवति अदृष्टस्य चेतनत्वं ?

---

१. *कर्मजं लोकवैचित्र्यं चेतनामानसं च तत्। अभिधर्मकोशः ४/१*

२. *प्रमाणवार्तिकालंकारः पृ० ८२*

तमिमं प्रश्नं समाधातुं प्रवर्त्तस्य प्रश्नोऽपरोऽयं जायते किं नाम चैतन्यम्? तत्र प्रायशः सर्वेऽपि दार्शनिकाः ज्ञानत्वं चैतन्यं ज्ञानं वा चैतन्यमित्यत्रान्तरं कल्पमाश्रयन्ते। तर्हि नैतादृशं चेतनत्वं सम्भवति अदृष्टस्य, तस्य ज्ञानात्मकत्वाभावात् ज्ञानाश्रयत्वाभावाच्च। तथा च यागोत्तरभावि स्वर्गपर्यन्तस्थायि अदृष्टं न ज्ञानस्वरूपं न वा ज्ञानाश्रयस्वरूपमतोऽदृष्टमचेतनमेव। तस्याचेतनत्वे तु पूवोक्तस्वरूपासिद्धिरपि नास्ति।

**अचेतनं चेतनाधिष्ठितं सदेव प्रवर्तते।**

अदृष्टपरमाण्वादीनामचेतनानां चेतनानधिष्ठितानां प्रवृत्त्यसम्भवात्। तेषामधिष्ठायकत्वेनापि परमेश्वरः सिद्ध्यति। अन्यथा चेतनानधिष्ठितस्याचेतनस्य प्रवृत्तिसम्भवेऽचेतनत्वं=जडत्वं व्याहतं भवति।अत एव श्रीमच्छङ्कराचार्यप्रभृतय; सांख्याभिमतं प्रकृतिसृष्टिवादं खण्डयितुमिममेवाक्षेपं प्रमुखतः प्रदर्शयन्ति यदचेतनायाः प्रकृतेः चेतनाधिष्ठातारं विना प्रवृत्तिर्न सम्भवति।[१] अचेतनस्य चेतनानधिष्ठितस्यापि प्रवृत्तिः सम्भवतीत्यत्र दृष्टान्तविधया यानि स्थलानि दर्श्यन्ते 'क्षीरस्य यथा प्रवृत्तिरज्ञस्य' इत्यादि स्थलानि, तानि स्थलान्यपि चेतनाधिष्ठितानि एवेति नैयायिकाः। तदुक्तमुद्योतकरेण 'यदि क्षीरादि स्वतन्त्रं प्रवर्तेत, मृतेष्वपि प्रवर्तेत, न तु प्रवर्तते अतोऽवगम्यते बुद्‌धिमत्कारणाधिष्ठितं तदपि। यावद् यावदचेतनं प्रवर्तते सर्वं तत् चेतनाधिष्ठितमिति'।[२] सांख्यबौद्धजैनमीमांसकादयः तानि स्थलानि चेतनानधिष्ठितान्येव स्वीकुर्वन्ति। किन्तु

---

१. *ब्रह्मसूत्रम्*

२. *न्यायवार्तिकम् पृ० १४७*

विभिन्नेषु स्थलेषु चेतनाधिष्ठितत्वे पक्षप्रतिपक्षयोर्मतसाम्यं दृश्यते। एतेन ज्ञायते यत् - चेतनाधिष्ठितस्याऽचेतनस्य प्रवृत्तिर्भवतीति निश्चितमेव वर्तते। परन्तु चेतनाधिष्ठितस्यैव भवतीति निश्चितं नास्ति संशयास्पदमेतत्। किन्तु नैतत् निश्चितमस्ति यदचेतनस्य चेतनानधिष्ठितस्यापि प्रवृत्तिर्भवति। अतः कुठारादाविव सर्वत्राचेतने चेतनाधिष्ठितस्य स्वीकारे युक्तियुक्तं लाघवञ्चेति मन्ये। तथा सति 'अचेतनस्य कारणस्य सचेतनाधिष्ठानेनैव कार्यजनकत्वम्' इति नियमो युधिष्ठिरः। एवञ्च न्यायवार्तिककारा उद्योतकरा युक्तिमपि प्रदर्शयन्ति - यदि चाधिष्ठातारं विना प्रधानपरमाण्वदृष्टानां प्रवृत्तिर्भवतीति स्वीक्रियते तदा सततमेव प्रवृत्त्या भवितव्यम्।[1] नहि सततं प्रवर्तन्ते प्रधानपरमाण्वदृष्टाः। अतोऽवश्यं चेतनेन केनचिदधिष्ठायकेन भवितव्यम्। स एवाऽधिष्ठाता भगवसन्नीश्वर इति। यदि पुनर्धर्माधर्माभ्यामेवाधिष्ठाताः परमाणवः प्रवर्तेरन्? न युक्तमेतदचेतनत्वात्, न हि किञ्चिदचेतनं स्वतन्त्रमधिष्ठायकं दृष्टमिति'। इति वदन्नग्रे उद्द्योतकरः 'तस्माद् बुद्धि-मत्कारणाधिष्ठिताः परमाणवः कर्माणि च प्रवर्तन्त' इति सिद्धान्तयति। अतस्तादृशबुद्धिमदधिष्ठाता एवेश्वरः। चेतनाधिष्ठितमेवाऽचेतनं प्रवर्तते इत्यत्रागमसंवादोऽप्यस्ति। तथाहि—

**यदा स देवो जागर्ति तदेदं चेष्टते जगत्।**
**यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति।।**[2]

---

१. परमाणवः प्रवर्तन्त इति सततं प्रवृत्त्या भवितव्यम्। न्यायवार्तिकम् पृ० १४६

२. मनुसंहिता १/५२

अत्र जागर्ति=सिसृक्षावान् भवति। जगत् परमाणुरूपं चेष्टते द्रव्यारम्भकसंयोगानुकूलक्रियावद् भवति। स्वपिति संजिहीर्षुर्भवति। सर्वं परमाणुसामान्यं, निमीलति द्रव्यारम्भकसंयोगानुकूलक्रियाशून्यं भवति। एवञ्च गीतायां भगवता -

**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।**
**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।।[1] इत्यादि।**

मया अध्यक्षेण अधिष्ठात्रा। प्रकृतिर्मूलकारणं परमाणुः। सचराचरं चरेण जङ्गमेन सह वर्तमानमचरं स्थावरमित्यर्थः। सूयते जनयति। अन्यत्रापि शक्तिं दर्शयति तपामीति। अहं तपामि आतपस्याऽहमेव कर्ता। अहं वर्षं निगृह्णामि अवग्रहो मदधीन एव। वर्षमुत्सृजामि-वर्षणमपि मदधीनमेव तथा च न केवलं प्रेरणायामहमधिष्ठाता, अपितु प्रतिरोधेऽपि इति प्रदर्शितवान्।

## जीवात्माऽदृष्टाधिष्ठाता भवितुं नार्हः

न च जीव एवाऽदृष्टपरमाण्वादीनामधिष्ठाता स्याद् अदृष्टाधिष्ठातृत्वेन परमेश्वरस्वीकारानावश्यक इति वाच्यम्, यद्यपि जीवात्मनि एव स्वकृतकर्मवशेनाऽदृष्टमुत्पद्यते तथापि जीवानामल्पज्ञत्वात् तत्राऽदृष्टस्य ज्ञानं न सम्भवति। तथा सत्यज्ञातस्याऽदृष्टस्याधिष्ठाता जीव कथं स्यात्। यदि जीवात्मा स्वतन्त्रः प्रवर्तते तदा दुःखं न कुर्यात्, नहि कश्चिदात्मा प्रतिकूलवेदनीयं दुःखमिच्छति।[1] भवति च दुःखमतः जीवात्मा

---

*१. श्रीमद्भगवद्गीता ९/१०*

*२. यदि पुरुषः स्वतन्त्रः प्रवर्तते, न दुःखं कुर्यात् ......। न्यायवार्तिकम् पृ० १४७*

नाऽदृष्टस्याधिष्ठाता। अतः सर्वज्ञः परमेश्वर एवाऽदृष्टस्याधिष्ठाता। तदाह—

**अज्ञो जन्तुरनीशोऽयमात्मनः सुखदुःखयोः।**
**ईश्वरप्रेरितो गच्छेत् स्वर्गं वा श्वभ्रमेव वा॥**[1]

अयं भावः—जनयतीति जन्तुः स्वनिष्ठकार्ये आधारतया जनकः, तेनेश्वरान्यद्रव्यमात्र लाभः। ईश्वरप्रेरणायामज्ञत्वमप्रयतमानत्वं च परमाण्वादिसाधारणौ हेतू दर्शितौ। आत्मनः स्वस्य सुखदुःखयोः प्रवृत्ति-निवृत्त्योः। सुखदुःखाभ्यां प्रवृत्तिनिवृत्ती लक्ष्येते, प्रवृत्तिनिवृत्त्योः सुखदुःख-ज्ञानाधीनत्वात्। अनीशोऽसमर्थः। ईश्वरप्रेरित ईश्वरप्रयत्नाधिष्ठितः स्वर्गमिष्टं श्वभ्रमनिष्टं गच्छेत् प्राप्नोति। स्वर्गश्वभ्रे इष्टानिष्टोपलक्षणे। तथा चाऽदृष्टाधिष्ठातृत्वेन भवतीश्वरसिद्धिरिति दिक्।

**

---

१. महाभारत - वनपर्वः ३०/२८

# द्वितीयोऽध्यायः

मङ्गलाचरणम्

कारं कारमलौकिकाद्भुतमयं मायावशात् संहरन्
हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति ।
तं देवं निरवग्रहस्फुरदभिध्यानानुभावं भवं
विश्वासैकभुवं शिवं प्रति नमन् भूयासमन्तेष्वपि ॥

## वेदकर्तृत्वेनेश्वरसिद्धिः

# द्वितीयोऽध्यायः

मुख्यतो नैयायिकाः त्रिभिः हेतुभिरीश्वरं साधयन्ति। जगत्कारणत्वेन, अदृष्टाधिष्ठातृत्वेन, वेदप्रणेतृत्वेन च। एतावत्पर्यन्तम् 'अलौकिकस्य परलोकसाधन-स्याभावात्' इति प्रथमविप्रतिपत्तिनिराकरणपूर्वकमदृष्टसिद्धिः, तदधिष्ठातृत्वेन परमेश्वरस्य सिद्धिश्च सञ्जाते। इदानीं द्वितीयविप्रतिपत्तिनिराकरणपूर्वकं वेदप्रणेतृत्वेनेश्वरं साधयामि।

तत्र हि द्वितीयविप्रतिपत्तेराकृतिरियम् **'अन्यथापि परलोकसाधनानुष्ठानसम्भवात्'** इति। तदर्थश्च-ईश्वराभावेऽपि नित्यनिर्दोषवेदमूलकत्वाङ्गीकारेण, वेदस्य कपिलादिकृतत्वस्वीकारेण वा परलोकसाधनयागाद्यनुष्ठानसम्भवादिति। इयं विप्रतिपत्तिः मीमांसकानाम्। अत्रापि द्वितीयविप्रतिपत्त्यन्तर्गता अवान्तरविप्रतिपत्तयः पञ्च सम्भवन्ति। तद्यथा—

(१) ज्ञानानां स्वतः प्रामाण्याङ्गीकारेण वेदप्रामाण्यसिद्धये तज्ज्ञप्तये वाऽऽप्तोक्तत्वस्यानपेक्षितत्वात्।

(२) अन्यत्र सर्वत्र परतः प्रामाण्यसिद्धावपि वेदस्य नित्यत्वेन तत्प्रामाण्यस्य स्वतः सिद्धत्वात्।

(३) वेदप्रामाण्यज्ञप्तेश्च महाजनपरिग्रहबलादेव सम्भवात्।

(४) वेदस्याऽनित्यत्वेऽप्यनादौ संसारे प्रवाहाविच्छेदेन सर्वदा तत्स्थितिस्वीकारेण वेदप्रणेतृतयेश्वरसिद्धेरसम्भवात्।

(५) सृष्टिप्रलयावश्यकतया प्रवाहनित्यत्वस्याऽसम्भवेऽपि कपिलादिसर्वज्ञमहर्षिकृतत्वेनैव वेदप्रामाण्यसम्भवाच्चेति। अत्रान्तिमा विप्रतिपत्तिः साङ्ख्यानाम्। अन्या मीमांसकानाम्। आसां विप्रतिपत्तीनां निरासेनैव वेदकर्तृ-

त्वेनेश्वरः साधयितुं शक्यते।

## मीमांसकमते वेदकर्तृत्वादिरूपेण नेश्वरसिद्धिः

मीमांसादर्शनं पूर्वोत्तरभेदेन द्विधा विभज्यते, तद्यथा पूर्वमीमांसा, उत्तरमीमांसा चेति। तत्र पूर्वमीमांसापदेन धर्मविचारशास्त्रं बोध्यते, अथ चोत्तरमीमांसापदेन ब्रह्मविचारशास्त्रमवगम्यते। अत एव महर्षिजैमिनिना पूर्वमीमांसायाम् 'अथातो धर्मजिज्ञासा' इति। एवञ्च भगवता व्यासेनोत्तरमीमांसात्मके ब्रह्मसूत्रे 'अथातो ब्रह्मजिज्ञासा' इति सूत्रितम्। शाब्दिकव्युत्पत्तिबलेनापि मीमांसाशब्दः पूजार्थक 'मान्' धातोः जिज्ञासार्थे 'मानेर्जिज्ञासायाम्' इति वार्त्तिकसाहाय्येन सन्प्रत्यये कृते निष्पद्यते, अत एव मीमांसापदेन वेदार्थविचार-शास्त्रमुच्यते। पूर्वमीमांसादर्शने कर्मकाण्डीय-समस्तवेदवाक्यानां सम्यग्विचारो दृश्यते। एवं मीमांसादर्शनसूत्रकार-महर्षिजैमिनिप्रणीतानि द्वादशाध्यायेषु प्रविभक्तानि मीमांसासूत्राणि-अस्य दर्शनस्य मूलमस्ति। अस्य दर्शनस्य विस्तारकाः प्रमुखास्त्रय आचार्याः कुमारिलभट्टः, प्रभाकरः (गुरुः), मुरारिमिश्रश्चेति।

मीमांसादर्शनस्येश्वरविषयकः कः सिद्धान्तः ? विवादास्पदोऽयं प्रश्नः। पूर्वपरावलोकनेनास्य दर्शनस्य निरीश्वरवादित्वमेव स्फुटीभवति। यद्यपि केचन विद्वांसः केषाञ्चन सूत्राणामनुरोधन सेश्वरत्वं प्रतिपादयन्ति। परन्तु वस्तुतो मीमांसादर्शनस्य सेश्वरत्वं नहि स्वीकार्यम्। यतोहि— मीमांसादर्शनस्याचार्यैः कुमारिलादिभिः परमेश्वरः तीव्रेण वेगेन निरस्तः। जैमिनिः परमेश्वरं स्वीकरोति न वा, अत्रास्तु विवादस्यावसरः। किन्तु एतन्निर्विवादमेव विद्यते यज्जैमिनिसिद्धान्तेषु कुत्रचिदपि परमेश्वरावश्यकता नैवानुभूयते। मूलरूपेण मीमांसादर्शनं परमेश्वरविषये तादृशमेव ताटस्थ्यं

धारयति यादृशं ताटस्थ्यं बौद्धदर्शनं धारयति। बुद्धवज्जैमिनिरपि परमेश्वर-विषयिणीं चर्चां न करोति। मीमांसा-भाष्यकारः शबरस्वामी, कुमारिलभट्टः, प्रभाकरादयो दार्शनिकाः परमेश्वरविरोधिनीः युक्तीः प्रस्तुन्वन्ति।

यद्यपि कुमारिलभट्टः श्लोकवार्तिकमारभन्नादौ विश्वेश्वर-नमस्कारात्मकं मङ्गलमाचरति।

**विशुद्धज्ञानदेहाय त्रिवेदीदिव्यचक्षुषे।**
**श्रेयःप्राप्तिनिमित्ताय नमः सोमार्धधारिणे।।**[१] **इत्यादिना।**

तथापि तदर्थं न्यायरत्नाकरे पार्थसारथिमिश्रो यज्ञपक्षे प्रतिपादयति— 'विशुद्धं=मीमांसया संशोधितं ज्ञानमेव देहो यस्य। त्रिवेद्येव दिव्यं चक्षुः प्रकाशकं यस्य। सोमस्यार्धं स्थानं चमसादि तद्धारिण इति यज्ञपक्षेऽपि सङ्गच्छते'। एवमग्रेऽपि श्लोकवार्तिके न्यायाभिमतेश्वरस्य प्रबलं खण्डनमपि विदधाति। संसारप्रवाहस्यानादितया न जगत्कर्तृत्वमीश्वरस्य। एवमेव वेदानां नित्यत्वाद् वेदकर्तृत्वमपीश्वरस्य नास्तीति प्रतिपादयति। यदि परमेश्वरं स्वीकुर्वन्नपि नैयायिकाभिमताः युक्तीः खण्डयति चेत्, तदा तत्रैवानेन परमेश्वरास्तित्वं प्रतिपादनीयं भवति। किन्तु कुमारिलो नहि स्पष्टतः कुत्रचिदपीश्वरस्य समुल्लेखं करोति। परन्तु कुमारिलमार्गानुसारिणि मानमेयोदये 'सिद्धस्तार्किकेश्वरनिरासः' इत्युक्त्वा तदनन्तरम् 'वैदिकेश्वरः परमकारुणिकः पुनरस्माकमनुगुण एव'[२] इत्युक्त्वा वैदिकेश्वरस्य समर्थनं विधीयते। परन्तु मीमांसादर्शने परमेश्वरः पुरुषकृतकर्मणां फलान् न प्रददाति

---

१. *श्लोकवार्तिकस्य मङ्गलाचरणम्*

२. *मानमेयोदयः, पृ० १६४*

तर्हि कीदृशी चाश्येश्वरस्य करुणा ? नैतत् स्पष्टीभवति।

एवं प्रभाकरानुयायिनो भवनाथमिश्र-प्रभाकरविजयप्रणेतृनन्दीश्वरादयः स्पष्टत एतदुद्घोषयन्ति 'ईश्वरे परोक्तमेवानुमानं निरस्तं नेश्वरोऽपि निरस्त'[१] 'एवञ्चानुमानिकत्वमेवेश्वरस्य निराकृतम्। नेश्वरोपि निराकृतः। अत एव न प्रभाकरगुरुभिरीश्वरनिरासः कृतः'।[२] इति प्रतिपादयन्ति। सर्वमतसङ्ग्रहे कुमारिलप्रभाकरयोः समानतां प्रदर्शयता ग्रन्थकारनारायणेनोच्यते यदनयोरुभयोरपि मतेऽनुमितिसिद्ध ईश्वरो नास्ति, नास्ति च सृष्टिप्रलययोः सत्त्वम्, वेदानाञ्च स्वतः प्रामाण्यमस्ति तत् (वेद) सिद्धस्त्वीश्वरोऽनयोरुभयोरपि स्वीक्रियते[३] इति। परन्त्वेवं स्वीक्रियमाणेऽपि परमेश्वरे नहि किञ्चिद्व्यावहारिकं प्रयोजनम् सम्भवति। वेदानामपौरुषेयत्वात्, अदृष्टस्य च स्वयमेव फलदाने सामर्थ्यात्, सृष्टिप्रलययोः प्रमाणशून्यत्वात्, सर्जकतयाऽपि नेश्वरस्य किञ्चिद् व्यवहारिकं प्रयोजनम्। केवलं सैद्धान्तिकमेवास्तित्वं सम्भवतीश्वरस्यैवम् ? इत्यनेन ज्ञायते यत् परमेश्वरविषयेऽपूर्णोऽयं मीमांसकसिद्धान्तः। तत्पूर्णीकर्तुमर्वाचीनैरापदेववेङ्कटनाथप्रभृतिभिः स्पष्टत ईश्वरस्य स्वीकारः क्रियते। तथापि प्रमुखाचार्यैरीश्वरस्य विरोधे कृतपरिश्रमं दृष्ट्वा तेषामीश्वरानङ्गीकर्तृत्वमेव स्फुटति। अत एतद् वक्तुं शक्यते प्रमुखमीमांसकाः निरीश्वरवादिनः।

## वेदप्रामाण्यार्थमीश्वरस्यावश्यकता

मीमांसका हि वेदानुयायिनः कर्मकाण्डपराश्च सन्तोऽपि अनी-

---

१. *नयविवेकः पृ० १९९*

२. *प्रभाकरविजयः पृ० ८२-८३*

३. *सर्वमतसंग्रहः पृ० २७*

श्वरवादिनः, अनीश्वरवादपक्षे आम्नायस्य प्रामाण्यं नोपपद्यते[1] इति वेदप्रामाण्यमन्तरा वैदिकेषु कर्मसु प्रवृत्तिरपि नोपपद्यते, अतः कर्मकाण्डे प्रवृत्त्युपपादनार्थं वेदस्य प्रामाण्यम्। वेदस्योत्पत्त्यर्थं प्रामाण्यार्थञ्च ईश्वरोऽवश्यमभ्युपेय इति परलोकसाधनं यागादि-अनुष्ठानमीश्वरापेक्षमेवेति नैयायिकाः।

परन्तु मीमांसकाः 'ज्ञानानां स्वतः प्रामाण्याङ्गीकारेण वेदप्रामाण्यसिद्धये तज्ज्ञप्तये वा आप्तोक्तत्वस्यानपेक्षिततत्वम्' इति प्रतिपादयन्ति। तदुक्तं पूर्वपक्षरूपेण जयन्तभट्टेन—

**स्वतः प्रामाण्यसिद्धौ तु वेदे वक्त्रनपेक्षताम्।**
**वदामो न तु सर्वत्र पुरुषद्वेषिणो वयम्।।**
**अनपेक्षत्वमेवातो वेदप्रामाण्यकारकम्।।[2] इति।**

तदप्यसमीचीनम्—'प्रमायाः परतन्त्रत्वात्'। तथाहि—प्रमात्वविशिष्टस्य सर्वस्योत्पत्तौ ज्ञप्तौ च परतस्त्वम्। तत्र प्रमाया गुणजन्यत्वमुत्पत्तौ परतस्त्वम्। गुणस्य प्रमाजनकत्वमनुमानात् सिद्धम्। यथा 'प्रमा ज्ञानसामान्यकारणभिन्नकारणजन्या, ज्ञानजन्यत्वात्, अप्रमावत्' इत्यनुमानेन प्रमायां ज्ञानसामान्यकारणभिन्नकारणजन्यत्वं सिद्ध्यति। तच्च कारणं प्रमायां गुणः, अप्रमायां दोषः। ज्ञानसामान्यकारणमात्ममनः संयोगादि। ततो वेदजन्या शाब्दीप्रमा गुणजन्या प्रमात्वात् चाक्षुषप्रमावत्' इति सामान्यतोऽनुमानेन इतरबाधसहकाराद् वक्तृयथार्थज्ञानरूपगुणजन्यत्वे सिद्धे 'वेदजन्यशाब्दबोधजनकयथार्थ-

---

*१. तद्वचनादाम्नायस्य प्रामाण्यम्। वैशेषिकसूत्रम् १/१/३*

*२. न्यायमञ्जरी-प्रमाणप्रकरणम् पृ० १८८*

वाक्यार्थज्ञानम् आत्मसमवेतं ज्ञानत्वात्' इत्यनुमानेन इतरबाधसहकारादीश्वरसिद्धिः । तत्र—

**प्रत्यक्षे तु विशेष्येण विशेषणवता समम् ।**
**सन्निकर्षो गुणस्तु स्यादथ त्वनुमितौ पुनः ।।**
**पक्षे साध्यविशिष्टे तु परामर्शो गुणो भवेत् ।**
**शक्ये सादृश्यबुद्धिस्तु भवेदुपमितौ गुणः ।।**
**शाब्दबोधे योग्यतायास्तात्पर्यस्याथ वा प्रमा ।**
**गुणः स्यात् (भवति)[१] इति बोध्यम् ।।**

एवं ज्ञप्तावपि ज्ञानग्राहकातिरिक्तसामग्रीग्राह्यत्वात् परतस्त्वम्। तथाहि ज्ञानप्रामाण्यं स्वतो ग्राह्यं न सम्भवति। ज्ञानप्रामाण्यस्य स्वतो ग्राह्यत्वे ज्ञानग्रहणकाले ज्ञानत्वस्येव ज्ञानप्रामाण्यस्यापि गृहीतत्वाद् यथा इदं ज्ञानं न वेति संशयो न जायते तथा इदं जलमिति ज्ञानानन्तरमनभ्यासदशायां ममोत्पन्नं जलज्ञानं प्रमा न वेति संशयो न स्यात्। तत्र पूर्वं प्रमात्वस्य निश्चितत्वात्। निश्चयस्य संशयं प्रति प्रतिबन्धकत्वात्। यदि ज्ञानं न ज्ञातं तदा धर्मिज्ञानाभावात् कथं संशयः। तस्मादाप्तोक्तवाक्यजन्यत्वेन वेदार्थज्ञाने प्रमात्वमनुमातव्यम्। स चाप्तो वक्तृवाक्यार्थयथार्थधीरूपगुणवान्। तादृशगुणाधारतयेश्वरसिद्धिः।

## वेदानां पौरुषेयत्वसिद्धिः

अत्र मीमांसकाः प्रवदन्ति - सकर्तृकेषु लौकिकस्मृत्यादिवाक्येषु

---

१. न्या०सि०मु० - कारिका १३२-१३४

वाक्यार्थयथार्थज्ञानं गुणोऽस्तु, अकर्तृके च वेदे निर्दोषत्वमेव प्रामाण्यप्रयोजकमस्तु इति प्रतिपादयन्ति। वेदानां पौरुषेयत्वसिद्धिमन्तरा वेदकर्तृत्वेन परमेश्वरः साधयितुं न शक्यते। अतो वेदपौरुषेयत्वविषये विचार्यते।

'नास्तिको वेदनिन्दकः' इति वाक्यमनुश्रित्य जैनबौद्धचार्वाकाः नास्तिकदार्शनिकाः। ते तु वेदानां प्रामाण्यं नहि स्वीकुर्वन्ति। आस्तिकेषु दार्शनिकेष्वपि वेदस्वरूपविषये भिन्नता दरीदृश्यते यथा मीमांसकाः वेदानामपौरुषेयत्वमेवानुमोदयन्ति; नैयायिकास्तु वेदानां निर्माता परमेश्वर इति समर्थयन्ति। अतोऽत्र वेदः किं पौरुषेयोऽपौरुषेयो वेति विचिकित्सा जागर्ति सर्वेषां हृदि। विषयेऽस्मिन् बहवो भारतीया वेदशास्त्रमर्मज्ञा नैयायिकवैशेषिकप्रभृतय एवञ्चाऽर्वाचीनविद्वांसो वेदानां पौरुषेयत्वसाधने कृतसङ्कल्पा दरीदृश्यन्ते, परन्तु केचन मनीषिणो वेदानामपौरुषेयत्वसाधनेन स्वजीवनसाफल्यमामनन्ति।

वेदानां पौरुषेयत्वापौरुषेयत्वविषये या विचिकित्सा प्रसृता, सातिप्राचीना। यथाऽऽचार्यजैमिनिरपि पूर्वपक्षरूपेण वेदानां पौरुषेयत्वं समुपस्थापयन् सूत्रयामास - 'वेदांश्चैके सन्निकर्षः पुरुषाख्या'[१] इति। अस्य सूत्रस्यायं भावो यद्यथारामायणमहाभारतादि-ग्रन्थानां कर्तृरूपेण ग्रन्थकृतानां पुरुषाणां नाम आयाति। अनेनैव प्रकारेण वेदेऽपि तैत्तिरीयकाठकादिनाम-निर्देशाद् वेदानां पौरुषेयत्वं प्रसिद्ध्यतीति। ऋग्वेदसंहितायामपि यादृशं वर्णनमुपलभ्यते तेनेदं प्रतिभाति यद् वेदकर्तार ऋषय इति। तादृश-ऋषि-

---

१. जैमिनिसूत्रम् १/१/२७

कर्तृत्वं नैयायिका अपि न स्वीकुर्वन्ति। ऋषीणां तु वेदकर्तृत्वं केवलं प्रतिभात्येव, न खलु तद्यथार्थरूपेणावतिष्ठते। वेदेषु तावद् वेदकर्तृरूपेण वसिष्ठादि-ऋषीणां यद्वर्णनमुपलभ्यते, तद्वर्णनं प्रवचनात् प्रथितम्। इदमेवानुमोदयताचार्येण जैमिनिनापि 'आख्या प्रवचनात्'[१] इति सूत्रितम्। दिव्यदृष्टिसम्पन्नाः प्राक्तना ऋषयो वेदमन्त्रद्रष्टारो न तु कर्तार इत्यृग्वेदसंहितायां वर्णितमस्ति।[२] अयमृग्वेदीयविचारः सर्वैः स्वीक्रियते एव। परन्तु स्वीकारप्रकारश्च भिन्नः, नैयायिकानां मते वेदकर्ता परमेश्वरः, ऋषयस्तु द्रष्टारः, मीमांसकानां मते वेदकर्ता नास्ति, ऋषयस्तु द्रष्टार इति। अतो मीमांसकमतं खण्डनीयम्।

अत्रेदं बोध्यम्— मीमांसकानां वेदमीमांसाऽतीव विस्तृता। आचार्येण जैमिनिना स्वसूत्रेषु, शबरस्वामिना सूत्राणां भाष्ये, कुमारिलभट्टेन श्लोकवार्तिकेऽवान्तरकालिकैः ग्रन्थकारैश्चापि स्वग्रन्थे वेदानामपौरुषेयतैव युक्तिवैभवेन प्रतिपादिता। तेषु ग्रन्थेषु या युक्तयः प्रतिपादिता तेषु मध्ये प्रमुखाः तिस्रो युक्तयः प्राप्यन्ते। तदुक्तम् श्रीमज्जयन्तभट्टेन—

**वर्णानां चाविनाशित्वात्कथमीश्वरकार्यता।**
**सम्बन्धोऽपि न तत्कार्यः स हि शक्तिस्वभावकः।।**
**शब्दे वाचकशक्तिश्च नित्यैवाग्नाविवोष्णता।**
**रचना अपि वैदिक्यो नैताः पुरुषनिर्मिता।।**[३] इति।

---

१. *जैमिनिसूत्रम् १/१/३०*

२. *ऋग्वेदसंहिता ७/३३/७-१३*

३. *न्यायमञ्जरी पृ० १८८*

तथा च मीमांसका वेदानामपौरुषेयत्वसाधनाय (१) शब्दस्य नित्यत्वात्। (२) शब्दार्थयोः सम्बन्धस्य नित्यत्वात्। (३) वेदानां पुरुषकृतत्वाभावाच्चेति त्रीन् हेतून् प्रदर्शयन्ति तेषां खण्डनमत्र विधीयते।

## शब्दस्याऽनित्यत्वम्

मीमांसका हि शब्दस्य नित्यत्वं व्यवस्थापयन्ति, अन्यथा मीमांसकमते वेदस्य नित्यत्वेन दोषं प्रतिपादयति मानमेयोदये नारायणः—

**अनित्यत्वे हि शब्दानां शशशृङ्गप्रहारवत्।**
**शब्दात्मकानां वेदानां नित्यत्वं हास्यतां व्रजेत्।।**[१] **इति।**

एवञ्च शब्दस्य प्रामाण्यं तदेव सम्भवति यदा पदपदार्थयोः सम्बन्धोऽपौरुषेयः स्यात्, पदपदार्थयोश्च सम्बन्धोऽपौरुषेयस्तदैव सम्भवति यदा शब्दस्य नित्यत्वं स्यात्।[२] अतो वेदापौरुषेयत्वस्वीकर्तॄणां मीमांसकानां मते शब्दस्य नित्यत्वमनिच्छन्नपि स्वीकर्तव्यमेव।

महर्षिजैमिनिः शब्दस्य नित्यत्वे युक्तिमपि प्रदर्शयति। 'नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्'[१] इति। तदाशयं प्रकटयन् शबरस्वामी प्रवदति—

---

*१. मानमेयोदयः, पृ० २१८*

*२. अपौरुषेये सम्बन्धे शब्दः प्रामाण्य............। प्रकरणपंचिका, पृ० ३५३*

*३. जैमिनिसूत्रम् १/१/१८*

दर्शनं नामोच्चारणं तस्य परार्थत्वादिति। यदि शब्द उच्चरितमात्रं विनष्टो भवेत् तदाऽन्योऽन्यं प्रत्यर्थं प्रत्याययितुं समर्थो न भवेत्। एवमन्याऽपि युक्तिरस्ति शब्दस्य नित्यत्वसाधनाय तद्यथाऽनेकवारमुच्चारितेऽपि वर्णे प्रत्यभिज्ञा भवति स एवायं वर्णः। तथा प्रतीतिरपि भवति—'अष्टवार-मुच्चरितः गोशब्दः नाष्टौ गोशब्दाः' इति। यद्यस्याः प्रतीतेर्नैकेन वर्णेन सम्बन्धः स्यात् तदाऽस्याः प्रतीते भ्रमात्मकत्वमेव कल्पनीयं भविष्यति। अतोऽवगम्यते वारं वारमुच्चार्यमाणोऽपि नहि वर्णो भिद्यते। किन्तु एक एव वर्ण उच्चारणेनाभिव्यज्यते। प्रत्यभिज्ञापि भवति सोयं गकार इति।[१] अतः शब्दस्य नित्यत्वं व्यवस्थापयन् कुमारिलमतमाह मानमेयोदये—

**श्रोत्रमात्रेन्द्रियग्राह्यः शब्दशब्दत्वजातिमान्।**
**द्रव्यं सर्वगतो नित्यः कुमारिलमते मतः।। इति।**

प्रभाकरा अपि 'श्रोत्रग्राह्योऽम्बरगुणो नित्यो व्याप्यवृत्तिनित्यसमवायः'[२] इति वदन्तः शब्दस्य नित्यत्वमेव वर्णयन्ति। एवं पाणिनिनापि 'तदशिष्यं संज्ञाप्रमाणत्वात्'[३] इति सूत्रे शब्दस्य नित्यतायाः संकेतः कृतः। व्याकरण-महाभाष्येऽपि 'किं पुनर्नित्यः शब्दः, आहोस्वित्कार्यः ?'[४] इति वितर्क्य शब्दस्य नित्यत्वमेव संपादितम्। किं बहुना शब्दनित्यत्वविषये 'व्याडिकृतो लक्षश्लोकसंख्यो ग्रन्थ इति प्रसिद्धिः'[५] इति।

---

१. *मीमांसकसूत्रस्य शाबरभाष्यम् १/१/१९-२०*

२. *मानमेयोदयः पृ० ३००*

३. *पाणिनिसूत्रम् १/२/५३*

४. *व्या० महाभाष्यम् १/१/१, पृ० ५७*

५. *व्याकरणमहाभाष्यस्योद्योतटीकायाम् - पृ० ५८*

न्यायवैशेषिकमते शब्दोऽनित्यः। अस्मिन् प्रसङ्गे महर्षिकणादः 'अनित्यश्चायं कारणतः'[१] 'लिङ्गाच्चानित्यः शब्दः'[२] इत्यादिसूत्रैः शब्दस्यानित्यत्वं साधितवान्। महर्षिगौतमेनापि २/२/१३ इत्यतः २/२५८ सूत्रपर्यन्तं शब्दस्यानित्यत्वमेव साधितम्। सुतराम् तट्टीकाकारैरपि। इत्यनेन ज्ञायते शब्दस्य नित्यत्वविषये सुदृढेयं न्यायपरम्परा। तथा सत्यपि मीमांसकोक्तहेतूनां निरसनपूर्वकं किञ्चिदेवात्र विविच्यते। तथाहि—शब्दः अनित्यः, 'आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च'[३]। तत्र प्रथमो हेतुः आदिमत्वात्। आदिकारणमस्ति यस्यासौ आदिमान्, तस्य भाव आदिमत्वं तस्मात् सकारणकत्वात् शब्दोऽनित्यः। अथवा आदिमत्त्वात्=उत्पत्तिमत्त्वादनित्यः शब्दः। उत्पत्तिमतो भावस्यानित्यत्वनियमात्। जयन्तभट्टस्य विचारोऽयं यदादिमत्त्वकथनेन स्पष्टं दृश्यते यत् संयोगविभागादिः शब्दस्य कारकः न तु व्यञ्जकः। ननु शब्दस्य उत्पत्तिमत्वमसिद्धम् इति चेत् तर्हि द्वितीयो हेतु—ऐन्द्रियकत्वात्, इन्द्रियग्राह्यस्यानित्यत्वनियमाद् रूपादिवत् शब्दस्यापि-अनित्यत्वं सिद्धम्। ननु नायमपि नियमः सामान्यादौ व्यभिचारादत आह कृतकवदुपचारात्=अनित्यपदार्थसदृशत्वादिति। यथा 'तीव्रं दुःखं मन्दं दुःखम्' इत्यनित्यं दुःखमुपचर्यते तथा 'तीव्रः शब्दो मन्दः शब्दः' इत्युपचर्यते, एतादृशोपचारादनित्यत्वं सिद्धम्। तीव्रत्वादिधर्माणां नित्येष्वऽसम्भवादिति। ननु यथा घटो नष्टः, पटो नष्ट इति व्यवहारः जायते तथैव घटादिनाशे सति घटाकाशो नष्टः, पटाकाशो नष्ट इत्यपि उपचारो दृश्यते

---

१. २. वैशेषिकसूत्रम् २/२/२८, ३२

३. न्यायसूत्रम्० २/२/१३

एव। अतः कृतकवदुपचारात्' इति हेतुरपि नित्येषु व्यभिचरतीति चेन्न, मुख्यव्यवहारगौणव्यवहारयोर्भेदात्। तथाहि कपालसंयोगादिना घटो निर्मितः पश्चाच्च कपालसंयोगादिरूपकारणनाशे सति घटो नष्ट इति यो व्यवहारः स प्रामाणिकः। परन्तु आकाशस्य नित्यत्वाद् कारणाभावाच्च कस्य नाशादाकाशस्य नाशो भवेत्, अतो घटाकाशो नष्ट' इति व्यवहार औपचारिक एव। शब्दस्य तु 'कण्ठसंयोगादिजन्या वर्णास्ते कादयो मताः'[१] अथवा 'संयोगाद्विभागाच्च शब्दाच्च शब्दनिष्पत्तिः'[२] इत्यादिना कारणजन्यत्वसिद्धौ, जन्यभावस्य नित्यत्वासम्भवात्, उत्पन्नः को विनष्टः क इति व्यवहार सप्रामाणिकः। ननु स एवायं ककार इत्यादिप्रत्यभिज्ञानाच्छब्दानां नित्यत्वम्, इत्थं चोत्पादविनाशबुद्धिर्निष्प्रामाणिका इति चेत्, अत्रेदं बोध्यम्— 'उत्पन्नः को विनष्टः कः' इत्यपि व्यवहारो भवति एवञ्च 'स एवायं ककारः' इति व्यवहारोऽपि जायते, एतयोरन्यतरयोः व्यवहारयोः एक मिथ्या एव भवितव्याः, कस्य मिथ्यात्वमिति विषये स्पष्टवक्ताचार्यविश्वनाथः प्रवदति—

**सोऽयं क इति बुद्धिस्तु साजात्यमवलम्बते।**
**तदेवौषधमित्यादौ सजातीयेऽपि दर्शनात्।।**[३] इति।

एतेनैव मीमांसकोक्तः परार्थत्वादिति निरस्तः। सजातीय अन्यः शब्दोपि अर्थं प्रत्यापयितुं समर्थो भवति। एवं स एव गोशब्दो मयाऽष्टकृत्व उच्चारित इति धीस्तु मयाऽष्टकृत्वोऽभुक्तमितिप्रतीतेस्तुल्या।

**तस्मादनित्या एवेति वर्णाः सर्वे मतं हि नः।**[४]

---

१. ३. ४. न्या०सि०मु० १६५-१६८

२. वैशेषिकसूत्रम् २/२/३१

इत्थं प्रकारेण शब्दस्यानित्यत्वसिद्धौ शब्दराश्यात्मकवेदस्यापि अनित्यत्वं स्वीकर्तव्यमेव। अनित्यवेदस्य कोऽपि कर्ताऽऽवश्यकः स एव कर्ता भगवानीश्वरः।

## शब्दार्थयोः सम्बन्धस्य नित्यत्वेऽपि वेदः पौरुषेय एव

वेदानामपौरुषेयत्वसाधनाय मीमांसकैः द्वितीयहेतुरुक्तः 'शब्दार्थयो सम्बन्धस्य नित्यत्वात्' इति। शब्दार्थयोः सम्बन्धस्य नित्यत्वं प्रतिपादयन् महर्षिजैमिनिः सूत्रयति 'औत्पत्तिकस्तु शब्दस्यार्थेन सम्बन्धस्तस्य ज्ञानमुपदेशोऽव्यतिरेकश्चार्थेऽनुपलब्धे तत् प्रमाणं बादरायणस्यानपेक्षत्वात्'[१] इति। शबरस्वामी अस्य सूत्रस्य भाष्ये 'अपौरुषेय शब्दस्यार्थेन सम्बन्धः' इति सिद्धान्तयति। भर्तृहरिरपि 'नित्यः शब्दार्थसम्बन्धः' इति स्वकीये वाक्यपदीये प्रतिपादयति। अतः शब्दार्थयोः सम्बन्धस्य नित्यत्वाद् वेदानामपौरुषेयत्वमिति मीमांसकाः।

अत्र नैयायिकाः—को लाभः शब्दार्थयोः सम्बन्धस्य नित्यत्वप्रतिपादनेन, शब्दस्यानित्यत्वादेव शब्दात्मकवेदस्यापि-अनित्यत्वं प्रतिपादतिमेव, अस्मिन् मतेऽपि शब्दार्थयोः सम्बन्धो नित्य एव। तथाहि—अर्थस्मृत्यनुकूलपदपदार्थसम्बन्धो हि शक्तिः। 'सा चास्मात्पदादयमर्थो बोद्धव्य इतीश्वरेच्छारूपा'[२] इति। ईश्वरेच्छाया नित्यत्वात्, ईश्वरेच्छारूपशक्तेरपि नित्यत्वमेव। यथा घटरूपस्यानित्यत्वेऽपि घटरूपयोः

---

१. *मीमांसासत्रम् १/१/५*

२. *शक्तिवादः पृ० ५(विवृतिव्याख्या)*

सम्बन्धः समवायः स च नित्यो भवितुं शक्नोति तथैव शब्दात्मकवेदस्यानित्यत्वेऽपि शब्दार्थयोः सम्बन्धशक्तेः नित्यत्वं सम्भवत्येव ।

यदि 'तत्र शब्दार्थसम्बन्धं पौरुषेयं प्रचक्षते। जगदीश्वरनिर्माणं वदन्तो वेदवादिनः'[१] इत्यादितः पदपदार्थयोः पौरुषेयोऽनित्यसम्बन्धस्वीक्रियते तदापि सुतराम् वेदकर्तृत्वेनेश्वरसिद्धिः। अत एव प्रकरणपंचिकाया न्यायशुद्धिनामके नवमे प्रकरणे शालिकनाथो वदति, यत् शब्दस्य प्रामाण्यं तदैव सम्भवति यदा पदपदार्थयोः सम्बन्धोऽपौरुषेयः स्यात्, पदपदार्थयोश्च सम्बन्धोऽपौरुषेयस्तदैव सम्भवति यदा शब्दस्य नित्यत्वं स्यात्, अतः सम्बन्धे नित्यत्वसिद्धिपूर्वमेव शब्दस्य नित्यत्वं साधनीयम् अन्यथा सम्बन्धस्य कयापि रीत्या नित्यत्वं साधयितुं न शक्यते।[२] इत्यनेन ज्ञायते शब्दस्यानित्यत्वप्रतिपादनेनैव वेदानामपौरुषेयत्वसाधकः 'शब्दार्थयोः सम्बन्धस्य नित्यत्वात्' इति द्वितीयहेतुः निराकृतः। तथा च शब्दार्थयोः सम्बन्धस्य नित्यत्वे अनित्यत्वे वा वेदानां पौरुषेयत्वसिद्धौ न हि किमपि बाधकम्।

## वेदानामीश्वरकृतत्वम्

इदानीं पुरुषकृतत्वाभावरूपः तृतीयो हेतुः विविच्यते। मीमांसकाः वदन्ति यत्— 'तत्कर्त्रनुपलम्भेन स्यात् ततोऽपौरुषेयता'[३] इति। अर्थात् प्राक्तनैस्तत्तच्छास्त्राणां प्रवर्तकैः महर्षिभिर्वेदानां कोऽपि कर्ता न ज्ञात

---

१. प्रकरणपञ्चिका पृ० ३०

२. ,, पृ० ३५३

३. जैमिनिन्यायमाला १/१/८

इति प्रमाणैरवगम्यते। इदमेवोरीकृत्य मीमांसकैः प्राचीनैः सूत्रकारैरर्वाचीनैः कैश्चिद्भाष्यकारैश्च वेदानामपौरुषेयत्वमेव स्वीकृतम्। गुरुमुखश्रवणादनन्तरमेव वेदानामध्ययनं दृश्यते। अनेनैव प्रकारेण सर्वदाप्यध्ययनपरम्परा प्रचलिता। अत एव वार्तिककारो विस्पष्टयति—

**वेदस्याध्ययनं सर्वं गुर्वध्ययनपूर्वकम्।**
**वेदाध्ययनसामान्यादधुनाध्ययनं यथा।।[1] इति।**

अतः प्रवचनप्रयुक्तः काठकादिनामनिर्देशोऽपि न वेदानामपौरुषेयत्वं खण्डयति। तथाहि—'पुरुषकृतत्वं तावद्वेदानां साक्षाद्भारतादिवन्न स्मर्यते'[2] अतः कर्तुरनुपलम्भद् वेदानामपौरुषेयत्वम्। यदि स्यात् कर्ता तदा प्रत्यक्षादिप्रमाणैरुपलभ्येत। यद्दर्शनयोग्यमुपलम्भसामग्रीसत्वेऽपि नोपलभ्यते तन्नास्त्येवेति मन्तव्यम्, यथा शशशृङ्गादिकम्। न च चिरवृत्तित्वात् कर्ता नोपलभ्यते, नासत्वादिति वाच्यम्, तथात्वेऽपि तत्स्मरणस्यावश्यकत्वात्। तथा च वेदकर्तुःस्मरणाभावान्नास्त्येव कश्चिद्वेदकर्तेति।

केचन वेदानां पौरुषेयत्ववादिनः वदन्ति यद्—वेदानां कर्तृस्वीकरणे दौर्बल्यमापतिष्यति, अत एव भवद्भिस्तत्र दार्ढ्यसम्पादनाय वेदानां कर्तारं जानद्भिरपि स वेदकर्ता अपह्नुत इति कथनं सर्वथाऽनुभवविरुद्धम्। यतोहि धर्मभीरवो भारतीयाः पुरुषनिर्मितान् रामायणमहाभारतादीन्

---

१. श्लो०वा०, वाक्याधि० ३६६

२. प्रक०पं० पृ० २४६

ग्रन्थान् प्रति सुतरामादरं प्रकटयन्ति। पुरुषकृतमिति मत्वा न कुत्रापि दौर्बल्यं तत्रावलोक्यते। अनेनैव प्रकारेण यदि वेदानामपि कर्ता कोऽपि महापुरुषोऽलप्स्यत तर्हि नूनमेव सोऽपि वाल्मीकिव्यासादिवत् समादरमलप्स्यत।

न च घटकर्तृकुलालस्मरणवद् वेदकर्तृस्मरणे व्यवहारकर्तॄणां निष्प्रयोजना इति कर्तृविस्मरणमुपपद्यत एवेति वाच्यम्, वैषम्यात्। तथाहि—निष्प्रयोजनत्वात् कुलालविस्मरणमुपपद्यते, न तु तथा वेदकर्त्रादिस्मरणं निष्प्रयोजनं व्यवहाराणां तदधीनत्वात्। पाणिनेर्विस्मरणे आदैचां वृद्धिशब्देन व्यवहारो न सम्भवति। एवञ्च पिङ्गलस्य विस्मरणे 'सर्वगुरुर्मः' इति गुरुवर्णानां मशब्देन व्यवहारो न सम्भवति। अतो यः पदपदार्थसम्बन्धं करोति यश्च वेदं निर्माय तदध्ययनाध्यापनतदर्थयागोपासनज्ञानादिव्यवहारं प्रवर्तयति, न तस्य विस्मरणे व्यवहारः सम्भवति। तथा सति वेदस्य नित्यत्वं सर्वदोषरहितत्वं स्वीकर्तव्यम्। तथा च वेदकर्त्तुः स्मरणाभावान्नास्त्येव कश्चिद्वेदकर्तेति मीमासंकानामाशयः।

अत्र नैयायिकाः कर्तुस्स्मरणं न भवति इत्यस्य कोऽर्थः ? कर्तुः ज्ञानं नास्ति इत्यर्थः? स्मरणागोचरकर्तृकत्वमर्थो वा ? नाद्यः, 'तस्माद्यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे' 'त्रयो वेदा अजायन्त' इत्यादि वैदिकवाक्येन सह विरोधात्। नापि द्वितीयः, विकल्पासहत्वात्। तथाहि—किमेकेन स्मरणं विवक्ष्यते, उत सर्वाऽस्मरणम्? नाद्य मुक्तकश्लोकादौ व्यभिचारात्। न द्वितीयः, सर्वास्मरणस्यासर्वज्ञविज्ञानागोचरत्वात्।[1] गौतमादि

१. स०द०सं० पृ०२७१

शिष्यपरम्परया अस्मदादिना तु वेदकर्ता ईश्वर इति स्मर्यते एव। नहि भवतः प्रमादवशेन कस्यचिद् विस्मरणमात्रेण वस्तुनोऽभावः सिद्ध्यति। अन्यथा भवतः पितामहस्य पितामहविस्मरणेन तस्यापौरुषेयत्वं स्यात्। तत्र भवता यथानुमीयते तथैव अत्रापि वाक्यत्वहेतुना वेदानां पौरुषेयत्वं अनुमीयते। तथा चायं प्रयोगः वेदाः पौरुषेयाः वाक्यत्वात् महाभारतादिवदिति। ननु स्मर्यमाणकर्तृकत्वस्य उपाधित्वात् पूर्वोक्तानुमानेन पौरुषेयत्वसाधयितुं न शक्यते। तथाहि पक्षे वेदे साध्यस्य निश्चयो नास्ति किन्तु सन्देहः। वेदातिरिक्ते भारतादौ 'अष्टादशपुराणानां कर्ता सत्यवतीसुतः' इत्यादिप्रमाणबलेन कर्ता-उपलभ्यते न तु वेदे, तथा च भारतादौ पौरुषेयत्वस्य निश्चयात्, यत्र यत्र भारतादौ पौरुषेयत्वं तत्र तत्र स्मर्यमाण-कर्तृकत्वमस्तीति साध्यव्यापकत्वम्। यत्र यत्र च वेदे वाक्यत्वं तत्र तत्र न स्मर्यमाणकर्तृकत्वमिति साधनाव्यापकत्वम्, अतः स्मर्यमाणकर्तृकत्व-मुपाधिः, उपाधिना हेतौ स्वव्यभिचारेण साध्यव्यभिचारानुमानमुद्भाव्यते, यथा वाक्यत्वं पौरुषेयत्वव्यभिचारि, पौरुषेयत्वव्यापकस्मर्यमाणकर्तृकत्व-व्यभिचारित्वादिति। तथा च कथं 'वेदाः पौरुषेयाः' वाक्यत्वात्' इत्याद्यनुमानं साध्यसाधकं भवेदिति चेन्न, अत्र स्मर्यमाणकर्तृकत्वमुपाधिः नाशंकनीयः साधनाव्यापकत्वविरहात्, यतो गौतमादिमहर्षिभिः स्वशिष्यान् प्रति 'वेदकर्तेश्वर' इत्युपदेशात् तच्छिष्यपरम्परया वेदे ईश्वरकर्तृकत्वं सिद्ध्यतीति वेदेऽपि स्मर्यमाणकर्तृकत्वसत्त्वेन साधनाव्यापकत्वं तत्रोपलब्धं न तु साधनऽव्यापकत्वम्। तथा च स्मर्यमाणकर्तृकत्वमुपाधिरेव न भवति।[१]

एवमत्र जयन्तभट्टेन पञ्चविधानामपि हेत्वाभासानां निराकृतम्।

---

१. वेदः पौरुषेयः वाक्यसमूहत्वात् ..................। तर्कसंग्रहदीपिका पृ० १४३

तथाहि 'न तावदयमसिद्धो हेतुः 'शन्नो देवीरभीष्टये' इत्यादिषु वेदवाक्य-सन्दर्भेषु पदरचनायाः स्वरक्रमादिविशेषवत्याः प्रत्यक्षत्वेन पक्षे हेतोः वर्तमानत्वात्, नापि विरुद्धः कर्तृत्व(=पौरुषेयत्व)वति सपक्षे कुमार-सम्भवादौ रचनात्व(=वाक्यत्व)स्य विद्यमानत्वात्, नाप्यनैकान्तिकः कर्तृ-रहितेषु गगनादिषु, गगनकुसुमादिषु वा रचनाया अदृष्टत्वात्, नापि कालात्य-यापदिष्टः, प्रत्यक्षेणागमेन वा वेदे वक्त्रभावनिश्चयानुत्पादात्, नापि सत्प्रतिपक्षः प्रकरणचिन्ताहेतोः स्थाणुपुरुषविशेषानुपलब्धेरिव हेतुत्वेनानभि-धानात्,............ तस्मात्प्रयोजक एवायं हेतुः'[१] इति। अग्रे जयन्तभट्टेन हासपरिहासपूर्वकं वेदानां पौरुषेयत्वं संस्थापितम्। तथा च कुमारिलोक्ति-मनूद्य, 'मीमांसका यशः पिबन्तु पयो वा पिबन्तु बुद्धिजाड्यापनयनाय ब्राह्मीधृतं वा पिबन्तु वेदस्तु पुरुषप्रणीत एव नात्र भ्रान्तिः।'[२] एतेषां परिहासे मीमांसकानामप्युक्तिरेतादृशी तैरेवानुदिता—

**वेदा न पठिता यैस्तु त्वादृशैः कुण्ठबुद्धिभिः ।**
**कार्यत्वं ब्रुवते तेऽस्य रचनासाम्यमोहिताः ।।**[३] इति ।

एषां परस्परपरिहासविजल्पितादिकमपहाय वस्तुयाथा-थ्यावधारण एवास्माभिर्यतितव्यम्। अतो जगतोऽस्य रचयिता परमेश्वर एवास्यापि महनीयस्य शब्दराशेर्वेदात्मनः प्रणेता। तत्प्रणीतत्वादेव चास्याप्तप्रणीतत्वनिमित्तप्रामाण्यविश्रम्भादिकम्, अत एवोक्तं 'तद्वचनादा-म्नायस्य प्रामाण्यम्'[४] इति। अन्यथा प्रतारकवाक्यजातवत् को वात्र विश्वास-

---

१. न्या०म०पृ० २१३
२. तत्रैव पृ० २१६
३. तत्रैव पृ० २१६
४. वैशेषिकसूत्रम् १/१/३

मियात् प्रेक्षावान्। कश्च वा बुद्धिपूर्वकारी तदर्थानुष्ठाने बहुव्ययसाध्ये बह्वा-याससम्पाद्ये प्रवर्तेत। अत एव नैयायिका निखिलचराचरात्मकजगत्कर्तार-मेव सर्वज्ञं सर्वशक्तिमन्तं नित्यमेकं परमेश्वरं वेदानां कर्तारं मन्वते। तदुक्तम्—

**वेदस्य पुरुषः कर्ता नहि यादृशतादृशः ।**
**किन्तु त्रैलोक्यनिर्माणनिपुणः परमेश्वरः ।।**
**स देवः परमो ज्ञाता नित्यानन्दः कृपान्वितः ।**
**क्लेशकर्मविपाकादिपरामर्शविवर्जितः ।।**[१] इति ।

यद्यपि महर्षिगौतमेन स्पष्टतया वेदकर्तृरूपेणेश्वरस्य निर्देशो न कृतः। तथापि 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यम्, आप्तप्रामाण्यात्' इति सूत्रेण वेदकर्तृत्वेनेश्वरस्य संकेतः कृतः। अत एव तद्व्याख्यानावसरे भाष्यकारो वात्स्यायनो वेदार्थानां द्रष्टारः प्रवक्तारश्च साक्षात्कृतधर्माण आप्ता इत्यनुमोदयति। एवं वाचस्पतिमिश्रेण तात्पर्यटीकायामिदमनुमोदितं यत् परमकारुणिको जगत्कर्ता परमेश्वरः सृष्टिरचनां कृत्वा जराजन्ममरणपीडितानां मानवानां कल्याणार्थमुपदेशमकरोत्। ते एव परमेश्वरोपदेशाः वेदरूपाः सन्ति। जयन्तभट्टेनापि वाचस्पतिमिश्रस्यैव विचारणानुमोदिता।

वैशेषिकदर्शनमपि परमेश्वरो वेदकर्तेति समर्थयति। परमेश्वरस्य वचनाद् धर्मे प्रामाण्यं सिद्धमिति वैशेषिकसूत्रकारो महर्षिकणादोऽनुमोदयन् 'तद्वचनादाम्नायस्य प्रामाण्यम्'[२] इति प्रतिपादयति।

---

१. न्या०म०, पृ० १७५ (प्रमाणप्रकरणम्)

२. वै०सू० १/१/३

आचार्योदयेनापि अस्य सूत्रस्येयमेव व्याख्या कुर्वन् सर्वे वेदाः परमेश्वरस्यैव मुखन्निःसृताः, अत एव तेषां वेदानां धर्मे प्रामाण्यं दुर्निवारमित्युक्तम्। षष्ठे अध्यायेऽपि 'बुद्धिपूर्वा वाक्यकृतिर्वेदे'[१] 'बुद्धिपूर्वो ददाति'[२] इत्यादिसूत्रैः वेदानामीश्वरकर्तृत्वं पौरुषेयत्वं वा समर्थयता महर्षिणानुमोदितं यद् येन प्रकारेण लौकिकानां वाक्यानां रचना बुद्धिपूर्वकं विचार्य भवति, तेनैव प्रकारेण वेदानामपि रचना वेदार्थज्ञेन कृता। वेदार्थज्ञः परमेश्वरस्तु नित्यज्ञानसम्पन्नोऽप्रतिमसामर्थ्ययुक्तोऽन्तर्यामी जगत्कारणरूप एवास्ति। स एव शाश्वतधर्मगोप्ताऽव्यक्तोऽनन्तः परमेश्वरो वेदागमादिवक्तेति वैशेषिकनयः।

योगदर्शनेऽपि वेदानामीश्वरकर्तृत्वमेव प्रतिपादितम्। 'तत्र निरतिशयं सार्वज्ञबीजम्'[३] इत्यस्य योगसूत्रस्य व्याख्यानप्रसङ्गे योगसूत्रभाष्य-कारेण व्यासदेवेन समर्थितं यत् परमकारुणिकः परमेश्वरो भूतानामनुग्रहभावनयाऽज्ञानान्धकारनिमग्नानां मानवानां कृते धर्ममुपदिशति, यथा 'तस्यात्मानुग्रहाभावेऽपि भूतानुग्रहः प्रयोजनम्। 'ज्ञानधर्मोपदेशेन कल्पप्रलयमहाप्रलयेषु संसारिणः पुरुषानुद्धरिष्यामीति'[४]। योगवृत्तिकारो भोजदेवोऽपि परमेश्वरस्य कारुणिकत्वाद् वेदानामीश्वरकर्तृत्वमेवानुमोदयन् 'तस्य कारुणिकत्वाद् भूतानुग्रह एव प्रयोजनम्, कल्पप्रलयमहाप्रलयेषु निःशेषान् संसारिण उद्धरिष्यामीति तस्याध्यवसायः'[५] इति प्रतिपादयति।

---

१. वैशे०सू० ६/१/१

२. ,, ६/१/३

३. पात०यो०सू० १/२५

४. यो०भा० १/२५

५. पा०यो०सू० भोजवृत्तिस्त्र १/२५

वेदसम्प्रदायस्य प्रवर्तको महाप्रलयेऽपि स्वयं नित्य एव भवति। एवमुपर्युक्तेन वर्णनेन स्पष्टं यद् योगदर्शननयेऽपि वेदः परमेश्वरकृतः। स च परमेश्वरः नित्य इति।

## सर्गप्रलयव्यवस्थापनम्

वेदस्य ध्वंसप्रागभावाप्रतियोगित्वरूपनित्यत्वासम्भवेऽपि वेद-प्रवाहः कदापि नोच्छिद्यते, पूर्वपूर्वोच्चारणाधीनोच्चारणकृद्भिः पुरुषैः परम्परयोत्पाद्यत्वेन, अतः प्रवाहाविच्छेदरूपं नित्यत्वं वेदस्यसम्भवत्येव। तथाहि—यत्र ग्रन्थादौ ग्रन्थान्ते ग्रन्थस्यावान्तरप्रकरणे वा ग्रन्थकर्त्रा कर्तृत्वेन स्वनामोल्लेखः कृतस्तत्र पौरुषेयत्वे न कश्चिद्विवादः, यथा न्यायसिद्धान्तमुक्तावल्यादौ । यत्र च ग्रन्थकर्तारमारभ्य संप्रदायाविच्छेदेन गुरुपरम्परया कर्ता स्मर्यते तत्रापि न विवादः। यथा व्याकरणादिसूत्रेषु। यत्र च ग्रन्थकर्त्रा ग्रन्थे क्वापि कर्तृत्वेनस्वनामोल्लेखो न कृतः संप्रदायविच्छेदेन च कर्ता न स्मर्यते तत्र पौरुषेयत्वे संदेहाद्—ईश्वरकृतत्वमस्तु। परन्तु संप्रदायाविच्छेदेपि कर्ता न स्मर्यते तदा कर्तुस्मरणाभावस्य कारणं कर्तुरभाव एवावश्यं वाच्यः। इत्येवं वेदस्यापौरुषेयत्वं सिद्ध्यतीति मीमांसकानामाशयः। अतोऽत्र नैयायिकैः संप्रदायविच्छेदस्थापनाय प्रथमं लयो व्यवस्थाप्यते। प्रलयो नाम—सर्वभावकार्यध्वंसो महाप्रलयः। अत्राऽदृष्टादीनामपि नाशम्युपगमेन पुनः न सृष्टिरत एतादृश महाप्रलयं बहवो दार्शनिका न स्वीकुर्वन्ति। तदुक्तं सिद्धान्तलक्षणग्रन्थे 'महाप्रलये मानाभावात्'[१] इति। सर्वकार्य-द्रव्यध्वंसोऽवान्तरप्रलयः। अर्थाद् निखिलब्रह्माण्डानां युगपदेव सर्गान्तरो-

---

१. सि०ल० पृ० ६७

त्पादकादृष्टादिकं विहाय सर्वकार्यद्रव्याणां नाशः। एतादृशेऽवान्तरप्रलयेऽपि नहि सर्वेषामभिरुचिः, अत एव जगदीशः सिद्धान्तलक्षणे 'निखिलब्रह्माण्डानां युगवत् प्रलयानभ्युपगमेन ब्रह्माण्डान्तरवर्त्तिदुःखमादाय सद्धेतुरेव'[१] इति प्रतिपादयति। तस्मात् केषाञ्चन ब्रह्माण्डानां 'सर्वकार्यद्रव्यध्वंसः खण्डप्रलयः' इति अभ्युपगन्तव्यः। श्रीमदाचार्येणापि—एतादृश एव खण्डप्रलयः स्वीकृत इति मन्ये। अत एव 'ब्रह्माण्डान्तरवर्त्ति कपिल एवास्मिन् नूतने ब्रह्माण्डे आगत्य वेदान् उपदिशति तदर्थं नेश्वरस्यावश्यकता' इति सांख्योक्तदूषणम्, श्रीमदाचार्यैः- 'शक्तेरभावात् (भारतादि) वर्षान्तरसञ्चरणमेव हि दुष्करम्। कुतो लोकान्तरसञ्चारः? कुतस्तरां च ब्रह्माण्डान्तरगमनम्?'[२] इत्यादितः प्रकारान्तरेणैव वारितम्।

मीमांसका हि सर्गप्रलयौ क्वचिदपि न स्वीकुर्वन्ति। तदुक्तं मीमांसकशिरोमणिना कुमारिलेन 'प्रलयेऽपि प्रमाणं न सर्वोच्छेदात्मके नहि'[३] इति। शालिकनाथोऽपि प्रकरणपंचिकायां सर्गप्रलययोरस्वीकारे युक्तिं प्रदर्शयति। प्रलयाभावे च वेदोत्पादनार्थमीश्वरस्य न किमपि प्रयोजनम्, अत तत्रत्यान् हेतून् प्रदर्श्य, तन्निराकरणपूर्वकं प्रलयं साधयितुमाह हरिदास-भट्टाचार्यः प्रलये मानाभावादित्यादिना। तथाहि प्रलयबाधकान् अधोऽङ्कितान् हेतून् पूर्वपक्षी मीमांसकः प्रस्तौति।

(१) अहोरात्रः अहोरात्रपूर्वकः, अहोरात्रत्वात्, अद्यतनाहोरात्रवत्, अन्यथा

---

१. सि०ल० पृ० १००

२. न्या०कु० स्वोपज्ञ पृ० १४२ (विस्तरः)

३. श्लो०वा० पृ० ४६६

अद्यतनोऽप्यहोरात्रोऽहोरात्रपूर्वको न स्यात्, नियामकाभावादिति प्रलये प्रथमं बाधकम्।

(२) कर्मणां धर्माधर्माणां विषमोऽनेकः फलकालस्तेनैकस्मिन् भुक्तफले कर्मणि क्षीयमाणे कर्मान्तरं फलान्तरोत्पादनेनोपतिष्ठते इत्येककर्मिणः कियन्त्यपि कर्माणि युगपन्निरुद्धवृत्तीनि न सम्भन्तीति किमुतानन्तानां कर्मिणामनन्तानि कर्माणि, प्रलयेऽपि कस्यचित्कर्मणो विपाकावश्यं भावात्। तथा च प्रलयसाधनार्थं सर्वेषां प्राणिनामदृष्टस्य युगपद् वृत्तिनिरोधोऽपेक्षितः, स च न सम्भवतीति। प्रयोगश्च विवादाध्यासितानि कर्माणि न युगपन्निरुद्धवृत्तीनि विभिन्नकालीनभोगजनकत्वात्, इदानीं भुक्तभुज्यमानभोक्ष्यमाणकर्मवदिति प्रलये द्वितीयं बाधकम्।

(३) ब्राह्मणस्य ब्राह्मणपुत्रत्वनियमः स्वीकर्तव्यः। अन्यथा सर्गादौ ब्राह्मणादिजातिविशेषव्यवस्थापकस्योत्पादकब्राह्मणादिजातिविशेषस्याभावाद् ब्राह्मणादिवर्णव्यवस्था न स्यात्। पूर्वकालीना ब्राह्मणादयः ब्राह्मणादिव्यक्तिजन्याः, ब्राह्मणत्वाद् आधुनिकब्राह्मणवदिति[1] प्रलये तृतीयं बाधकम्।

(४) सर्गादौ सर्वेषामव्युत्पन्नत्वेन सङ्केतग्रहाभावे शब्दव्यवहारोऽपि लुप्येत। तथा चायं प्रयोगः - शाब्दव्यवहारो वृद्धव्यवहारपूर्वकः शाब्दव्यवहारत्वाद् अद्यतनशाब्दव्यवहारवत्। एवं कलासु विद्यासु नैपुण्यं पूर्वदर्शनसापेक्षं भवति सर्गादौ

---

*१. किञ्च यथाद्यतना जना मातापितृसंयोगनिमित्ताः - प्र०पं० ३०७*

तादृशस्य कस्यचिदादर्शकस्याभावात् तदुत्तरमपि कलादिनैपुण्येन घटादिनिर्माणसम्प्रदायो न स्यात्। प्रयोगश्च-घटादिनिष्पादनक्रियाविशेषो घटादिनिष्पादनक्रियान्तरपूर्वकः, निष्पादनक्रियात्वाद् अद्यतनघटादिनिष्पादनक्रियावत्।

एभिः चतुर्भिरनुमानैः प्रलयासम्भवस्य साधितत्वात् कथं वेदसम्प्रदायविच्छेदः स्यात्। तस्मात् प्रलयाविच्छेदरूपं नित्यत्वं वेदानां सम्भवत्येव इति मीमांसकाः।

अत्राचार्याः तान् हेतून् क्रमशः खण्डयितुमाहुः—

**वर्षादिवद्भवोपाधिर्वृत्तिरोधः सुषुप्तिवत्।**
**उद्भिद्वृश्चिकवद्वर्णा मायावत्समयादयः॥[१]**

(१) अर्थादुक्तेषु चतुर्षु हेतुषु मध्ये प्रथमो हेतुः नोचितः, यतोहि अहोरात्रपूर्वकत्वमात्रे साध्ये सिद्धसाधनम्। प्रलयपूर्वभा-व्यहोरात्रमादायापि प्रलयोत्तराहोरात्रे तत्पूर्वकत्वस्य सुवचत्वात्। यदि च अव्यवहिताहोरात्रपूर्वकत्वं साध्यं तर्हि अहोरात्रत्वहेतुरप्रयोजकः। तथाहि वर्षादिनम् अव्यवहितवर्षादिनपूर्वकं वर्षादिनत्वात् साम्प्रतिकवर्षादिनवद् इत्यनुमाने वर्षादिनसामान्ये वर्षादिनपूर्वकत्वनियमस्य वर्षाप्रथमदिने व्यभिचाराद् यथा भङ्गः, तथाऽत्रापि भङ्गसम्भवात्। तद्धि वर्षादिनं कर्कटसिंहान्यतरराश्यवच्छिन्नसूर्यस्य कालसंयोगरूपः। तथा सति कर्कटसिंहान्यतरराश्यवच्छिन्नरविकालपूर्वकत्वमुपाधिः। यत्र यत्र अव्यवहितवर्षादिनपूर्वकत्वरूपं साध्यं वर्तते, तत्र तत्र सर्वत्र वर्षाद्वितीयदिनादौ तादृशराश्यवच्छिन्नरविकाल-

---

१. न्या०कु० का० २/२

पूर्वकत्वं वर्तत एव। अत उपाधेः साध्यव्यापकत्वम्। एवं वर्षाप्रथमदिने वर्षादिनत्वरूपसाधनं वर्तते किन्तु तत्र तादृशराशिविशेषावच्छिन्नरविकाल-पूर्वकत्वरूप-उपाधेरसत्वाद् भवति साधनाव्यापकत्वम्। एवं सति वर्षादिनत्वरूपहेतु सोपाधिकत्वात् व्याप्यत्वसिद्धो नामा हेत्वाभास एव। एवं प्रकृतस्थलेऽपि संन्साराावच्छिन्नभवकालपूर्वकत्वमुपाधिः। यत्र यत्र अहोरात्र-पूर्वकत्वं साध्यं वर्तते तत्र तत्र सर्वत्र अव्यवहितभवकालपूर्वकत्वमस्ति, अतः साध्यव्यापकत्वम्। सर्गस्य प्रथमाहोरात्रे अहोरात्रत्वरूपसाधनसत्वेऽपि तत्राव्यवहितभवकालपूर्वकत्वरूपोपाधिः नास्ति, अपितु अव्यवहितप्रलय-कालपूर्वकत्वं वर्तते, अतः साधनाव्यापकत्वमपि। तथा च सोपाधिकत्वाद् नायं हेतुः अव्यवहिताहोरात्रपूर्वकत्वरूपसाध्यस्य साधकोऽतः प्रलयसिद्धौ न बाधकः।

(२) युगपत् सर्वप्राणिनामदृष्टस्य वृत्तिनिरोधे या अनुपपत्तिर्दर्शिता, सापि न युक्तियुक्ता। तथाहि - यथा सुषुप्तिकाले बहूनां प्राणिनां भोगजनकादृष्टस्य युगपद् वृत्तिनिरोधो भवति। तथैव क्वचित्काले समस्तात्मनां समस्तादृष्टस्य युगपद् वृत्तिनिरोधोऽपि नानुपपन्नस्तदिदमुक्तम् 'वृत्तिरोधः सुषुप्तिवत्' इति। यथाहि वातपित्तश्लेष्मणां चयप्रकोपप्रशमा न नियताः कदाचिद्धि कश्चित्कुप्यति शाम्यति वेति, न तु युगपत्सर्वेऽपि तदुक्तं वाहटेन—

**चयप्रकोपप्रशमा वायोर्ग्रीष्मादिषु त्रिषु।**
**वर्षादिषु च पित्तस्य श्लेष्मणः शरदादिषु।।**[१]

तत्रैकैकमात्रकोपे रोगः स्यात्। परन्तु कदाचित् त्रयाणां सन्निपातो युगपत्कोपः

---

१. न्या०कु० आलोकतः पृ० ३१०

स्यात् तदा देह एव प्रलीयते। तदाह वाहट:—

**रोगस्तु दोषवैषम्याद्दोषसाम्यमरोगता।**

**वात: पित्तं कफश्चेति त्रयो दोषा: समासत:।।**

**विकृता विकृता देहं घ्नन्ति ते वर्त्तयन्ति च'।।**[१]

तथैव ब्रह्माण्डात्मनो देहस्य, कालानल: पित्तं, संहारपवनो वात:, महार्णव: श्लेष्मेति, तेषां त्रयाणां युगपत्सन्निपाते तदपि प्रलीयते। तदा च युगपदेव भोगरहिताश्चेतना: भवन्तीति न कोपि विरोध:। तथा च प्रलयकाले सर्वेषामपि प्राणिनां युगपदेव वृत्तिनिरोध: सम्भवति।

(३)यश्च ब्राह्मणादिवर्णव्यवहार: प्रलये बाधको दर्शित:, तन्निराकरणाय 'उद्‌भिद्‌वृश्चिकवद् वर्णा:' इत्युक्तम्। उद्भित् शाकविशेषस्तस्य यथा तण्डुलकणात् शाकविशेषबीजाच्चोद्भव:, यथा वा वृश्चिकस्य गोमयजन्यत्वं वृश्चिकजन्यत्वञ्च। अथवा वह्नेर्वह्निपूर्वकत्वेऽपि आद्यो वह्निररणिजन्यस्तथा ब्राह्मणस्यापि कालविशेषे केवलाददृष्टविशेषादिदानीं च ब्राह्मणाद् ब्राह्मणस्योत्पत्ति: सम्भवति। तदुक्तं वैशेषिकसूत्रे 'धर्मविशेषाच्च'[२] इति तदर्थं विवृण्वन् शंकरमिश्र: 'अदृष्टवदात्मसंयोगादेव सर्गादौ परमाणूनां कर्म तेन च कर्मणा सम्भूय परमाणवो द्व्यणुकादिप्रक्रमेण अयोनिजं देव-ऋषीणां शरीरमारभन्ते' इति। न च ब्राह्मणस्य द्विविधकारणत्वे व्यभिचार इति वाच्यम्, वैजात्यस्य कार्यतावच्छेदकत्वान्न व्यभिचार:। ननु तर्हि 'अयं ब्रह्मणजन्यो ब्रह्मणत्वात्' इत्यनुमानस्य प्रथमे ब्राह्मणे व्यभिचार इति चेन्न, योनिजमात्रे तथाऽनुमानात्। तत्र हेतौ योनिजत्वे सतीति विशेषणान्न व्यभिचार:। ननु-इदानीमपि यथा गोमयाद् वृश्चिकाद्युत्पत्तिर्दृश्यते, तथा सजातीयनिरपेक्षा सर्गादाविव ब्राह्मणाद्युत्पत्तिरिदानीमपि स्यादिति चेन्न, यथा वर्षासु गोमयाद् भेक उत्पद्यत इति दृष्टम्, हेमन्ते तु गोमयाद् भेकोत्पत्तिर्न

---

१. न्या०कु० आलोकत: पृ० ३१०

२. वैशेषिकसूत्रोपस्कार: २/२/७, श्पृ० २९०

दृश्यते। अतस्तत्तत्कालस्यापि तथा तथा कार्यजनने कारणत्वेन तत्तत्कार्यस्य तदा तदा व्यवस्थिततत्वात्। तथैव तत्तत्कार्यविशेषत्वात् सजातीयनिरपेक्षा ब्रह्मणोत्पत्तिरिदानीं न सम्भवति - इति।

(४) विद्याकलादिनैपुण्यं पूर्वदर्शनसापेक्षं प्रलयाभ्युपगमे न स्यादिति बाधकमुपन्यस्तं तन्निराकरणायाह 'मायावत् समयादयः' इति। तथाहि यथा मायिकः काष्ठपुत्तलिकादिकं सूत्रसञ्चाराधिष्ठितं कृत्वा सर्वं कर्म कारयति। तथा सृष्ट्यादौ कर्तुमकर्तुं सर्वसमर्थ ईश्वरः, सर्वमपि विद्याकलादिकं शिक्षयति। अथवा परमेश्वरः सर्गादौ कुलालादिशरीरमुपादाय घटादिकं निर्मिमाणो घटादिनिर्माणसम्प्रदायं प्रवर्तयति। तथा च सर्गादौ एक एव परमेश्वरः प्रयोज्यवृद्धात्मना प्रयोजकवृद्धात्मना च नानाकायमधिष्ठाय प्रयोजकरूपः सन् वाचिकं व्यवहारं, प्रयोज्यरूपः सन् कायिकं व्यवहारं निवर्तयन्नव्युत्पन्नानां शक्तिं ग्राहयति। न च तथा सति परमेश्वरस्य कुलालत्वापत्तिरिति वाच्यम्। इष्टापत्तेः। तथा च श्रुतिः 'नमः कुलालेभ्यः कमरिभ्यश्च वो नमः' इति। अत प्रलये न किञ्चिदपि बाधकमिति। तथा सति वेदानां संप्रदायाविच्छेदरूपं नित्यत्वमपि न सम्भवति।

बाधकप्रमाणसत्त्वे साधकप्रमाणमकिञ्चित्करं भवत्यतः सर्ग-प्रलययोः मीमांसकोक्तबाधकहेतून् निराकृत्य इदानीं सर्गप्रलययोः साधनं क्रियते।

न्यायवैशेषिकाभिमतसर्गप्रलययोः रीतिरियम्— सर्गपूर्वं बद्धात्मनां सुखदुःखानुभवोत्पत्तये महेश्वरस्य कृतिसाध्यविषयिणी 'एकोऽहं बहु स्यां प्रजायेय' 'एकाकी न रमते स द्वितीयमैच्छत्' 'तदैक्षत बहु स्याम्' इत्यादिश्रुतिबोधिता सर्जनेच्छा जायते। तदनन्तरं सर्वेष्वात्मसु गता कुण्ठिताऽदृष्टात्मिका शक्तिः पुनः कार्योत्पादनाय समर्था भवति। अत्र यद्यपि ईश्वरेच्छा नित्या तथापि तत्तत्कालविशेषसहकारिप्राप्तौ कदाचित् संहारार्था

भवति। कदाचित् सृष्ट्यर्था भवति। यदा संहारार्था तदा तदनुरोधाददृष्टानां वृत्तिनिरोधः=कार्योत्पादाने औदासीन्यलक्षणो जायते। यदा त्वसौ सृष्ट्यर्था भवति तदा वृत्तिलाभः=स्वकार्यजननं प्रति व्यापारो भवति। तादृशकार्योत्पादनसमर्थोऽदृष्टवदात्मसंयोगात् पवनपरमाणुषु क्रियोत्पद्यते, एवं क्रियोत्पत्तौ तेषां पवनपरमाणूनां परस्परसंयोगा जायन्ते। तत्संयोगेभ्यश्च द्व्यणुकान्युत्पद्यन्ते। तदनु त्र्यणुकानीत्यनेन क्रमेण महान् वायुरुत्पद्यते। तदनन्तरमाप्येभ्यः परमाणुभ्यः, तेनैव द्व्यणुकादिक्रमेण महान् सलिलनिधिरुत्पद्यते। तदनन्तरं पार्थिवेभ्यः परमाणुभ्यस्तेनैव क्रमेण महापृथिवी उत्पद्यते। तदनन्तरं तैजसेभ्योऽणुभ्यो द्व्यणुकादिप्रक्रमेण महाँस्तेजोराशिरुत्पद्यते। एवं समुत्पन्नेषु चतुर्षु महाभूतेषु महेश्वरस्य संकल्पमात्रात् पार्थिवपरमाणुसहितेभ्यः तैजसेभ्यः परमाणुभ्यः हिरण्यमयात्मकं महत्पिण्डमुत्पद्यते। तस्मिन् पिण्डे चतुर्मुखिसर्वलोकपितामहं सर्वेषामेव लोकानामाद्यं पुरुषं समस्तैर्भुवनैः सहोत्पाद्य प्रजानां जनने विनियुङ्क्ते। स च महेश्वरेण विनियुक्तो ब्रह्मातिशयज्ञानवैराग्यैश्वर्यसम्पन्नः प्राणिनां कर्मविपाकं विदित्वा कर्मानुरूपाणि ज्ञानभोगायूंषि तान् सतान् प्रजापतीन् दक्षादीन् मनःसङ्कल्पप्रभावान् मनून्, देवान्, ऋषीन्, पितृगणान् एवं चतुरो वर्णान् मुखाद् ब्राह्मणान्, बाहुभ्यां क्षत्रियान्, ऊरुभ्यां वैश्यान्, पद्भ्यां शूद्रान्नुत्पादयति। तथा च श्रुतिः—

**ब्राह्मणोऽस्यमुखमासीद्बाहूराजन्यः कृतः।**
**ऊरूतदस्य यद्वैश्यः पद्भ्याम् शूद्रोऽजायत॥**[१]

एवं पशुपक्षिकीटादीन् सृष्ट्वाशयानुरूपैर्धर्मज्ञानवैराग्यैश्वर्यैः सम्यग् योजयतीति।

---

१. शु०यजु० ३१/११

एवं ब्राह्मेण मानेन वर्षशतान्ते अर्थादस्माकं पञ्चदश निमेषाः काष्ठा। त्रिंशति काष्ठाः कला। पञ्चदश कला नाडिका। त्रिंशत्कलो मुहूर्त्तः। त्रिंशन्मुहूर्त्तैरहोरात्रः। पञ्चदशाहोरात्राः पक्षः। द्वौ पक्षौ मासः। द्वौ मासावृतुः। षड्ऋतयो द्वादश मासाः संवत्सरः। ऋतुत्रयेणोत्तरायणम्, ऋतुत्रयेण च दक्षिणायनम्। उत्तरायणञ्च देवानां दिनम्, दक्षिणायञ्च देवानां रात्रिः। तथाभूताहोरात्रशतत्रयेण षष्ट्यधिकेन वर्षम्। द्वादशसहस्रैश्च वर्षैश्चतुर्युगम्। चतुर्युगसहस्रेण ब्रह्मणोदिनमेकम्।[1] इत्यनेन मानेन वर्षशतस्यान्तेऽवसाने, वर्त्तमानस्य ब्रह्मणोऽपवर्गकाले संसारे नानास्थानेषु भूयो भूयः शरीरादिपरिग्रहेण खिन्नानां गर्भवासादिविविधदुःखेन दुःखितानां प्राणिनाम्, कियत्कालं दुःखोपशमार्थम्, सकलभुवनपतेः महेश्वरस्य संहारेच्छा भवति। तदनन्तरं शरीरेन्द्रियमहाभूतोपनिबन्धकानां शरीरेन्द्रियमहाभूतारम्भकाणां सर्वेष्वात्मसु समवेतानामदृष्टानां वृत्तिनिरोधः जायते। तथा सत्यनागतानां शरीरेन्द्रियमहाभूतानामनुत्पत्तिः। उत्पन्नानाञ्च विनाशार्थं महेश्वरेच्छात्माणु-संयोगेभ्यः कर्माणि जायन्ते। तदनन्तरं शरीराणामिन्द्रियाणां ये पारम्पर्येण कारणभूता अणवस्तेषु विभागा भवन्ति। विभागेभ्यस्तेषामणूनां संयोगनिवृत्तिः। संयोगनिवृत्तौ सत्यां तेषामापरमाण्वन्तो विनाशः। तेषां शरीरेन्द्रियाणां द्व्यणुकादिविनाशप्रक्रमेण तावद्विनाशो यावत्परमाणुरिति। अत्रेदमपि बोध्यम्— असमवायिकारणनाशाद् द्व्यणुकनाशः समवायि-कारणनाशाद् त्र्यणुकनाश इति सम्प्रदायः। सर्वत्राऽसमवायिकारणनाशाद्-द्रव्यनाश इति नवीनाः।[2] ततः प्रविभक्ताः परमाणवोऽवतिष्ठन्ते धर्मा-धर्मभावनाख्यसंस्कारयुक्ताः जीवात्मानः तावत्कालपर्यन्तमवतिष्ठन्त इति।

---

१. न्यायकन्दली - पृ० १२३-१२४

२. तर्क०सं०दी० पृ०

ननु सर्गप्रलयसद्भावे किं प्रमाणमिति चेत् तर्हि 'धाता यथापूर्वमकल्पयत्' इत्यादिश्रुतिरेव सर्गप्रलयसद्भावे प्रमाणम्।

एवं तत्रानुमानप्रमाणमपि दर्शयितुमाहुः श्रीमदाचार्याः—

**जन्मसंस्कारविद्यादेः शक्तेः स्वाध्यायकर्मणोः ।**
**ह्रासदर्शनतो ह्रासः सम्प्रदायस्य मीयताम् ।।**[१] **इति ।**

अर्थात् वेदादिसम्प्रदायस्य ह्रासोऽनुमीयताम्। कुतः ? जन्मादेर्ह्रासदर्शनात्। प्रयोगश्च वेदादिसम्प्रदायोऽयम् अत्यन्तमुच्छिद्यते ह्रासमानत्वात् प्रदीपवत्। अत्र अत्यन्तोच्छेदः=स्वसजातीयानधिकरण-कालवृत्तिध्वंसप्रतियोगित्वम्। स्वं=वेदादिसम्प्रदायः, स्वसजातीयानधि-करणकालः=प्रलयकालः तद्वृत्तिध्वंसः वेदादिसम्प्रदायध्वंसः तत्प्रतियोगित्वं वेदादिसम्प्रदायस्य, ह्रासमानत्वादित्यस्य पूर्वपूर्वापेक्षया अपकृष्टत्वादित्यर्थः। तथाहि— पूर्वं मनःसङ्कल्पत एव प्रजा समभवन्, ततः पुत्रमात्रार्थित्व प्रयुक्तयागजन्याः, ततः कामवशात् 'ऋतौ भार्यामुपेयात्' इत्यादिशास्त्र-श्रद्धया ऋतुकालेऽवर्जनीयसन्निधिसम्भवाः, इदानीं पुनर्देशकालव्यक्ति-व्यवस्थामन्तरेणात्यन्तशास्त्रलङ्घिनां पशुधर्मादेव प्रायेणेति जन्मह्रासः। एवं पूर्वं चरुप्रभृतिषु संस्कारः, ततो गर्भे, ततो जननानन्तरम्, इदानीं कथञ्चिज्जातेषु लौकिकव्यवहारमाश्रित्य किञ्चिदेव इति संस्कारह्रासः।

एवं पूर्वं सहस्रशाखस्य चतुर्वेदस्याध्ययनं, ततोऽसम्पूर्णस्य,

---

१. न्या०कु० का० २/३

ततः षडङ्गस्य एकस्य, इदानीं तु क्वचिदेकस्याः शाखाया इत्यादिक्रमेण विद्याह्रासः। एवं 'विद्यादेः' इत्यादिना वृत्तिधर्मादिसङ्ग्रहः।

**ऋतुमुञ्छशिलं प्रोक्तममृतं स्यादयाचितम्।**
**मृतं तु याचितं भैक्ष्यं प्रमृतं कर्षणं स्मृतम्।।**
**सत्यानृतं तु वाणिज्यं कुशीदञ्च कलान्तरम्।।**[1]

तथा च पूर्वमुञ्छशिलवृत्तयो ब्राह्मणा आसन्, ततोऽयाचितवृत्तयः, ततः कृष्यादिवृत्तयः, सम्प्रति तु सेवा-वाणिज्य-कुशीद-कर्षणादिवृत्तयो भूयांस इति वृत्तिह्रासः।

एवं यज्ञशेषभुजः, ततोऽतिथिशेषभुजः, ततो भृत्यादिसहभुजः सम्प्रति स्वार्थसाधितभुजः। तदुक्तं गीतायां 'भुञ्जते ते त्वघं पापा ये पचन्त्यात्मकाराणात्'[2] इति। एवं पूर्वं दुःखेन ब्राह्मणा अतिथीनलभन्त, ततः क्षत्रिया-तिथयोऽपि, संवृत्ताः ततो वैश्यातिथयोऽपि, सम्प्रति शूद्रान्नभोजिनोऽपि। एवं पूर्वं तपो-ज्ञान-यज्ञ-दानात्मकचतुष्पाद् धर्म आसीत्, ततस्त्रेतायुगे तपोह्रासेन ज्ञान-यज्ञ-दानात्मकत्रिपात्, द्वापरे तु म्लायति ज्ञाने यज्ञदानात्मकद्विपात्, सम्प्रति तु जीर्यति यज्ञे दानैकपात्, सोऽपि पादो दूरागतादिविपादिकाशतदुःस्थोऽश्रद्धामलकलङ्कितः कामक्रोधादिकण्टकशतजर्जरः प्रत्यहमपचीयमानवीर्यतया इतस्ततः स्खलन्निवोपलभ्यत

---

१. न्या०कु० आमोदटीकातः २/३, पृ० ३१९

२. श्रीमद्०भ०गी० ३/१३

इत्यादिप्रकारेण धर्मह्रासः। स्वाध्यायस्याध्ययनस्य, कर्मणो यागादेः, शक्तेः सामर्थ्यस्य ह्रासः। अत्रोध्ययनशक्तेः कारणस्य ह्रासाद् विद्याशक्तेः कार्यस्य ह्रास इति पृथक् निर्देशः। एतेषां सर्वेषां ह्रासदर्शनाद् वेदादिसम्प्रदायोऽपि अवश्यमुच्छिद्यत एव, एवञ्च यथा कुपितकपोलपोलान्तर्गतोदुम्बरनाशे उदुरुम्बरान्तर्गतमशकसमूहनाशस्तथा ब्रह्माण्डनाशे तदन्तर्गतसकलप्राणिनां नाशोऽभ्युपेय एव इति प्रलयसिद्धिः। तथा सति पुनः सृष्ट्युत्पादनार्थं वेदोपदेशार्थं च ईश्वरोऽवश्यमभ्युपगन्तव्यः। इति।

## वेदप्रामाण्यविषये नास्तिकोक्तदोषाणां परिहारः

'नास्तिको वेदनिन्दकः' इति मनुवाक्यानुसारेण चार्वाकबौद्ध-जैनदार्शनिकाः नास्तिकपदवाच्याः। ते हि वेदानां प्रामाण्यं क्वचिदपि न स्वीकुर्वन्ति। तथापि वेदेषु छिद्रान्वेषणार्थं कृतभूरिपरिश्रमाः। अतस्तत्रोक्तानां दोषाणामत्र निवार्यते—

चार्वाकबौद्धजैनाः वेदानां पौरुषेयत्वं स्वीकुर्वन्ति परन्तु वेदानां प्रामाण्यं न स्वीकुर्वन्ति। कुतः ? अनृतव्याघातपुनरुक्तादिदोषदुष्टत्वात्। वेदे श्रूयते 'पुत्रकामः पुत्रेष्ट्या यजेत' इति। परन्तु पुत्रेष्टियागकरणेऽपि लोके पुत्रजन्म न दृश्यते। अतोऽनृतत्वं वेदवाक्यस्य, दृष्टार्थस्यानृतत्वदर्शनादेव 'अग्निहोत्रं जुहुयात् स्वर्गकामः' इत्यादिस्थल अदृष्टार्थकस्याप्यनृतत्वं स्फुटमेव। एवं विहितस्य व्याघातोऽपि दोषः—यथा 'उदिते होतव्यम्' 'अनुदिते होतव्यम्' 'समयाध्युषिते होतव्यम्' इति विधीयते, अनन्तरञ्च 'श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति' 'श्यावशबलावस्याहुति-मभ्यवहरतो यः समयाध्युषिते जुहोति' अत्र पूर्वापरवाक्यानां परस्परं

व्याघातः। व्याघाताच्च ज्ञायते यदन्यतरं मिथ्यैवेति। एवं पुनरुक्तदोषोऽपि दृश्यते वेदे 'त्रिःप्रथमामन्वाह त्रिरुत्तमाम्' इति पुनरुक्तदोष आपद्यते। पुनरुक्तञ्च प्रमत्तकथनं भवति।

एवमागमस्य पूर्वापरविरुद्धार्थप्रतिपादनत्वादसर्वज्ञप्रणीततत्व-मेवास्ति। तथाहि 'न हिंस्यात् सर्वभूतानि' इति प्रथममुक्त्वा 'अग्निषोमीयं पशुमालभेत' इत्यादिवाक्यैः हिंसाया विधानं क्रियते। 'नानृतं ब्रूयात्' इत्यतोऽनृतभाषणं निषिध्यानन्तरं 'न नर्मयुक्तं वचनं हिनस्ति' इत्यादि-वाक्यैरनृतभाषणे दोषाभावः प्रदर्श्यते। 'अपुत्रस्य गतिर्नास्ति' इत्युक्त्वाऽन्यत्र च 'अनेकानि सहस्राणि कुमारब्रह्मचारिणाम्' इत्यादितः ब्रह्मचारिणां स्वर्गगमनं प्रतिपाद्यते। तथा सति पूर्वापरविरोधात् कथमागमानां प्रामाण्यं स्यात्?[1] एवं विधाः दोषा आगमेषु विद्यन्तेऽतो वेदानामसर्वज्ञप्रणीतत्वं सिद्ध्यति न तु सर्वज्ञेश्वरप्रणीतत्वम्। सर्वज्ञेश्वरप्रणीतत्वे च कुत एवं विधा दोषाः सम्भाव्यन्ते।

येन केन प्रकारेण आगमानां प्रामाण्यस्वीकारे, अस्मद् शास्त्राणामपि प्रामाण्यं स्यात्। तदुक्तम्—'एतत् सर्वागमेषु समानम्'[2] इति। एवमागमस्य वर्णात्मकत्वेन ताल्वादिव्यापारजन्यत्वात् सशरीरस्यैव कस्यचित् शास्त्रकर्तृत्वं युक्तम्। ईश्वरस्य तु शरीरराहित्याच्छास्त्रकर्तृत्वं न सम्भवति।[3]

---

१. स्याद्वादमञ्जरी ३८/३९

२. तत्रैव ३७/२८

३. प्रमाणवार्तिकालंकारः पृ० २१

एवं रीत्या वेदप्रणेतृतयाऽपि नेश्वरसिद्धिः सम्भाव्यते, वेदानामप्रामाण्येन लौकिकाप्रामाणिकपुरुषप्रणीतत्वस्यैव निश्चयादिति चार्वाकबौद्धजैनानामाशयः।

अत्र नैयायिकाः—लोके सर्वोऽपि व्यवहारः शब्दाधीनमेव जायते। धर्मादीनामप्यवगम शब्दायत्त एव किं बहुना लौकिको वा पारमार्थिकः सर्वोऽपि व्यवहारः शब्दं विना न निर्वहति। उक्तञ्च भर्तृहरिणा—

**न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।**
**अनुविद्धमिव ज्ञानं सर्वं शब्देन भासते।।[१] इति।**

अतो लोकव्यवहारस्य शब्दाधीनतया आप्तोच्चरितसाकांक्षसयोग्यसासत्तिमत्पदसमूहात्मकवाक्यस्य प्रामाण्यं स्वीकार्यमेव, वेदस्यापि ईश्वररूपाप्तोच्चरिताकांक्षायोग्यतासत्तिमत्पदसमुदायतया तस्यापि प्रामाण्यं स्वीकार्यमेव।

यच्चोक्तं भवतानृतव्याघातपुनरुक्तदोषेभ्यो वेदानामप्रामाण्यं तदपि तुच्छमेव यतोहि तत्र कृतायामपि पुत्रकामेष्टौ यः पुत्रजन्माभावः स तु साधनानां कर्मणां वा वैकल्याद् दोषाद् भवति। भगवति श्रुतिस्तु साङ्गपुत्रकामेष्टौ कृतायामेव पुत्रप्राप्तिं प्रतिपादयति न तु विहिनाङ्गायां न वा विपरीताङ्गायामीष्टौ पुत्रस्य प्राप्तिरतो न वेदेऽनृतत्वं दोषः। तदाह महर्षि गौतमः 'न कर्मकर्तृसाधनवैगुण्यात्'[२] इति।

---

१. वा०प० १/१३१

२. न्यायसूत्रम् २/१/५८

एवं हवनप्रकरण उदिते होतव्यमित्यादौ श्यावः तस्याहुतिमभ्यहरतीत्यादिना व्याघातः प्रतिपादितः तदपि न, यतोहि हवनप्रकरणे अग्निहोत्रमुद्दिश्य 'उदिते होतव्यमित्यादिविहितं तदनन्तरञ्च श्यावः तस्याहुतिमभ्यवहरतीत्यादिदोषः प्रतिपादितः स तु स्वीकृतहोमकालस्य परित्याग एव दोष उक्त न तु स्वीकृतहोमसमये होमकरणे। तथा च तत्र उदितहोमकर्ता यद्यनुदिते समयाध्युषिते वा जुहोति चेत् तस्याहुतिं श्यावः हरति न तूदिते होमकरणे एवमन्यत्रापि ज्ञेयम्। तथा च न वेदे व्याघातो दोषः। अत एव 'अभ्युपेत्य कालभेदे दोषवचनात्'[१] इति महर्षिणा सूत्रितम्।

यच्चोक्तं त्रिःप्रथमामन्वाह त्रिरुत्तमामित्यत्र पुनरुक्तिदोषः तदप्यसंभव एव। यतोहि पुनरुक्तिदोषः निरर्थकस्थले एव न त्वनुवाद-स्थले त्रिःप्रथमामन्वाह त्रिरुत्तमामित्यत्र चाभ्यासस्यानुवादत्वमेवात एवाह महर्षिगौतमः 'अनुवादोपपत्तेः'[२] इति। अर्थात् पञ्चदशसामधेनीरन्वाहेत्यत्र श्रूयमाणं पञ्चदशत्वं सामधेनीनामेकादशसंख्याकानामृचां प्रथमान्त्ययोः त्रि-वाराभ्यासं विना नोपपद्यते इत्येतदर्थं 'त्रिःप्रथमामन्वाह त्रिरुत्तमाम्' इत्यनेन प्रथमान्त्ययोः त्रिवारं पाठेन सामधेनीनां पञ्चदशत्वमुपपाद्यते। पञ्चदशत्व-ञ्चावश्यकमतो न तत्र पुनरुक्तिः।

यच्चोक्तं आगमेषु 'न हिंस्यात् सर्वभूतानि' इति सर्वभूतहनननिषेधानन्तरमग्निसोमीयं पशुमालभेत' इत्यादिनाऽग्निसोमीयेष्टौ पशुवधस्य विधानात् पूर्वापरविरुद्धार्थप्रतिपादनात् विप्रलम्भकवाक्यत्वं

---

१. न्यायूत्रम् २/१/५९

२. न्यायसूत्रम् २/१/६०

वेदस्य तेन च न प्रामाण्यमिति तदपि अत्यल्पमेव । यतोहि न हिंस्यात् सर्वभूतानीति सामान्यशास्त्रेण निषेधेऽपि तदनन्तरमग्निसोमीयं पशुमालभेते-त्यादिविशेषशास्त्रेण तत्र विधानं सम्भवत्येव 'सामान्यशास्त्रतो नूनं विशेषो बलवान् भवेत्' इति न्यायात्। किञ्च 'आलभेत' इत्यस्य न वधोऽर्थोऽपितु स्पर्शनमेव। अत एवाह विवाहपद्धत्याम् 'ततः परं वरः कन्याया हृदयमालभेत' इत्यादि वाक्यं श्रूयते। अथवा परोक्षवादः वेदोऽयमित्यादि-पौराणिकवचनाद् 'अग्निसोमीयं पशुमालभेत' इत्यादिवचनस्य परिसंख्याविधिरेव, स च विधिः वस्तुतः निषेधपर एव यथा 'पञ्चपञ्चनखा भक्षा.....' इत्यादि। एवम् 'अपुत्रस्य गतिर्नास्ति' इत्यनन्तरं ब्रह्मचारिणां गतिप्रतिपादनाद् विरुद्धार्थ प्रतिपादकत्वादनाप्तवाक्यत्वम्, तत्तु भवदल्पज्ञतामेव प्रकटयति यतो हि तत्र व्यक्तिभेदमादायैव द्वयोर्वाक्ययोः प्रतिपादनं स्पष्टमेवातोऽधिकप्रतिपादनं व्यर्थमेव।

एवं परमेश्वरस्य ताल्वादिस्थानाभावेन वर्णोच्चारणासंभवात्कथं तत्प्रणीतत्वं वेदस्य स्यादिति चेत् न तद्भद्रम्। स्वभावतोऽशरीरस्यापि तस्य भक्तानुग्रहार्थं लीलाविग्रहग्रहणसम्भवात्। तथा च सर्वदोषरहितत्वाद् वेदानां सर्वज्ञपुरुषप्रणीतत्वं तेषां प्रामाण्यञ्च सिद्धमेव।

**निष्कर्षः**

ईश्वर एवादौ वेदानामुपदेशकः, जीवात्मनां पितृवदात्मकल्पः। जीवानां कल्याणाय सर्गकाले वेदान् रचयति। वेदाः नैवापौरुषेयाः भवितुं शक्नुवन्ति वाक्यरूपत्वात्। 'वेदाः पौरुषेयाः वेदत्वाद् आयुर्वेदवत्' 'वेदः पौरुषेयो वाक्यत्वाद् भारतादिवत्' 'वेदवाक्यानि पौरुषेयाणि वाक्यत्वाद् अस्मदादिवाक्यवत्, 'वेदजन्यज्ञानं कारणगुणजन्यं प्रमात्वात् प्रत्यक्षादि-प्रमावद् इत्यादिभिः अनुमाभिः वेदस्य पौरुषेयत्वं साध्यते। यत्पुरुषप्रणीतो वेदः स एवेश्वरः।

**

# तृतीयोऽध्यायः

मङ्गलाचरणम्

प्रत्यक्षादिभिरेभिरेवमधरो दूरे विरोधोदयः
प्रायो यन्मुखवीक्षणैकविधुरैरात्मापि नासाद्यते ।
तं सर्वानुविधेयमेकमसमस्वच्छन्दलीलोत्सवं
देवानामपि देवमुद्भवदतिश्रद्धाः प्रपद्यामहे ॥

## प्रमाणानामीश्वराबाधकत्वम्

# तृतीयोऽध्यायः

मूलोक्तेषु पञ्चविधविप्रतिपत्तिषु मध्ये तृतीयविप्रतिपत्तिरत्र विविच्यते। सा च **'तदभावावेदकप्रमाणसद्भावात्'** इति। इयं विप्रतिपत्ति-र्बौद्धानाम्। तदर्थश्चेश्वराभावप्रमाणसद्भावादिति। अतोऽत्र चतुर्विधप्रमाणानां व्यवस्थापनपुरस्सरं, तेषामीश्वराबाधकत्वं प्रतिपाद्यते।

## अनीश्वरवादो बौद्धानां प्रमुखसिद्धान्तः

बौद्धदर्शनस्य प्रवर्तको बुद्धः। स च जीवानां दुःखं दृष्ट्वा द्रवितो भूत्वा गृहपरिवारराज्यादीन् त्यक्तवान्। अनेकवर्षाध्ययनतपोभिः बोधिज्ञानं प्राप्तवान्। तदनन्तरं संसारे जीवानां दुःखमस्ति, दुःखस्य कारणमस्ति, दुःखनिवारणमपि भवति, दुःखनिवारणोपायोऽप्यस्ति-इति भावयन् चत्वारि आर्यसत्यानि उपदिष्टवान्। यद्यपि बुद्धेन किमपि ग्रन्थः न निर्मितः, तथापि तेषामुपदेशानामेकत्रीकृत्याऽनन्तरं भिक्षुभिरनेकानेकग्रन्था विनिर्मिताः। तत्र प्रसिद्धाः प्रमुखसिद्धान्ताश्चत्वारः (१) प्रतीत्यसमुत्पादः, (२) क्षणभंगवादः, (३) अनात्मवादः, (४) अनीश्वरवादश्चेति।

तत्र **प्रतीत्यसमुत्पादो** नाम—'अस्मिन् सति-इदं भवति' अर्थादेकस्य विनाशे सति-अपरस्योत्पादो भवतीति नियमः।

**क्षणभङ्गवादश्च**—यत्सत्तत् क्षणिकमिति मन्वानः बौद्धदार्शनिकाः सर्वेषामपि पदार्थानां क्षणिकत्वं स्थापयन्ति।

**अनात्मवादश्च**—'अयं भिक्खवे, केवलो परिपुरो बालधम्मो'[१] इति वदन्

---

१. मज्झिमनिकाय १/१/२

नैयायिकाऽभिमतः, नित्यः, शाश्वतः,अनुभवकर्ता, भोक्तात्मेति परिकल्पना पूर्णतया बालधर्म इति प्रतिपादयन् खण्डयति।

**अनीश्वरवादः**—ईश्वरपदेन संसारस्य स्रष्टा, पालकः, सहंर्ता, सर्वसमर्थः, सर्वदर्शी, सर्वज्ञः, नित्यः, चेतनश्चेत्यर्थो गृह्यते। परन्तु नास्ति बौद्धदर्शने एतादृशेश्वरस्यावश्यकता। सर्वस्यापि वस्तुनः प्रतीत्यसमुत्पन्नत्वात् क्षणिकत्वाच्च। अत एव नित्येश्वरकर्तृत्वविषये बुद्ध उपहसति।[१]

बुद्धभगवतः परवर्त्तिकाले तेषां शिष्येषु विभिन्नसम्प्रदायाः समुत्पन्नाः। तद्यथा सर्वास्तिवादः (वैभाषिकः), सौत्रान्तिकः, विज्ञानवादः (योगाचारः), माध्यमिकाश्चेति चत्वारः सम्प्रदायाः तत्र प्रसिद्धाः। तेषामन्य-विषये मतभेदेऽपि अनीश्वरवादविषये न विमतिः। अत्राधिकं न वक्तव्यम् **ईश्वरानीश्वरविषये** न्यायबौद्धदर्शनयोर्मध्येऽद्वितीयवाग्युद्धोऽतीव प्रसिद्धः। बौद्धदार्शनिकैः नागार्जुन-दिङ्नाग-वसुबन्धु-धर्मपालादिमहाभागैः न्यायसूत्र-भाष्यस्थेश्वरव्यवस्था खण्डिता, एवञ्च धर्मकीर्तिना प्रमाणवार्तिक उद्योतकरोक्तेश्वरसाधकयुक्तीनां खण्डनम्, ईश्वरबाधकयुक्तीनां प्रदर्शनञ्च विहिते। एवं शान्तिरक्षितेन तत्त्वसंग्रहे, कल्याणरक्षितेन चेश्वरभंग-कारिकायामीश्वरसाधकप्रमाणनिराकरणपूर्वकं बाधकयुक्तीनां प्रतिपादनेन स्वजीवनं यापितम्। किं बहुना बौद्धदर्शनिकेन ज्ञानश्रीमहाभागेनोक्ता-नामीश्वरबाधकहेतूनां निराकरणाय प्रसिद्धेश्वरसाधकोऽयं न्यायकुसुमाञ्जलिः। अतः सर्वेऽपि बौद्धदार्शनिका अनीश्वरवादिन एव।

## प्रमाणव्यवस्थापनम्

'मानाधीनमेयसिद्धिः' अतः सर्वेऽपि दार्शनिकाः स्वाभिमतवस्तु

---

१. *दीघनिकाय पाथिकसुत्त ३/१*

प्रतिपादनाय प्रमाणमङ्गीकुर्वन्ति, अत्रापि-ईश्वरसिद्ध्यर्थं प्रमाणमावश्यकम् तदर्थमाचार्योदयनेनास्मिन् तृतीयस्तबके प्रमाणानां विशन्निरूपणं कृत्वा तेषामीश्वराऽबाधकत्वं सुव्यवस्थापितम्।

तत्र प्रमाकरणं प्रमाणम्, अर्थात् क्रियासिद्धावत्यन्तमुपकारकं कारणं प्रमाणमिति। अत एव पाणिनिना 'साधकतमं करणम्'[१] इति सूत्रितम्। न्यायकोशकारेणापि 'प्रमाता येनार्थं प्रमिणोति तत् (प्रमाणम्)'[२] इत्युक्त्वा प्रमाणस्य महत्त्वं वर्णितम्। महर्षिगौतमेन 'प्रमाणप्रमेय......' इति सूत्रे प्रमाणार्थं प्रथमं स्थानं सुरक्षितम्। तदनु भाष्यकाराः प्रमाणसाफल्यं प्रतिपादयन् 'प्रमाणतोऽर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादर्थवत् प्रमाणम्'[३] इति उक्तवन्तः। एवञ्च न्यायवार्तिककाराः 'उपलब्धिहेतुः प्रमाणम्'[४] इति प्रतिपादयन्ति। अत एतद्विषये कस्यापि दार्शनिकस्य कश्चन विवादो नास्ति। परन्तु प्रमाणसंख्याविषये दार्शनिकानां परस्परं महान् मतभेदो दृश्यते।

तत्र केवलं प्रत्यक्षमेवप्रमाणमिति चार्वाकाः, प्रत्यक्षानुमाने द्वे प्रमाणे इति काणादबौद्धाः, प्रत्यक्षानुमानशब्दाः त्रीणि प्रमाणानि इति सांख्य-योग-जैनाचार्याः। 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि' इति नैयायिकाः। अर्थापत्तिरपि इति प्रभाकराः, अनुपलब्धिरपि इति भाट्टवेदान्तिनौ, सम्भवैतिह्य आदाय अष्टप्रमाणानि इति पौराणिकाः,

---

१. पाणिनिसूत्रम् १/४/४२

२. न्यायकोशः पृ० ५५३

३. न्यायभाष्यम् पृ० ३

४. न्यायदर्शनम् पृ० ९

प्रत्यक्षानुमानोपमानशब्दार्थापत्त्यनुपलब्धि-सम्भव-ऐतिह्यचेष्टाः नवप्रमाणानि इति तु तान्त्रिकाः। एतेषां मते अस्वारस्यमुद्भाव्य प्रमाणानां चातुर्विध्यं प्रतिपादयामि।

## प्रत्यक्षप्रमाणम्

प्रत्यक्षज्ञानकरणत्वं प्रत्यक्षप्रमाणस्य लक्षणम्। प्रत्यक्षप्रमा च 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारिव्यवसायात्मकं प्रत्यक्षम्'[१] इति सूत्रेण महर्षिणा 'भ्रमभिन्नत्वे सति इन्द्रियार्थसन्निकर्षजन्यत्वे सति ज्ञानत्वं' प्रत्यक्षप्रमायाः लक्षणं कृतम्। तच्च प्रत्यक्षम् अव्यपदेश्यं=निर्विकल्पकम्, व्यवसायात्मकं=सविकल्पकमितिभेदेन द्विविधं प्रतिपादितम्। परन्तु परवर्त्याचार्यैः उक्तप्रत्यक्षप्रमाघटकीभूतं भ्रमभिन्नत्वं परित्यज्य प्रत्यक्षज्ञानस्य लक्षणं कृतमिति। अस्मिन् लक्षणे ईश्वरप्रत्यक्षे अव्याप्तिमाशङ्क्य नव्यनैयायिकेन गंगेशोपाध्यायेन नूतनं लक्षणमाविष्कृतम्, तच्च ज्ञानाकरणकं ज्ञानं प्रत्यक्षमिति। ज्ञानं=व्याप्तिज्ञानं, सादृश्यज्ञानं, पदज्ञानं च करणं येषां तानि ज्ञानकरणकानि अनुमित्युपमितिशाब्दानि। ज्ञानकरणकं न भवतीति ज्ञानाकरणकम्। तत्त्वं प्रत्यक्षज्ञानस्य लक्षणम् इति तु तदर्थः। एवं तर्कसंग्रहकारः प्रत्यक्षप्रमामुपसंहरन् प्रवदति— संयोगः, संयुक्तसमवायः, संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभाव इति षड्विधसन्निकर्षजन्यं ज्ञानं प्रत्यक्षम्, तत्करणमिन्द्रियम् तस्मादिन्द्रियं प्रत्यक्षप्रमाणमिति सिद्धम्।[२]

---

१. *न्यायसूत्रम् १/१/४*

२. *तर्कसंग्रहः पृ० ८६*

प्रत्यक्षप्रमाणविषेय न कस्यापि विप्रतिपत्तिः, सर्वैः आस्तिकनास्तिकदार्शनिकाः प्रत्यक्षप्रमाणमभ्युपगच्छन्ति। अत एव 'प्रत्यक्षकेममेव प्रमाणम्'[१] इति चार्वाकाः। 'प्रत्यक्षं कल्पनापोढमभ्रान्तम्' इति बौद्धाः। 'प्रतिविषयाध्यवसायो दृष्टम्'[२] (=प्रत्यक्षम्)' इति सांख्याः। 'सत्सम्प्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्षम्'[३] इति मीमांसकाः।

## प्रत्यक्षप्रमाणं नेश्वरे बाधकम्

प्रत्यक्षप्रमाणं हि सर्वैः स्वीक्रियते, अतः तद्विषये न कश्चिद् विवादो दार्शनिकेषु। तथा सति प्रत्यक्षसिद्धवस्तुनोऽपलापः कर्तुं न शक्यते। परन्तु ईश्वरस्याप्रत्यक्षत्वात् तदस्तित्वं विवादितं वर्तते। अत एतद्विषये विविच्यते।

अत्र बौद्धाः वदन्ति यत्-प्रत्यक्षेणेश्वरस्योपलम्भाभावाद् बाधक-प्रमाणसद्भावाच्चेश्वरो न सिद्ध्यति। तथाहि यथा भूतलादौ घटादेरनुपलब्ध्या घटाभावो निश्चीयते, तथेश्वरस्याप्यनुपलब्ध्येश्वराभावो निश्चित इति पूर्वपक्षस्याशयः।

सिद्धान्ते तु अनुपलब्धिमात्रस्याऽभावसाधकत्वे त्वाकाशधर्मा-धर्मादिकस्याऽतीन्द्रियमात्रस्य विलोपः स्यात्। अतो नानुपलब्धिरभाव-साधिका किन्तु योग्यानुपलब्धिरेव। योग्यानुपलब्धिश्च वेदान्तपरिभाषायाम्

---

१. *बार्हस्पत्यसूत्रम्*

२. *सांख्यतत्त्वकौमुदी कारिका ५*

३. *मीमांसासूत्रम् १/१/४*

'ननु केयं योग्यानुपलब्धिः ? किं योग्यस्य प्रतियोगिनोऽनुपलब्धिरुत योग्याधिकरणे प्रतियोग्यनुपलब्धिः ?। नाद्यः, स्तम्भे पिशाचादिभेदस्याऽप्रत्यक्षत्वापत्तेः। नान्त्यः, आत्मनि धर्माधर्माद्यभावस्याऽपि प्रत्यक्षतापत्तेः। इति चेन्न, अनुपलब्धेर्योग्यता च तर्कितप्रतियोगिसत्त्वप्रसञ्जितप्रतियोगिकत्वम्। यस्याऽभावो गृह्यते, तस्य यः प्रतियोगी, तस्य सत्त्वेनाधिकरणे तर्कितेन प्रसञ्जनयोग्यमापादनयोग्यं यत्प्रतियोग्युपलब्धिस्वरूपं यस्यानुपलम्भस्य तदनुपलब्धेर्योग्यत्वमित्यर्थः।[१] सा च योग्यानुपलब्धिरीश्वरे न घटते ईश्वरस्य प्रत्यक्षायोग्यत्वाद् इति नानुपलब्ध्येश्वराभावः सिद्ध्यति।

अत्र पूर्वपक्षी बौद्धः पुनः शङ्कते-यदि-अनुपलब्धिर्नाभावसाधिका तदा शशशृङ्गस्यापि प्रत्यक्षायोग्यतया शशशृङ्गाभावोऽपि न सिद्ध्येदिति चेत्, अत्राचार्याः-

**योग्यादृष्टिः कुतोऽयोग्ये प्रतिबन्धिः कुतस्तराम्।**
**क्वायोग्यं वाध्यते शृङ्गं क्वानुमानमनाश्रयम्।।**[२] **इति।**

अयं भावः—शृङ्गस्य रूपवत्त्वमहत्त्वाभ्यां प्रत्यक्षयोग्यत्वेन गवादिशृङ्गे व्याप्तिदर्शनादस्यापि शृङ्गस्य सतो योग्यतया भवितव्यम्। तस्माच्छशशृङ्गं प्रत्यक्षयोग्यमेव तस्य शशे सम्बन्धाभाव एव प्रतीयते। अतः प्रत्यक्षयोग्यस्य शृङ्गस्य शश अनुपलब्ध्या तदभावः सिद्ध एव। अर्थात्

---

१. वेदान्तपरिभाषा पृ० २८३-२८५

२. न्यायकुसुमाञ्जलि-कारिका ३/१

शशशृङ्गे योग्यानुपलब्धिरेव। प्रकृते परमात्मनि चाऽयोग्यानुपलब्धिरिति उभयत्र सारूप्याभावाद् अयोग्ये परमात्मनि योग्यानुपलब्धिरूपमभाव-साधकं प्रमाणं नास्ति। अस्ति चेश्वरेऽयोग्यानुपलब्धिः परन्तु सा नाऽभाव-साधिका। अयोग्यं शशशृङ्गं तु न बाध्यते। ननु तर्हि बाधकाभावात् शशशृङ्गमपि सिद्ध्यतु-इति चेन्न, बाधकाभावमात्रान्न वस्तुसिद्धिः किन्तु साधकप्रमाणादेव। साधकप्रमाणाभावान्न शशशृङ्गसिद्धिः। तथाहि 'शशः शृङ्गवान् शशत्वात्' इत्यनुमाने यत्र यत्र शशत्वं तत्र तत्र शृङ्गवत्त्वमित्यत्र दृष्टान्ताभावः। 'शशः शृङ्गवान् पशुत्वात् गवादिवत्' इत्यनुमानेऽश्वादौ व्यभिचारः। न वयं बाधकाभावमात्रेणेश्वरमभ्युपगच्छामः। किन्तु साधकप्रमाणसद्भावादेव, ईश्वरसाधकहेतवः कार्यायोजनादयः प्रसिद्धा एव। तथा च प्रथममीश्वरस्यानुपलब्ध्या बाधकमभिधाय ईश्वराबाधे शशशृङ्गस्या-प्यबाधः, शशशृङ्गबाधे ईश्वरस्यापि बाध इति प्रतिबन्धिरुद्भाविता। सा च उभयत्र सारूप्याभावान्निरस्ता। अयोग्याऽलीकस्य शशशृङ्गस्य निषेधाभावाद् योग्यानुपलब्ध्या एव शशशृङ्गस्य (शशे शृङ्गस्य) निरासः क्रियते। न त्वयोग्यानुपलब्ध्या परमात्मनो निरासः कर्तुं शक्यते।

अत्र पुनः पूर्वपक्षी वदति यत् - भवता 'शशशृङ्गं नास्ति' इत्यत्र प्रत्यक्षयोग्यस्य शृङ्गस्य शशे योग्यानुपलब्ध्या सम्बन्धाभावः प्रतिपादितः। परन्तु पदार्थान्तरस्य शशशृङ्गस्याभावः कथं गृह्यते योग्यानुप-लब्धेरभावात्। अतोऽनुपलब्धिमात्रमभावग्राहकमिति मन्तव्यम्। तथा सति परमेश्वरस्यापि अभाव ग्रहीतुं शक्यत एव इति।

अत्र नैयायिकाः-तादृशपदार्थान्तरस्यापि शशशृङ्गस्य प्रत्यक्ष-योग्यत्वमेव। योग्यता चात्र दृष्टोपलम्भसामग्रीघटिता तस्यां च सत्यां

शशशृङ्गस्यापि ग्रहणं भवत्येव तदुक्तं श्रीमदाचार्यैः—

**दुष्टोपलम्भसामग्री शशशृङ्गादियोग्यता ।**
**न तस्यां नोपलम्भोस्ति नास्ति सानुपलम्भने ।।**[१]

अयं भावः - प्रत्यक्षस्य सामग्री द्विविधा। सद्विषयकप्रत्यक्षे विषयसहितः चक्षुरादिकारणकलापः, असद्विषयस्थले च विषयरहितः पित्तादिदोषघटितश्च चक्षुरादिकारणकलापः। तत्र प्रथमा सामग्री विषयसहिता, द्वितीया च सामग्री सर्वदैव विषयरहिता। अनयोरेकतरसत्त्वे प्रत्यक्षं जायते। तत्र प्रथमसामग्री-जन्यं प्रत्यक्षं प्रमात्मकम्। द्वितीयसामग्रीजन्यं प्रत्यक्षं भ्रमरूपमित्यवधेयम्। शशशृङ्गस्याऽलीकत्वेन तत्प्रत्यक्षसामग्री द्वितीया दोषघटिता सामग्री वाच्या, तादृशसामग्रीसत्त्वे शशशृङ्गस्य प्रत्यक्षमेवेति न प्रत्यक्षाभावरूपाऽ-नुपलब्धिः, तादृशसामग्र्यसत्त्वे दोषघटितसामग्रीरूपा उक्तयोग्यतैव नास्ती-त्यलीकस्थले योग्यतासहिता अनुपलब्धिः कदापि न सम्भवति। प्रतियोग्युपलम्भश्च प्रतियोगिप्रत्यक्षम्, अतीन्द्रियगगनादिप्रत्यक्षस्य भ्रमत्वाद् गगनाद्युपलम्भसामग्री दोषघटिता वाच्या, तथा च तादृशयोग्यतासत्त्वे गगनाद्यनुपलब्धिरेव नास्तीति न गगनाद्यतीन्द्रियपदार्थमात्रोच्छेदापत्तिः। तथा चानुपलब्धेर्नाभावसाधकत्वं किन्तु योग्यानुपलब्धेरेव अभावसाधकत्व-मीश्वरस्य च प्रत्यक्षायोग्यत्वात् नानुपलब्धिमात्रात् तदभावसिद्धिरिति।

## अनुमानस्य प्रामाण्यम्

सर्वेषु दार्शनिकेषु चार्वाकैः प्रत्यक्षमेकमेव प्रमाणमिति मन्यते।

---

१. न्यायकुसुमाञ्जलि- कारिका ३/३

यथोक्तं बार्हस्पत्यसूत्रे 'प्रत्यक्षमेव प्रमाणम्'[१] इति। अत एव यः प्रत्यक्षतो नोपलभ्यते पदार्थस्स नात्येवेति चार्वाकाणां सिद्धान्तः। इत्यनेन ज्ञायते अनुमानादीनामप्रामाण्यमिति।

अनुमानाप्रामाण्यव्यवस्थापकानां चार्वाकाणामयं तर्कः—

अनुमानं=व्याप्तिज्ञानं तदधीनं परामर्शज्ञानं तदनन्तरमेवानुमितिरित्येवं क्रमः। परन्तु तत्र व्याप्तिज्ञानमेव निश्चितं न सम्भवति। 'यत्र यत्र धूमस्तत्र तत्र वह्निः' 'यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावः' इत्येवमन्वयव्यतिरेकव्याप्तिस्वरूपमनुमानप्रामाण्यवादिनामभिमतम्। तत्र महत्यस्मिन् संसारे को जानाति यद् 'यत्र यत्र धूमस्तत्र तत्र वह्निरस्त्येव, एवं यत्र यत्र वह्न्यभावस्तत्र तत्र धूमाभावः' अस्त्येवेति। तथा च व्यभिचाराभावानिश्चयप्रयुक्तेन व्याप्तिनिश्चयाभावेन दूरापास्ताऽनुमानप्रामाण्यकथेति।[२]

किञ्च 'अनौपाधिकः सम्बन्धो व्याप्तिः' इति व्याप्तिलक्षणं स्वीकृतम्। येऽपि 'स्वाभाविकः सम्बन्धो व्याप्तिः' इति वर्णयन्ति तेषामपि स्वाभाविकत्वम् = उपाध्यभाववत्त्वमेव। उपाध्यभावज्ञानं चोपाधिज्ञाने सत्येव। अभावज्ञानस्य प्रतियोगिज्ञानसापेक्षत्वात्। तत्र चातीतानागतवर्तमानानामुपाधीनां प्रत्यक्षासम्भवादुपाध्यभावनिश्चयाभावेनोपाधिविधुरत्वं धूमवह्निसम्बन्धेऽपि दुर्ग्रहमेव कथमनुमानं प्रमाणम्। 'धूमदर्शनानन्तरं (वह्नि-

---

१. *बार्हस्पत्यसूत्रम्*

२. *भूतभविष्यतोस्तदसम्भवेन....व्याप्तेदुर्ज्ञानत्वात्* । *सर्वदर्शनसंग्रहः पृ० ८*

मनुमाय) वह्नयर्थं प्रवृत्तिः (क्वचिज्जीवानां सा) सम्भावनामात्रादिति'। यच्च क्वचिदेवं विधायां प्रवृत्तौ साफल्यमपि लभ्यते तदपि आकस्मिकमेवेति। अतोऽनुमानप्रामाण्यस्वीकारापेक्षा नास्तीति चार्वाकाणामाशयः।

अत्रेदं बोध्यम् चार्वाकैरपि अनुमानप्रामाण्यमिष्यते एव। न्यायसिद्धान्तविन्दुन्यायरत्नावलीग्रन्थादेरवलोकनेन प्रतीयते मन आत्मवादि-चार्वाकाः स्वीकुर्वन्त्यनुमानमपि प्रमाणम्। एवं षड्दर्शनसमुच्चयव्याख्याता गुणरत्नस्तु मनुते यदनुमानं दैनन्दिनव्यवहारसाधनायानायासेन लब्धपदं तच्चार्वाकैरिष्यते, यत्पुनः स्वर्गापूर्वादिविषयं च नेष्यते तत्, स्वर्गपूर्वादेर्व्यवहारासाधकत्वात्।[१] किन्तु तैः नहि सर्वस्यापि-अनुमानस्य प्रामाण्यमिष्यते। तदुक्तं जयन्तभट्टेन द्विविधमनुमानम् (१) उत्पन्नप्रतीतिकम् (२) उत्पाद्यप्रतीतिकञ्च। उत्पन्नप्रतीतिकस्याऽनुमानस्य चार्वाकैरपि प्रामाण्यमिष्यते यथा धूमादिहेतुना वह्नयनुमानस्य उत्पन्नप्रतीतिकत्वादस्ति प्रामाण्यम्। परमेश्वरपरलोकादिविषयकाणामनुमानानां तु उत्पाद्य-प्रतीतिकतया प्रामाण्यं नास्ति। तदुक्तम्—

**तत्र धूमानुमानादेः प्रामाण्यं केन नेष्यते।**
**यत्त्वात्मेश्वरसर्वज्ञपरलोकादिगोचरम्।**
**अनुमानं न तस्येष्टं प्रामाण्यं तत्त्वदर्शिभिः।।**[२]

सारांशत एतदायाति एषामनुमानानां प्रत्यक्षमूलकत्वं तेषामेव प्रामाण्यं चार्वाकमते। एतेन ज्ञायते यदनुमितेरपि प्रामाण्यं प्रत्यक्षमूलक-

---

१. *विशेषपुनश्चार्वाकैर्लोकयात्रानिर्वहणप्रवणं .......। षड्दर्शनसमुच्चयः पृ० ४५७*

२. *न्यायमञ्जरी पृ० ११३*

तयैवायाति। अतोऽनुमितेरपि प्रत्यक्षान्तर्गततयैव प्रामाण्यम्। अत एव चार्वाकमते प्रत्यक्षमेकमेव प्रमाणमिति प्रवादः श्रूयते।

चार्वाकेण हि प्रत्यक्षमेव प्रमाणमिति-उद्घोषितम्। परन्तु सकलार्थावश्यकवस्तूनां बोधने नाऽलमतस्तेन कृतस्य अनुमानप्रामाण्य-खण्डनस्य खण्डनं विहितं वाचस्पतिमिश्रेण - सांख्यतत्त्वकौमुद्याम्। तथाहि- 'नानुमानं प्रमाणमिति वदता लोकायतिकेनाऽप्रतिपन्नः सन्दिग्धो विपर्यस्तो वा पुरुषः कथं प्रतिपद्येत ? न च पुरुषान्तरगता अज्ञानसन्देहविपर्ययाः शक्या अर्वाग्दृशा (=बाह्यस्थूलपदार्थविषयकज्ञानवता अयोगिना चार्वाकेण) प्रत्यक्षेण प्रतिपत्तुम्, नापि प्रमाणान्तरेण अनभ्युपगमात्। .......... तदनेनाऽज्ञानादयः परपुरुषवर्तिनोऽभिप्राय-भेदाद्वचनभेदाद्वा लिङ्गादनुमातव्याः, इत्यकामेनाऽप्यनुमानं प्रमाणम-भ्युपेयम्।' इत्युक्तम्।[1]

तथैव बौद्धदार्शनिकेन धर्मकीर्तिनापि पूर्वोक्तदोषं वारयितुम्—

**कार्यकारणभावाद्वा स्वभावाद्वा नियामकमात्।**
**अविनाभावनियमोऽदर्शनान्न न दर्शनात्।।[2] इत्युक्तम्।**

ननु कार्यकारणभावेऽपि व्यभिचारशङ्का भवत्येवेति वाच्यम्, कारणं कार्यव्यभिचारि स्यात् चेत् तर्हि कारणं विना कार्यमुत्पद्येत। तथा सति नियमतो धूमार्थं वह्न्यादौ न प्रवर्तेत। भवति च प्रवृत्तिरतः कार्यकारण-

---

१. सांख्यतत्त्वकौमुदी पृ० ५२

२. प्रमाणवार्तिकम् ३/३०

भावे न किमपि बाधकमिति।

अत्र चार्वाकाः धूमादिदर्शने वह्निसम्भावनामात्रेण जनाः प्रवर्तयन्ति न तु निश्चयात्। प्रवृत्तिं प्रति प्रमात्मकज्ञानाऽपेक्षिततत्वात्। वह्निनिश्चयाभावेऽपि धूमदर्शनेन वह्निसम्भावनया सर्वविधो व्यवहारः सम्भवति। अतो न व्यवहारार्थमनुमानप्रमाणस्वीकार आवश्यकः इति वदन्ति। अत्राचार्याः—

**दृष्ट्यदृष्ट्योर्न सन्देहो भावाभावविनिश्चयात्।**
**अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम्।।**[1]

सम्भावना नाम सन्देहः। स च वह्न्यादेः दर्शनपक्षे तस्य भावविनिश्चयान्नसन्देहः, अदर्शनपक्षे च अभावविनिश्चयात् न सन्देहः। संशयं प्रति एकतरकोटिकनिश्चयाभावस्य कारणत्वात्। तथा च सम्भावनामात्रेण या प्रवृत्तिः चार्वाकेणोक्ता सा नोपपद्यते इति अनुमानं स्वीकार्यमेव। किञ्च— 'अदृष्टिबाधिते हेतौ प्रत्यक्षमपि दुर्लभम्' इत्यस्य केनचिद् विदुषा सुष्ठु प्रतिपादितम्—

**रे रेऽनुमानं यदि न प्रमाणम् चक्षुस्तवास्त्यत्र किमस्ति मानम्।**
**भवादृशे दूरविदेशमागते चरन्तु वैधव्यव्रतं तवाङ्गना।।**

इत्यादिना। तथाहि-अनुमानाऽस्वीकारे अनुपलब्धिमात्रेणाभावनिश्चये च प्रत्यक्षमेव न सम्भवति। प्रत्यक्षहेतुचक्षुरादीनामनुमानैकसाध्यत्वात्, एवं चक्षुरिन्द्रियादेरतीन्द्रियत्वेन तदनुपलब्ध्या तदभावाच्च। तथा च प्रत्यक्षमेव

---

१. न्यायकुसुमाञ्जलि - कारिका ३/६

प्रमाणमिति चार्वाकसिद्धान्तव्याघातः स्यात्।

एवं 'यन्नप्रत्यक्षं तन्नास्ति' इति ब्रुवाणश्चार्वाको यदा गृहाद्बहिर्विनिर्गतस्तदा गृहस्थितपुत्रदारादिरनुपलब्ध्या तेषामभावमवधारयन् शोकविह्वलो विक्रोशेत्। ननु पुत्रादीनां साक्षादनुपलम्भेऽपि, स्मरणसम्भवात् तेषामभावनिश्चयाभावात्, न शोकप्राप्तिर्नवाऽऽक्रोश इति चेन्न, प्रतियोगिनः स्मरणात्मकं ज्ञानमभावग्रहे न प्रतिकूलं किन्तु अभावग्रहानुकूलमेव। अभावग्रहे प्रतियोगिज्ञानस्य कारणत्वात्। किञ्च निवर्तमानोऽपि चार्वाको गृहादिकं न प्राप्येत्। अनुपलब्ध्या गृहादेर्नष्टत्वात्। ननु गृहादेर्नष्टत्वज्ञानेऽपि वस्तुतः सत्त्वाद् गृहादिकं लप्स्यते इति चेत्तर्हि अनुपलब्धिरूपकारणसत्त्वेऽपि अभावग्रहरूपकार्याभावाद् व्यभिचारादनुपलब्धिरभावग्रहे कारणं न स्यात्। अप्रत्यक्षत्वादेव वस्तुनोऽभावः ग्रहीतुमशक्यत्वात्, अनुमानमपि वस्तुनः साधकमिति मन्तव्यम्।

अत्र चार्वाकः पुनरपि अनुमानस्य प्रामाण्यं खण्डयितुं वदति यत्— साध्यसाधनयोः अनौपधिकः सम्बन्ध एव व्याप्तिः। परन्तु सर्वेषु एवानुमानेषु अयोग्योपाधिशङ्कया धूमादिना वह्न्यनुमानस्थले वह्निधूमयोर्व्याप्तिसम्बन्धेऽयोग्योपाधिशङ्का भवति तथा सति न व्याप्तिनिश्चयः स्यादिति गतमनुमानेन अनुमानसामान्याभावे सति आवापोद्वापमूलकानुमानद्वारकव्यवहाराधीनशक्तिग्रहाभावात्, शब्दोऽपि न प्रमाणम्, एवमुपमानमपि न प्रमाणम् इति अतोऽस्मत् सम्मतं प्रत्यक्षमात्रं प्रमाणमवशिष्यत इति। अत्र श्रीमन्त आचार्याः—

**शङ्काचेदनुमाऽस्त्येव नचेच्छङ्का ततस्तराम्।**
**व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः॥**[1] इति।

---

१. न्यायकुसुमाञ्जलि - कारिका ३/७

तस्याशयो यद् वर्तमानदेशकालस्थयोः वह्निधूमयोः सम्बन्धस्य प्रत्यक्षत्वान्न तत्रोपधिशङ्का, कालान्तरदेशान्तरस्थयोरेव वह्निधूमयोः सम्बन्धे उपाधिशंका सम्भवति। तयोश्च कालान्तरदेशान्तरस्थयोः वह्निधूमयोर्ग्रहणं नानुमानमन्तरा भवति, अतोऽनुमानमावश्यकमेव। अतो न शङ्कापक्षे नाप्यशङ्कापक्षे अनुमानविलोपः सम्भवति।

अत्र चार्वाकः पुनः पृच्छति यदनुमानविलोपासम्भवेऽपि वह्निधूमयोः सम्बन्धे या उपाधिशङ्का कृता तस्याः कथं निराकरणमिति। तत्राह 'तर्कः शङ्कावधिर्मतः' स च तर्कः 'धूमो यदि वह्निव्यभिचारी स्यात् तर्हि वह्निजन्यो न स्यात्' इत्यादिरूपः। तत्र तर्के प्रथमं दलमापादकम् आपत्तिजनकम्। द्वितीयं दलमापाद्यम् आपत्तिविषयः। आपादकं व्याप्यम्। आपाद्यं व्यापकम्। व्याप्यस्य आपादकस्य आरोपेण आहार्यज्ञानेन, व्यापकस्य आपाद्यस्य आरोपः आहार्यं ज्ञानं तर्कः। बाधनिश्चयकालीनेच्छाजन्यं ज्ञानमाहार्यम्। तर्के आपाद्याभावनिश्चयः, आपाद्यापादकयोर्व्याप्तिनिश्चयश्च कारणम्। आपाद्याभावेन आपादकाभावस्य सिद्धिरेव तर्कस्य फलम्।

यथा प्रकृततर्के, वह्निव्यभिचारित्वमापादकं, वह्निजन्यत्वाभाव आपाद्यः, अतो धूमे वह्निजन्यत्वाभावाभावेन (वह्निजन्यत्वेन) आपाद्याभावेन, वह्निव्यभिचारित्वाभावस्य आपादकाभावस्य (वह्निव्याप्तिनिश्चयस्य) सिद्धिर्भवति। अतो वह्निव्याप्तिज्ञाने व्यभिचारशङ्काविघटनद्वारा तर्क उपयोगी। तर्के च धूमं प्रति वह्निः कारणमिति धूमे वह्निजन्यत्वनिश्चयः (आपाद्याभावनिश्चयः) कारणम्। तादृशनिश्चये 'वह्निसत्त्वे धूमसत्त्वं, वह्न्यभावे धूमाभावः' इत्यन्वयव्यतिरेकसहचारज्ञानं कारणम्। तथा

चाऽन्वयव्यतिरेकसहचारग्रहं विना कार्यकारणभावनिश्चयो न भवति, कार्यकारणभावनिश्चयं विना तर्को नोत्पद्यते, तर्कं विना व्यभिचारशङ्का न नश्यति व्यभिचारशङ्कानाशं विना व्याप्तिज्ञानं न सुस्थिरम्, व्याप्तिज्ञानं विनाऽनुमितिर्न स्यात्, अतोऽन्वयव्यतिरेकाभ्यां कार्यकारणभावनिश्चयः कर्तव्यः।

अत्र चार्वाकः पुनः शङ्कते यत् - तर्कं प्रति आपाद्यव्याप्यापादकवत्तानिश्चयः कारणम्। तथा सति तर्कस्य मूलेऽपि व्याप्तिरन्तर्भूता भवति। तस्यामपि उपाधिशङ्का सम्भवति तन्निवृत्यर्थं तर्कान्तराऽपेक्षेत्यादिक्रमेण अनवस्थाप्रसङ्गः। किञ्च तर्कं प्रति कार्यकारणभावग्रहोऽपि कारणम्। तत्र तर्कस्य कारणीभूते 'धूमत्वावच्छिन्नं प्रति वह्नित्वावच्छिन्नं कारणम्' इति कार्यकारणभावग्रहेऽपि यदि 'कारणं वह्निं विनापि कार्यं धूमो भविष्यति न वा' इत्याकारिका आशङ्का प्रतिबन्धिका भवेत्, अथवा 'धूमः किं निर्हेतुक एव भविष्यति' इत्याकारिका आशङ्का प्रतिबन्धिका भवेत्, तदा तद्वारणार्थं पुनस्तर्कान्तरं, तत्कारणे कार्यकारणभावग्रहे च पुनः शङ्कायां तद्विघटनार्थं पुनस्तर्कावतार इत्यनवस्थाप्रसङ्गः। तत्राह 'व्याघातावधिराशंका' इति। तथा च तथाविधा आशङ्का व्याघातादपसारणीया। यदि हि कारणं वह्निं विनापि कार्यं धूमः स्यात्, तर्हि नियमतो धूमप्राप्त्यर्थं वह्नेरुपयोगो न स्यात्। यथा तृप्त्यन्यथानुपपत्त्या भोजनप्रवृत्तिज्ञानं तृप्तिभोजनयोः कार्यकारणभावस्य शङ्काविघटनद्वारा दार्ढ्यप्रयोजकं, तथा धूमप्राप्त्यन्यथानुपपत्त्या वह्न्युपादानप्रवृत्तिज्ञानं वह्निधूमयोः कार्यकारणभावस्य शङ्काविघटनद्वारा दार्ढ्यप्रयोजकमिति दृष्टान्तदार्ष्टान्तिभावः। अत एव चिन्तामणिग्रन्थे—'तदेव ह्याशङ्क्यते यस्मिन्नाशङ्क्यमाने स्वक्रियाव्याघातो न भवतीति, नहि सम्भवति स्वयं वह्न्यादिकं धूमादिकार्यार्थं नियमत उपादत्ते

तत्कारणं तन्नेत्याशङ्कते च'[१] इति। तस्माद् यावत् प्रत्यक्षादिप्रमाणैर्विरोधो न भवति तावत् शङ्का कर्तुं शक्यते समुपस्थिते तु प्रत्यक्षादिबाधे शङ्का न प्रसरति, अतस्तर्कमूलभूतायां व्याप्तौ प्रत्यक्षप्रमाणविरोधात् शङ्का न भवति। अतोऽनुमानं पृथक् प्रमाणमेव।

## अनुमानप्रमाणं नेश्वरे बाधकम्

अस्तु तावदनुमानस्य पृथक् प्रामाण्यम्। तथा सत्यप्यनुमाने-नैवेश्वराभावसिद्ध्यति इति बौद्धाः। तथाहि कर्तृत्वव्यापकशरीरप्रयोजनानु-सन्धानयोरभावाद् व्यापकानुपलब्धिलिङ्गकानुमानेनेश्वरास्याभावोऽनुमेयः। प्रयोजनानुसन्धानं च फलेच्छा, तथा च फलेच्छाजन्या उपायेच्छा तज्जन्या-प्रवृत्तिरिति परम्परया फलेच्छाजन्यायाः प्रवृत्तेः व्यापकत्वं फलेच्छायामिति आप्तकामे परमात्मनि व्यापकीभूतफलेच्छाया अभावात् कर्तृत्वाभाव-सिद्धिः। न च प्रयोजनानुसन्धानरूपफलेच्छायाः प्रवृत्तिव्यापकत्वेऽपि कर्तृत्वव्यापकत्वाभावात् कथं प्रयोजनाभिसन्धानाभावेन कर्तृत्वाभाव सिद्धिरिति वाच्यम्। कर्तृत्वं हि कृतिमत्त्वं तच्च कृतिरूपमेव, प्रवृत्तिश्च कृति-विशेषरूपेति प्रवृत्तेरेव कर्तृत्वरूपत्वात्। अनुमानञ्च 'ईश्वरः कर्तृत्वाभाववान् कर्तृत्वव्यापकशरीरसम्बन्धाभावात्' एवं 'ईश्वरः कर्तृत्वाभाववान् प्रयोजना-भावात्' इति द्विविधानुमानम्। विनिगमकाभावेन हेतुद्वयानुसरणम्, अथवा एकलिङ्गेन अनुमानमुक्त्वा दार्ढ्यार्थं लिङ्गान्तरेणानुमानं दर्शितमिति बौद्धा-नामाशयः।

---

१. तर्कप्रकरणम्, चिन्तामणिः पृ० ३४ (चौखम्बा)

अत्र आचार्येण उक्तम् 'क्वानुमानमनाश्रयम्'[१] अर्थादीश्वर-स्याश्रयस्य पक्षस्यासिद्धेः कुत्रानुमीयते कर्तृत्वाभावत्वस्य। तथा सति भवति पूर्वोक्तानुमानद्वयेऽपि - आश्रयासिद्धिः।

यदि येन केनचित् प्रमाणेनेश्वररूपधर्मिसिद्धिः क्रियते तदा तादृशधर्मिग्राहकमानेनैव ईश्वरे कर्तृत्वस्यापि सिद्धेः 'ईश्वरः कर्तृत्वाभाववान्' इति भवदभिमतस्यानुमानस्य बाध एव। अनाश्रयमलीकाश्रयमनुमाने कुत्रापि भवितुं न शक्नोति। यदि ईश्वरस्यैवाभावः साध्यते तदेश्वरस्य प्रतियोगित्वं मन्तव्यम्। अभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वात् प्रतियोगिन ईश्वरस्याज्ञाते तदभावस्यापि दुर्वचत्वम्।

तत्राश्रयासिद्धिवारणाय असत्ख्यात्युपनीतं भ्रमसिद्धमीश्वरं पक्षीकृत्य पुनरपि तत्र कर्तृत्वाभावस्य ईश्वराभावस्य च साधयितुं पूर्वपक्षी बौद्धोऽनुमानद्वयम् उपस्थापयति। तथा च 'ईश्वरः कर्तृत्वाभाववान् शरीर-प्रयोजनयोरभावात्, अथ च 'ईश्वरो नास्ति अस्तित्वेनोपलब्ध्यभावात्' इत्यनुमानाभ्यामीश्वराभावः साधनीय इति। तन्निराकरणाय श्रीमदाचार्याः—

**व्यावर्त्याभाववत्तैव भाविकी हि विशेष्यता।**
**अभावविरहात्मत्वं वस्तुनः प्रतियोगिता।।**[२]

'कर्तृत्वाभाववान् ईश्वरः' इत्यस्मिन् अनुमाने कर्तृत्वाभावो विशेषणमीश्वरश्च तदाश्रयो विशेष्यीभूतः। एवं 'ईश्वरो नास्ति' इत्यस्मिननुमाने

---

१. *न्यायकुसुमाञ्जलि- कारिका ३/१*

२. *तत्रैव ३/२*

च ईश्वराभावस्य प्रतियोगी भवति। इत्थं प्रकारेणैकत्रानुमाने विशेषणाश्रयता अपरत्र च प्रतियोगिता एतद्धर्मद्वयं पारमार्थिकपदार्थनिष्ठमेव सम्भवति—नासत्ख्यात्युपनीतं भ्रमसिद्धमलीकपदार्थनिष्ठमिति। तद्यथा 'पर्वतो वह्निमान्' इति निश्चयः 'पर्वतो वह्निमान् न वा' इति संशयस्य प्रतिबन्धको भवति। 'पर्वतो वह्निमान्' इति निश्चये सति 'पर्वतो वह्निमान् न वा' इति पर्वतधर्मिकपरस्परविरुद्धवह्निवह्न्यभावकोटिकज्ञानात्मकः संशयो न जायते। 'पर्वतो वह्निमान्' इति निश्चयेन पर्वते वह्निः विषयीक्रियते, वह्न्यभावः पर्वताद् व्यावर्त्यते। तेन 'पर्वतो वह्निमान्' इति निश्चयेन व्यावर्त्यः निषेध्यः यः वह्न्यभावस्तदभावो वह्न्यभावाभावो वह्निरूपस्तद्वत्ता तदधिकरणता 'पर्वतो वह्निमान्' इति निश्चये पर्वतस्य विशेष्यता। एवं 'ह्रदो वह्न्यभाववान्' इति निश्चयेन व्यावर्त्यः निषेध्यः यो वह्निस्तदभावो वह्न्यभावस्तद्वत्ता तदधिकरणता 'ह्रदो वह्न्यभाववान्' इति निश्चये ह्रदस्य विशेष्यता। ईदृशी भाविकी पारमार्थिकी विशेष्यता वस्तुनः पारमार्थिकस्य पदार्थस्यैव न तु अलीकस्य। पारमार्थिकापारमार्थिकयोः सम्बन्धासम्भवात्। न हि वन्ध्यापुत्रस्य देवदत्तस्य कन्यया विवाहसम्बन्धः सम्भवति इति। तदर्थस्तु टीकाकृद्भिरित्थमपि प्रवर्णितम्। तद्यथा-भाविकी पारमार्थिकी यथार्थज्ञानीया विशेष्यता व्यावर्त्याभाववत्तारूपा। विशेष्ये प्रकाराश्रयत्वाभावे सा विशेष्यता यथार्थज्ञानीया न स्यात् तदा 'ईश्वरः कर्तृत्वाभाववान्' इति निषेधानुमितिः प्रमा न स्यात्। अथवा विशेष्यता विशेषणवत्ता। तथा च भाविकी भावानां पदार्थानां सम्बन्धिनी विशेष्यता व्यावर्तनीयैककोट्यभावरूपकोट्यन्तरात्मकविशेषणवत्तैव। यद्वा भाविकी भावपदार्थनिष्ठा। अभावनिष्ठा तु विशेष्यता अभावाधिकरणकाभावस्याधिकरणरूपत्वात् अभिन्नयोश्च पदार्थयोराधाराधेयभावविरहात् व्यावर्त्याभाववत्तारूपा न स्यादिति। एवं प्रतिषेधप्रतियोगिता हि प्रामाणिकस्य वस्तुनो नाप्रामा-

णिकस्य। यथा हि - प्रामाणिकस्यैव घटादेरभावः क्वचिद् भूतलादौ प्रतीयते स एव घटादिः घटाद्यभावप्रतियोगी भवति। न त्वसत्ख्यात्युपनीयस्येति। ननु कपिसंयोगाभावस्य केवलान्वयित्वेन सर्वत्र सत्त्वात् कपिसंयोगाभावाभावस्य कुत्राप्यप्रसिद्धत्वात् कपिसंयोगस्य कपिसंयोगाभावाभावरूपत्वात् कथमप्रसिद्धस्य कपिसंयोगस्य कपिसंयोगाभावप्रतियोगित्वमिति चेन्न, मूलावच्छेदेनं वृक्षे कपिसंयोगाभावस्य विद्यमानत्वेऽपि शाखावच्छेदेन कपिसंयोगाभावस्याभावोऽस्ति एव, कपिसंयोगस्य कपिसंयोगाभावाभावरूपत्वेऽपि कपिसंयोगस्य कपिसंयोगाभावप्रतियोगित्वं निर्बाधम्। ननु तथापि गगनाभावस्य गगनं प्रतियोगि न स्यात्। गगनाभावस्य केवलान्वयित्वेन सर्वत्र वर्तमानत्वात् कुत्रापि गगनाभावो नास्तीति प्रत्ययाभावाद् गगनस्य च गगनाभावाभावरूपत्वात् कथं गगनस्य गगनाभावप्रतियोगित्वमिति चेदुच्यते अस्तीति प्रतीतिसाक्षिकसत्ताजातेर्गगनेऽपि सत्त्वेन 'गगनं नास्ति' इति प्रतीतेरसिद्धत्वात् कथं गगनाभावसिद्धिः। ननु गगनस्याऽवृत्तित्वेन संयोगसम्बन्धेन समवायसम्बन्धेन वा गगनस्याभावस्य प्रसिद्धिरिति चेत् - गगनप्रतियोगिकसंयोगसमवायसम्बन्धयोरप्रसिद्धिस्तयोर्व्यधिकरणसम्बन्धत्वात्। व्यधिकरणसंयोगसमवाययोरप्रसक्तप्रतिषेधायोगेन सम्बन्धत्वानङ्गीकारात्। यदि पुनर्गगनस्य विभुत्वेन सर्वमूर्तद्रव्यसंयोगित्वाद् गगनानुयोगिकसंयोगसम्बन्धः प्रसिद्ध्यति तर्हि गगनानुयोगिकसंयोगसम्बन्धेन गुणादौ गगनाभावः, घटादिमूर्तद्रव्ये तु गगनानुयोगिकसंयोगसम्बन्धेन गगनस्यैव सत्त्वाद् गगनाभावस्यैवाभाव इति सिद्धं गगनस्य स्वाभावाभावत्वरूपं प्रतियोगित्वम्। 'गगनं नास्ति' इति प्रतीतौ तु गगननिष्ठ आधेयत्वाभाव एव प्रतीयते न तु गगनाभाव इति। एवं 'शशशृङ्गे इदमस्ति' 'शशशृङ्गं न' 'शशशृङ्गं नास्ति' इति प्रतीत्यसम्भवात्। अतः कुतोऽलीकस्य प्रकृतनिषेध-

रूपसाध्याश्रयत्वं निषेधप्रतियोगित्वं च। ननु तर्हि अलीकस्य प्रतियोगित्वासम्भवे 'शशशृङ्गं नास्ति' इति कथं शशशृङ्गस्य प्रतिषेध इति चेत्। शशशृङ्गं कथमपि न निषिध्यते। प्रसक्तस्य हि प्रतिषेधो भवति। प्रसक्तिश्च कुत्रचित् प्रसिद्धस्य न त्वलीकस्य। स खलु शशशृङ्गप्रतिषेधोऽभावप्रत्यय एव। अभावप्रत्यये च प्रतियोगिप्रमितिः कारणम्। नहि शशशृङ्गं क्वचित् प्रमितमस्ति। यद्यपारमार्थिकस्य प्रतियोगित्वं तर्हि तदभावोऽप्यपारमार्थिक एव। नह्यपारमार्थिकप्रतियोगिकः पारमार्थिकोऽभावः सम्भवति। विशेषणस्य शशशृङ्गस्यापारमार्थिकत्वे स्वप्रतियोगिकत्वसम्बन्धेन शशशृङ्गविशिष्टस्याभावस्य पारमार्थिकत्वासम्भवादपारमार्थिकशशशृङ्गाभावविषयकं ज्ञानं न प्रमा। तथा च असत्ख्यात्युपनीते ईश्वरे कर्तृत्वाभावस्य, ईश्वराभावस्य च साधयितुं न शक्यते।

अत्र बौद्धः पुनः वदति-अस्तु तर्हि-ईश्वरो नावगतः असत्ख्यात्युपनीतेन ईश्वरेण प्रमाणव्यवहारः सम्पादयितुं न शक्यते। अत ईश्वरत्वेन ईश्वरं प्रत्यक्षीकृत्य कर्तृत्वाभावानुमानस्य, ईश्वराभावानुमानस्य च पक्षासिद्धिदोषदुष्टत्वेऽपि आत्मत्वेन आत्मनः सिद्धत्वात् तं आत्मानं पक्षीकृत्य तत्राऽसर्वज्ञत्वं क्षित्यादिकर्तृत्वाभावश्च साधयितुं शक्यते। तथा च इमौ प्रयोगौ 'आत्मा न सर्वज्ञ आत्मत्वात्, अस्मदादिवत्' एवं 'आत्मा न क्षित्यादिकर्ता आत्मत्वात्, अस्मदादिवत्' इति । अत्र नैयायिकाः-बौद्धानां मते सर्वज्ञत्वस्याप्रसिद्ध्या सर्वज्ञत्वाभावस्य अप्रसिद्धप्रतियोगिकाभावत्वेन अलीकप्रतियोगिकाभावस्य निरसात्, सर्वज्ञत्वाभावः कथं साधयितुं शक्यते इति। विषयेऽस्मिन् बौद्धाः वदन्ति सर्वविषयकज्ञानवत्त्वरूपसर्वज्ञत्वस्याप्रसिद्धत्वेऽपि किञ्चिदनभिज्ञत्वमेवात्र सर्वज्ञत्वं तदेव साध्यते। किञ्चिदनभिज्ञत्वं च स्ववृत्तिज्ञानविषयतानवच्छेदककिञ्चिद्धर्मकत्वम्।

तदर्थश्च, स्वम् आत्मा तद्वृत्ति यज्ज्ञानं तस्य विषयतानवच्छेदकः किञ्चिद्धर्मः यस्य स्वस्य सः स्ववृत्तिज्ञानविषयतानवच्छेदककिञ्चिद्धर्मकः आत्मा स्ववृत्तिज्ञानविषयतानवच्छेदककिञ्चिद्धर्मकत्वम् आत्मनि,तदेव साध्यम्। स्वत्वघटितबहुव्रीहौ स्वस्यैव यत्पदोपस्थाप्यत्वनियमात्। तथा च जीवात्मनां सकलधर्मावच्छिन्नविषयकज्ञानाभावात्, तत्र यद्धर्मावच्छिन्नविषयकज्ञाना-भावः, स्ववृत्तिज्ञानविषयतानवच्छेदकस्तादृशधर्मकत्वमव्याहतमेव। अत्र नैयायिकाः-

**इष्टसिद्धिः प्रसिद्धेंऽशे हेत्वसिद्धिरगोचरे।**

**नान्या सामान्यतः सिद्धिर्जातावपि तथैव सा।।**[१]

पूर्वोक्त आत्मत्वेन आत्मपक्षकानुमाने यदि प्रसिद्धः जीवात्मा पक्षः क्रियते तदा सिद्धसाधनं भवति। सिद्धस्य किञ्चिदनभिज्ञत्वस्य साध्यस्य साधनं दोषः। अगोचरे अज्ञाते ईश्वरे पक्षे हेत्वसिद्धिः हेतोश्चेतनत्वस्य अज्ञानम्। तथा च पक्षवृत्तित्वेन हेतुज्ञानस्य अनुमितिहेतुत्वात्। पक्षस्येश्वरस्याज्ञाने विशेषणज्ञानाभावान्न पक्षवृत्तित्वविशिष्टहेतुज्ञानमिति। ननु जीवेश्वरसाधारणात्मत्वेन सामान्यरूपेण पक्षत्वात् न पक्षाप्रसिद्धिरिति चेत्-तत्राप्यस्मदादिस्तदितर - आत्मा वा पक्ष इति विकल्पे पूर्ववदेव सिद्ध-साधनं हेत्वसिद्धिर्वा। न हि अन्यादृशी सामान्यरूपेण आत्मत्वेन काचित् पक्षसिद्धिरस्ति। ननु आत्मत्वं जातिः पक्ष इति चेत्। तर्हि 'आत्मत्वं जातिः न क्षितिकर्त्री चेतनत्वात्' इत्यनुमाने आत्मत्वजातौ पक्षे क्षितिकर्तृत्वा-भावस्य साध्यस्य सिद्धत्वात् सिद्धसाधनम्। एवं हेतोश्च चेतनत्वस्य तत्राऽसत्त्वाद् हेत्वसिद्धिश्च। ननु आत्मत्वं न सर्वज्ञसर्वकर्तृव्यक्तिसमवेतं जातित्वाद् गोत्ववत्' इत्यनुमाने न सिद्धसाधनं न वा हेत्वसिद्धिरिति चेन्न,

---

१. न्यायकुसुमाञ्जलि- कारिका ३/४

निषेध्यस्य सर्वज्ञ-सर्वकर्तृव्यक्तिसमवेतत्वस्याऽप्रसिद्धत्वात्, अलीकप्रतियोगिकाभावस्य निरस्तत्वात्। निषेधस्याशक्यत्वात्। अनुमाने सन्दिग्धसाध्यधर्माधर्मीपक्षः। पक्षे साध्यसन्देहाभावे, साध्याप्रसिद्धौ, साध्यतावच्छेदकाप्रसिद्धौ, पक्षाप्रसिद्धौ, पक्षतावच्छेदकाप्रसिद्धौ सर्वत्राश्रयासिद्धिरेव। अतोऽनुमानप्रमाणं नेश्वरे बाधकमिति सिद्धम्।

**उपमानप्रमाणम्**

भासर्वज्ञातिरिक्तनैयायिका उपमानस्य पृथक् प्रामाण्यं स्वीकुर्वन्ति। विषयेऽस्मिन् मीमांसकानां वेदान्तिनाञ्च मतमपि साम्यतामावहति। परन्तु चार्वाकमते उपमानस्य प्रामाण्यं नास्ति। सांख्यकाणादबौद्धमते तु उपमानस्यानुमानादावेव अन्तर्भावः भवति। अत उपमानस्य प्रामाण्यं, अतिरिक्तत्वञ्च प्रतिपादयन् उपमानस्य ईश्वराबाधकत्वं विविच्यते।

महर्षिगौतमेन 'प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्'[१] इत्यतः उपमानलक्षणं कृतम्। तस्य भावः विश्वनाथभट्टाचार्येणापि इत्थं प्रतिपादितम्-

**ग्रामीणस्य प्रथमतः पश्यतो गवयादिकम्**
**सादृश्यधीर्गवादीनां या स्यात् सा करणं मतम्।**
**वाक्यार्थस्यातिदेशस्य स्मृतिर्व्यापार उच्यते।**
**गवयादिपदानां तु शक्तिधीरूपमा फलम्।।**[२]

---

१. *न्यायसूत्रम् १/१/६*

२. *न्यायसिद्धान्तमुक्तावली - कारिका ७९-८०*

अर्थाद् 'गोसदृशो गवयः' इत्यतिदेशवाक्यश्रवणानन्तरं वनं गतः पुरुषो गोसदृशं जीवं दृष्ट्वा 'अयं गवयपदवाच्यः गोसदृशत्वात्' इत्येवं गवयगवयशब्द-योर्वाच्यवाचकभावसम्बन्धमवधारयति। गवयादिसंज्ञयाः गवयत्वादि-विशिष्टेन पिण्डेन सह शक्तिसम्बन्धस्य निश्चय एवोपमानजन्यत्वादुपमिति-पदार्थः । तदुक्तमाचार्येण-**'सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह'**[१] इत्याकारिकायामुपमितौ प्रसिद्धसाधर्म्यमेव कारणं तदेतदुपमानं प्रमाणमिति। महर्षिगौतमेनापि साधर्म्यस्यैवोपमानप्रमाणत्वेन स्थापयितुं पूर्वपक्षरूपेणोक्तम् 'अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः'[२] इति। यतोऽत्यन्तसाधर्म्यं हि गोर्गव्येव सम्भवति तत्र नोपमानं प्रवर्तते, न हि 'यथा गौस्तथा गौः' इत्येवं प्रयुज्यते। प्रायस्साधर्म्यं तु वृषभमहिषयोरपि संभवति तत्रापि नोपमानं प्रवर्तते, न हि 'यथा वृषभस्तथा महिषः' इत्येवं प्रयुज्यते। एकदेशसाधर्म्यं तु सर्वस्य सर्वेण सम्भवति तत्रापि नोपमानं प्रवर्तते, नहि सर्वेण सर्वमुपनीयते । नहि 'यथा गजस्तथा गवयः' इत्येवं प्रयुज्यते। गजगवयोश्च पशुत्वादिना एकदेशसाधर्म्यं विज्ञेयम्। तथा च त्रिविधस्यापि साधर्म्यस्योपमानप्रयोजकत्वाभावादुपमानं प्रमाणं न सिध्यतीति पूर्वपक्षः।

समाधानमिदम् - 'प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषा-नुपपत्तिः'[३] इति। अर्थाल्लोकप्रसिद्धात् साधर्म्यादुपमानसिद्धिः सम्भवति। एवं पूवोक्तदोषानुपपत्तिश्च। सामान्यंतः प्रसिद्धसाधर्म्यस्य गोर्गवयोर्विद्यमान-

---

१. *न्यायकुसुमाञ्जलि-कारिका ३/१०*

२. *न्यायसूत्रम् २/१/४*

३. ,, २/१/४५

त्वात् सिद्धमुपमानमपि प्रमाणमिति। अत्र सूत्रभाष्ये किञ्चित् संशोधनं कृत्वाऽर्वाचीननैयायिकाः कथयन्ति यत् साधर्म्यातिरिक्तेनापि वैधर्म्येण अथ चाऽसाधारणधर्मेणोपमितिर्भवतीति। अत उत्तरवर्त्तिनैयायिकैः 'तच्चोपमानं त्रिविधं साधर्म्यविशिष्टपिण्डज्ञानम्, वैधर्म्यविशिष्टपिण्डज्ञानम्, असाधारणधर्मविशिष्टपिण्डज्ञानञ्च' इति। तत्र साधर्म्यविशिष्ट-पिण्डज्ञानमुक्तमेव। द्वितीयं यथा 'खड्गमृगः कीदृक्' इति पृष्टे नासिकालसदेकशृङ्गोऽतिक्रान्तगजाकृतिश्चेति तज्ज्ञातृभ्यः श्रुत्वा, कालान्तरे तादृशपिण्डं पश्यतोऽतिदेशवाक्यार्थं स्मरतः 'खड्गमृगः खड्गमृगपदवाच्यः' इत्युपमितिरुत्पद्यते, अत्र नासिकालसदेकशृङ्गमसाधा-रणधर्मः। तृतीयं यथा 'उष्ट्रः कीदृक्' इति पृष्टे 'अश्वादिवदसमानपृष्ठो न ह्रस्वग्रीवः शरीरश्च' इति आप्तेभ्यः श्रुत्वा, कालान्तरे तत्तत्पिण्डदर्शनात् तादृशवैधर्म्यविशिष्टपिण्डज्ञानम्, ततोऽतिदेशवाक्यार्थस्मरणं, ततः 'उष्ट्र उष्ट्रपदवाच्यः' इत्युपमितिरुत्पद्यते।

## उपमानस्य प्रमाणान्तरत्वम्

नैयायिकैः प्रतिपादितमुपमानप्रमाणं बौद्धमते प्रत्यक्षप्रमाणे अन्तर्भवति। बौद्धमते गवयं दृष्ट्वा दृश्यमानप्राणी गोसदृश इत्याकारकं ज्ञानं भवति। तथा च प्रत्यक्षप्रमाणेन कार्यसिद्धौ उपमानप्रमाणस्य प्रमाणान्तरत्वं नास्त्येव। अत्र नैयायिकानां कथनमस्ति सादृश्यज्ञानं प्रत्यक्षस्य विषयो नास्ति। यतोहि 'गो सदृशो गवयः' इति ज्ञानावसरे गवि

सादृश्यज्ञानस्याभावात्। सादृश्यं प्रत्यक्षप्रमाणेन ज्ञातुं नैव शक्यते। अतः उपमानस्यावश्यकता वर्तते।

ननु तथापि 'गवयो गवयपदवाच्यः' इत्युपमितौ अतिदेशवाक्यस्य, गवयपिण्डेन सहेन्द्रियसन्निकर्षस्य चाऽपेक्षणात्, नात्र उपमानरूपप्रमाणान्तराभ्युपगम आवश्यक इति चेन्न, इयं प्रतीतिर्नाऽतिदेशवाक्यमात्रजन्या, तथा सति गवयमपश्यतोऽपि तादृशप्रतीतिप्रसङ्गात्। नापि इयं प्रतीतिः गवयपिण्डेन सहेन्द्रियसन्निकर्षमात्रफलम्, तथा सति अतिदेशवाक्यमश्रुतवतोऽपि तादृशप्रतीतिप्रसङ्गात्। ननु नगरस्थस्य पुरुषस्य गवयेन सह नेन्द्रियसन्निकर्षः इति भिन्नकालतया अतिदेशवाक्येन्द्रियसन्निकर्षयोः स्वरूपतः समाहारासम्भवेऽपि इन्द्रियसन्निकर्षसमये अतिदेशवाक्य-तदर्थयोः स्मर्यमाणत्वेन समाहारसम्भवात्, प्रतीतिरियं समाहारफलमेवाऽस्तु इति चेन्न, अतिदेशवाक्यार्थस्मरणेऽपि गवयपिण्डसम्बद्धेनेन्द्रियेण गवयगतगोसादृश्यानुपलम्भे शक्तिनिर्णयासिद्धेः। ननु सादृश्यज्ञाने सति शक्तिनिर्णयस्तावदुत्पद्यते, तच्च सादृश्यज्ञानं प्रत्यक्षफलं, तेन अतिदेशवाक्यफलस्य अतिदेशवाक्यार्थस्मरणस्य, प्रत्यक्षफलस्य सादृश्यज्ञानस्य च समाहारादुत्पद्यमानः शक्तिपरिच्छेदः शाब्दबोधे प्रत्यक्षे वान्तर्भवेदिति चेत्, तर्हि प्रत्यक्षज्ञानजन्यस्यापि प्रत्यक्षेऽन्तर्भावे, प्रायशः प्रत्यक्षफलस्य लिङ्गपरामर्शात्मकानुमानस्य, श्रौत्रानुभवात्मकपदज्ञानस्य च प्रत्यक्षेऽन्तर्भावः स्यात्। ननु तत्फलस्य तदनन्तर्भावे निर्विकल्पकप्रत्यक्षजन्यं सविकल्पकमपि प्रत्यक्षं न भवेदिति चेन्न, यस्य

ज्ञानविशेषस्य यदसाधारणं कारणमिन्द्रियतत्सन्निकर्षादि, तदनुवृत्तौ जायमानं ज्ञानं तस्य प्रमाणस्य फलं भवति, तन्निवृत्तौ तु ततो बहिर्भवतीति नियमः। अस्ति हि सविकल्पकात् प्रागपि इन्द्रियसन्निकर्षः, तेन तत्प्रत्यक्षमेव। ननु तर्हि 'अयं गवयपदवाच्यः' इत्यपि प्रत्यक्षमेव सादृश्यादिज्ञानकाले सादृश्यज्ञानार्थं विस्फारितचक्षुःसन्निकर्षसत्त्वादिति चेन्न, तत्र खलु सन्नपि चक्षुःसन्निकर्षः न कारणं व्यभिचारात्। अतिदेशवाक्यार्थस्मरणाभावेन केवलं गोसादृश्यविशिष्टं पिण्डमनुभूतवतः पश्चादिन्द्रियसन्निकर्षाभावेऽपि, अतिदेशवाक्यार्थस्मरणे सति गोसादृश्यविशिष्टपिण्डस्मरणादेव 'असौ गवयपदवाच्यः' इत्यपि शक्तिपरिच्छेदसम्भवात्।

अत्र पुनरपि बौद्धः शङ्कते यत् गोगवययोः प्रत्यक्षं विना सादृश्यज्ञानं न सम्भवति, अत उपमानप्रमाणस्य प्रत्यक्षे अन्तर्भावः भवितुमर्हति इति। अस्य समाधानावसरे जयन्तभट्टाः कथयन्ति यत् अनुमानप्रमाणं पर्वते धूमस्य यद्दर्शनं भवति तत् प्रत्यक्षप्रमाणेन जातेऽपि प्रत्यक्षप्रमाणभिन्नं वर्तते। तथैव सादृश्यस्य यत् प्रत्यक्षं भवति। तदऽपि प्रत्यक्षप्रमाणभिन्नमेव। तथा च यथा अनुमानप्रमाणे प्रत्यक्षस्य साहाय्यसत्त्वेऽपि अनुमानप्रमाणं प्रत्यक्षप्रमाणात् भिन्नं वर्तते। तथैव उपमानप्रमाणमपि प्रत्यक्षप्रमाणापेक्षया भिन्नं वर्तते।

तर्कसंग्रहस्य नीलकंठीटीकायामुल्लेखितं यत् - उपमानेन यादृशं ज्ञानमुत्पद्यते तत् सम्भावितं वर्तते, किन्तु प्रत्यक्षेणानुमानेन च यद् ज्ञानं जायते तत् निश्चयात्मकं भवति। अतः प्रत्यक्षानुमानाभ्यां भिन्नमुपमानं

प्रमाणम्।[१]

सांख्यमते उपमानस्य प्रत्यक्षे अनुमाने शब्दे च अन्तर्भावो भवति। वाचस्पतिमिश्रैः सांख्यतत्त्वकौमुद्यां लिखितं यत् - 'उपमानं तावद्यथा गौस्तथा गवय इति वाक्यम्। तज्जनिता धीरागम एव। योऽप्ययं गवयशब्दो गोसदृशस्य वाचक इति प्रत्ययः, सोऽप्यनुमानमेव। यो हि शब्दो यत्र वृद्धैः प्रयुज्यते, सोऽसति वृत्त्यन्तरे, तस्य वाचकः, यथा गोशब्दो गोत्वस्य। प्रयुज्यते चैवं गवयशब्दो गोसदृशे, इति तस्यैव वाचकः इति तद् ज्ञानमनुमानमेव। यत्तु गवयस्य चक्षुःसन्निकृष्टस्य गोसादृश्यज्ञानं तत् प्रत्यक्षमेव। अत एव स्मर्यमाणायां गवि गवयसादृश्यज्ञानं प्रत्यक्षम्। न त्वन्यद्गवि सादृश्यमन्यच्च गवये। भूयोऽवयवसामान्ययोगो हि जात्यन्तरवर्ती जात्यन्तरे सादृश्यमुच्यते। सामान्ययोगश्चैकः। स चेद्गवेयप्रत्यक्षो, गव्यपि तथेति नोपमानस्य प्रमेयान्तरमस्ति, यत्र प्रमाणान्तरमुपमानं भवेद्, इति न प्रमाणान्तरमुपमानम्'[२] इति। अत्र नैयायिकाः सांख्यानां मतं न साधु इति प्रतिपादन्ति। तद्यथा—उपमानस्य यद् फलं संज्ञासंज्ञिसम्बन्धज्ञानं वर्तते तस्य सिद्धिः प्रत्यक्षेण अथवा अनुमानेन भवितुं नार्हति। प्रत्यक्षे तु इन्द्रियार्थसन्निकर्षे आधारितं वर्तते। तत्र अतिदेशवाक्यस्यावश्यकतैव नास्ति। परन्तु उपमाने तस्यावश्यकता वर्तते। अत उपमानस्य प्रत्यक्षप्रमाणान्तरत्वं सिद्धम्।

एवमुपमानस्य अनुमानेऽन्तर्भावखण्डनावसरे नैयायिकानां

---

*१. तर्कसंग्रह- नीलकंठी पृ० १२५*

*२. सांख्यतत्त्वकौमुदी पृ० ६६*

कथनमस्ति यत् - उपमानेन यादृशो बोधो जायते अनुमानेन तथा न। उपमानेन यथा गौः तथा गवय इति बोधो भवति। तथा अनुमानेन यथा धूमस्तथा वह्निरिति बोधो नैव भवितुमर्हति। एवमनुमाने व्याप्तिज्ञानमावश्यकम् किन्तु उपमाने व्याप्तिज्ञानस्यावश्यकतैव नास्ति। ज्ञातव्यज्ञातयोः सादृश्यदर्शनं पूर्वं नासीदत उपमानस्यान्तर्भावोऽनुमाने नैव कर्तुं शक्यते। अत उपमानस्य अनुमानात् पृथक्त्वं सिद्धम्।

उपमानस्य शब्दप्रमाणेऽपि नान्तर्भावः। शब्दप्रमाणे प्रत्यक्षस्यावश्यकता नास्ति। उपमितौ तु गवयपिण्डस्य प्रत्यक्षमावश्यकं वर्तते। अत एव जयन्तभट्टेन लिखितं यत्—

"सामग्रीभेदात् फलभेदाच्च प्रमाणभेदो भवन्कथमपक्रियते—

**अन्ये एव हि सामग्रीफले प्रत्यक्षलिङ्गयोः।**
**अन्ये एव हि सामग्रीफले शब्दोपमानयोः।।[१]"**

अतो द्वयो पार्थक्यं सिद्धम्। वैशेषिकाः हि उपमानप्रमाणस्य अनुमानप्रमाणतः पृथक् प्रमाणत्वं न स्वीकुर्वन्ति। तदुक्तमाचार्य-विश्वनाथेन—

**शब्दोपमानयोर्नैव पृथक्प्रामाण्यमिष्यते।**
**अनुमानगतार्थत्वादिति वैशेषिकं मतम्।।[२]**

---

१. *न्यायमञ्जरी (प्रमाणप्रकारणम्) - ३०*

२. *न्यायसिद्धान्तमुक्तावली - कारिका १४०-१४१*

यद्यपि प्रायः सर्वेषु विषयेषु न्यायवैशेषिकमते साम्यतां धारयति तथापि प्रमाणविषये वैमत्यं वर्तते । अतोऽस्मिन् विषये किञ्चित् वक्तुकामः। वैशेषिकाः हि बौद्धा इव प्रत्यक्षं अनुमानञ्चेति प्रमाणद्वयवादिनः। अतः तेषां मते नोपमानस्यातिरिक्तं प्रामाण्यम्। 'अयं गवयपदवाच्यः' इत्युपमितित्वेनाऽभिमतस्य ज्ञानस्यानुभूतप्रत्यभिज्ञा-रूपत्वात्। नगरस्थ एव पुरुषः 'गोसदृशो गवयपदवाच्यः' इत्यतिदेशवाक्यात् शक्तिं गृहीत्वा वनस्थः सन् केवलं प्रत्यभिजानाति 'सोऽयं गवयपदवाच्यः' इति। तेन शब्दप्रमाणेनैव शक्तिग्रहः सम्पद्यते। तदुक्तं प्रशस्तपादभाष्ये 'आप्तेनाप्रसिद्धस्य गवयस्य गवा गवयप्रतिपादनादुपमानमाप्तवचनमेव'[१] इति। अथवा न्यायकन्दल्यां श्रीधरेण इत्थं प्रतिपादितम् 'आप्तवचनञ्चानुमानम्। तस्मादुपमानमप्यनुमाना-व्यतिरिक्तमित्यभिप्रायः'[२] इति। अनेन ज्ञायते यत् - वैशेषिकराद्धान्ते उपमानस्यानुमानेऽन्तर्भावः । तथा सति 'गोसदृशो गवयः' इत्यत्र गोसदृशे वस्तुनि गवयपदप्रयोगमुपलभ्य तस्मादेव हेतोर्गोसदृशस्य गवयपदवाच्यत्वमनुमीयते। तथा च गवयव्यक्तिप्रत्यक्षानन्तरं गवयपदं गोसदृशपिण्डवाचकम्, असति लक्षणादिवृत्त्यन्तरे वृद्धैः गोसदृशे प्रयुज्यमानत्वात्। असति च वृत्त्यन्तरे वृद्धैर्यत्र यत्पदं प्रयुज्यते, तत्पदं तस्यार्थस्य वाचकं भवति, यथा गोपदं गोत्वप्रवृत्तिनिमित्तकस्य गोर्वाचकम्। यद्वा गवयपदं सप्रवृत्तिनिमित्तकं साधुपदत्वादित्यनुमानेन हेतोः पक्षधर्मताबलाद् गवयत्वप्रवृत्तिनिमित्तकत्वं गवयपदोद्देश्यकानुमितौ भासते

---

१. प्रशस्तपादभाष्यम् पृ० ५३०

२. प्रशस्तपादभाष्ये न्यायकन्दली पृ० ५३१

एव। तथा च सर्वत्र उपमानजन्यबोधस्यानुमितित्वेनैव निर्वाहे उपमितिकरणतया उपमानस्य पृथक् प्रमाणत्वकल्पनमनुचितमिति।[१]

अत्राचार्याः—

**सादृश्यस्यानिमित्तत्वान्निमित्तस्याऽप्रतीतितः ।**
**समयो दुर्ग्रहः पुर्वं शब्देनाऽनुमयाऽपि वा ।।[२] इति ।**

गोसादृश्यं न गवयपदप्रवृत्तिनिमित्तं किन्तु गवयत्वमेव । यदि गोसादृश्यं गवयपदप्रवृत्तिनिमित्तं स्यात् तर्हि नित्यवन-वासिनां गवयपदेन व्यवहारो न स्यात्, तेषां गोः प्रतीत्यभावात्, गोप्रतियोगिकस्य सादृश्यस्य गवये ज्ञातुमशक्यत्वात्। ननु आरण्यकानां गवयत्वं गवयपदप्रवृत्तिनिमित्तकम्, नागरिकाणां तु गोसादृश्यमित्युभयं विकल्पेन गवयपदप्रवृत्तिनिमित्तमस्तु इति चेन्न, तथा सति आरण्यकः पुरुषः स्वयमप्रतीतं गोसादृश्यविषयकं सङ्केतं परस्मै प्रतिपादयितुं 'गोसदृशो गवयपदवाच्यः' इत्यतिदेशवाक्यं कथं प्रयुञ्जीत। ननु अतिदेशवाक्यप्रयोक्तुः पुरुषस्य वृद्धव्यवहाराद् गवयत्वे एव गवयपदस्य व्युत्पत्तिर्न तु गोसादृश्ये इत्यत्र किं विनिगमकमिति चेत्। वस्तुस्थितिस्तावदियम्— गवयत्वस्य जातित्वेव लघुत्वात् गोसादृश्यस्य चोपाधित्वेन गुरुत्वात्। स्वयं यत्र

---

१. *न्यायसिद्धान्तमुक्तावली पृ० ४६३*

२. *न्यायकुसुमाञ्जलि- कारिका ३/११*

प्रवृत्तिनिमित्ते व्युत्पत्तिर्गृहीता तत्र परस्यापि सा भवत्विति बुद्ध्या आरण्यकः पुरुषः अतिदेशवाक्यं प्रयुङ्क्ते , तेन च सा गवयत्वे एव ज्ञातेति तदेव प्रवृत्तिनिमित्तं स बोधयेत्। किञ्च गोसादृश्यं प्रवृत्तिनिमित्तं तदुपलक्षितं धर्मान्तरं वेति सन्देहेऽपि प्रवृत्तिनिमित्तविशेषनिश्चयाभावात् न त्वदभिमतस्यातिदेशवाक्यादेव शक्तिपरिच्छेद इति फलस्य सिद्धिः। यथा हि 'गन्धवती पृथिवी' इत्यत्र गन्धवत्त्वं पृथिवीपदप्रवृत्तिनिमित्तस्य पृथिवीत्वस्योपलक्षणं, तथा गोसादृश्यं गवयपदप्रवृत्तिनिमित्तस्य गवयत्वस्योपलक्षणम्, अथवा गोसादृश्यमेव गवयपदस्य प्रवृत्तिनिमित्तमिति निश्चयाभावः।

अतो गोसादृश्यप्रवृत्तिनिमित्तकत्वनिर्णयाभावाद् गवयत्वप्रवृत्तिनिमित्तस्य च तेन पुंसा अगृहीतत्वात्, अतिदेशवाक्यादेव शक्तिग्रह इति पराभिमतसिद्धिर्न सम्भवति। तथा च गोसदृशो गवयपदवाच्य इत्यतिदेशवाक्यात् गोसादृश्यविशिष्टे 'गवयपदवाच्यत्वग्रहेऽपि, शक्यतावच्छेदकीभूतगवयत्वविशिष्टे तादृशातिदेशवाक्यात् गवयपदवाच्यत्वग्रहासम्भवात् शब्दस्यासामर्थ्यम्, गवयत्वविशिष्टो धर्मी गवयपद-वाच्यो गोसदृशत्वात्' इत्यत्र गवयत्वविशिष्टे गवयपदवाच्यत्वानुमितेः पूर्वं 'गवयत्वविशिष्टो गवयपदवाच्यत्वव्याप्यगोसादृश्यवान्' इति परामर्शस्यापेक्षणीयत्वात्, गवयत्वविशिष्टानुपस्थितौ च तादृशपरामर्शाभावात्, अनुमानस्यापि-असामर्थ्यमतः वैशेषिकैर्बौद्धैरपि - अनुमानातिरिक्तमुपमानप्रमाणमङ्गीकर्तव्यमेव।

केचन दार्शनिका उपमानप्रमाणस्य शब्देऽन्तर्भावमिच्छन्ति। यद्यपि वैशेषिकाः शब्दप्रमाणस्यानुमानातिरिक्तं प्रामाण्यं न स्वीकुर्वन्ति। तथापि प्रशस्तपादभाष्ये 'उपमानमाप्तवचनमेव'[१] इति प्रतिपादितं वर्तते। एवं च वाचस्पतिना सांख्यतत्त्वकौमुद्याम् - 'उपमानं तावद्यथा गौस्तथा गवय इति वाक्यम्। तज्जनिता धीरागमएव'[१] इत्यत उपमानप्रमाणस्य शब्दप्रमाणेऽन्तर्भावस्याशयः प्रतिपादितः। अतोऽत्र पूर्वपक्षी उपमानस्य शब्दप्रमाणेऽन्तर्भावमिच्छन् वदति यत् - मा भूत् गोसादृश्यं गवयपदप्रवृत्तिनिमित्तम्, मा च भूत् गवयपदप्रवृत्तिनिमित्तस्य गवयत्वस्य अप्रतीतत्वाद् गवयपिण्डदर्शनात् पूर्वं गवयपदशक्तिग्रहः, तथापि वनगतस्य पुरुषस्य गवयपिण्डप्रत्यक्षकाले यदा प्रवृत्तिनिमित्तं गवयत्वं प्रत्यक्षं, तदा तत्सहकृतं प्रागनुभूतं 'गोसदृशो गवयपदवाच्यः' इत्यतिदेशवाक्यमेव स्मृत्यारूढं गवयत्वविशिष्टे गवयपदस्य शक्तिग्रहं जनयिष्यतीति कथमुपमानस्य प्रमाणान्तरत्वं सम्भवेत्?

ननु 'गोसदृशो गवयपदवाच्यः' इत्यतिदेशवाक्यं कथं गवयत्वविशिष्टे गवयपदस्य शक्तिग्रहमुत्पादयतीति चेदुच्यते। यदा गवयत्वविशिष्टपिण्डदर्शनं तदा लाघवप्रतिसन्धानेन गवयत्वे गवयपदप्रवृत्तिनिमित्तत्वनिश्चयेन गोसदृशपदस्य गवयत्वे तात्पर्यनिर्णयात्, अतिदेशवाक्यानां गोसदृशपदं लक्षणया गवयत्वबोधं प्रसूते।

ननु गोसदृशपदस्य वाक्यत्वात्, वाक्ये च शक्तेरभावात्, शक्यसम्बन्धरूपलक्षणाया अप्यसम्भवात्, कथं गोसदृशपदं लक्षणया गवयत्वबोधकमिति चेत्, तत्र सदृशपदस्यैव गवयत्वे लक्षणा गोपदं तु तात्पर्यग्राहकम्। अतः शब्दप्रमाणेन सङ्केतग्रहो सम्भवतीति नोपमानं प्रमाणान्तरमिति पूर्वपक्षस्याशयः।

---

१. *सांख्यतत्त्वकौमुदी पृ० ६६*

अत्र ब्रूमः—पूर्वपक्षिणा 'गोसदृशो गवयपदवाच्यः' इत्यत्र गोसदृशपदस्य गवयत्वविशिष्टे या लक्षणा कृता सा नोपपद्यते, मुख्यार्थबाधे हि लक्षणाया अवसरः, न चात्र मुख्यार्थबाधः तस्माल्लक्षणानुपपन्ना। तदुक्तं कारिकायाम्—

**श्रुतान्वयादनाकाङ्क्षं न वाक्यं ह्यन्यदिच्छति।[1] इति**

अयं भावः - लक्षणां प्रति अन्वयानुपपत्तिरथवा तात्पर्यानुपपत्तिः कारणम्। अत्र 'गोसदृशाो गवयपदवाच्यः' इति वाक्ये श्रुतानां गवयपदवाच्य गोसदृशानामर्थानां तादात्म्यसम्बन्धेनान्वयबोधजननादन्यत् प्रत्यक्षेणोपनीतं गवयत्वादिकं वाक्यार्थप्रतिपादनाय नेच्छति नाऽपेक्षते। तथा च कारणा-भावाल्लक्षणा कर्तुं न शक्यते। अत उपमानं प्रमाणान्तरमेव। ननु तर्हि लक्षणा कुत्र भवति इति चेत्, तत्राप्याहाचार्यः

**पदार्थान्वयवैधुर्यात्तदाक्षिप्तेन सङ्गतिः।[2]**

अर्थात् 'गंगायां घोषः' इत्यादिस्थले तु गङ्गापदस्य मुख्यार्थेन भगीरथरथखातावच्छिन्नजलप्रवाहेण पदार्थान्तरस्य घोषस्यान्वयानुपपत्त्या मुख्यार्थबाधेन तदाक्षिप्तेन शक्यार्थप्रवाहलक्षितेन तीरेण सङ्गतिरन्वयबोधः सम्पद्यते। 'गोसदृशो गवयपदवाच्यः' इत्यत्र तु मुख्यार्थबाधाऽभावात् लक्षणाऽसम्भवः। तथा सति शब्दप्रमाणेन संकेतग्रहो न सम्भवति अतस्तद्-ग्रहणायोपमानं प्रमाणान्तरं स्वीकर्तव्यमेव।

---

१. २. न्यायकुसुमाञ्जलि- कारिका ३/१२

## सादृश्यनिरूपणम्

उपमानप्रमाणवादिनः मीमांसकाः वदन्ति यत् - सादृश्यमतिरिक्तः पदार्थस्तत्साधकं पृथग् उपमानप्रमाणमिति। तथाहि तेषां मते सादृश्यं द्रव्यादिभ्यः पदार्थान्तरम्, तथाचाऽनुमानम् - 'सादृश्यं द्रव्यगुणकर्मभिन्नं गुणसमवेतत्वात् सत्तादिसामान्यवत्'। सादृश्यं सामान्यभिन्नं सप्रतियोगिकत्वात्, सामान्यवृत्तित्वाच्च (सादृश्यं समवायविशेषभिन्नम् अभाववृत्तित्वाद् गगनाभाववत् यथा घटाभावो नित्यस्तथा पटाभावोऽपीति प्रत्ययात् पूर्वोक्तद्विविधानुमानेन सादृश्यस्य, (समवायविशेषस्य गर्भोक्तिकतया) भावातिरिक्तत्वं हरिदाशभट्टाचार्येण प्रतिपादितम्।[१] परन्तु तदुत्तरवर्तिना विश्वनाथपञ्चाननेन तत्र संशोधनं कृत्वा सामान्यवृत्तित्वहेतुनैव भावातिरिक्तत्वं साधितम्।)[२] सादृश्यम् अभावभिन्नं विलक्षणप्रतियोगितानिरूपितानुयोगित्वेन नञ्पदजन्यप्रतीतिविषयत्वाभावाद् इत्यनुमानैः सादृश्यस्य पदार्थान्तरत्वं सिद्धम्।

तच्च सादृश्यं न प्रत्यक्षगम्यमिन्द्रियपातमात्रेण तदप्रतीतेः। प्रतियोगिज्ञानसहकृतमिन्द्रियं सादृश्यग्राहकमित्यपि न वाच्यम्, 'गोसदृशो गवयः' इति ज्ञानानन्तरं जायमानस्य 'सा गौर्गवयसदृशी' इत्यसन्निकृष्टगोविशेष्यकग्रहस्याप्रत्यक्षत्वात्। नाप्यनुमानगम्यं लिङ्गाप्रतिसन्धानेऽपि ज्ञायमानत्वात्। न शब्दगम्यं सादृश्यस्यासार्वत्रिकत्वादिति।[३] अतः सादृश्य-

---

*१. न्यायकुसुमाञ्जलि- हरिदासी पृ० ११५-११६*

*२. न्यायसिद्धान्तमुक्तावली पृ० २८*

*३. न्यायकसुमाञ्जलि- हरिदासी पृ० ११५-११६*

ग्रहाणाय पृथक् प्रमाणमङ्गीकरणीयं तच्चोपमानरूपमेवेति मीमांसकानामशयः।

विषयेऽस्मिन् नैयायिकाः सादृश्यस्य पदार्थान्तरत्वमेव खण्डयन्ति, भावाभावातिरिक्तपदार्थस्याप्रसिद्धत्वात् सादृश्यस्य न भावभिन्नत्वे सति अभावभिन्नत्वं सम्भवति। न वा भावाभावोभयात्मकत्वमपि सम्भवति। अतः सादृश्यस्य भावाभावान्यतरत्वमेव स्वीकर्तव्यम्। तदुक्तमाचार्यैः—

**परस्परविरोधे हि न प्रकारान्तरस्थितिः।**
**नैकतापि विरुद्धानामुक्तिमात्र विरोधतः।।**[1]

अयमभिप्रायः—सादृश्यं भावः, अभावो वा, उभयकोट्यतिरिक्तपदार्थस्याऽप्रसिद्धेः। सादृश्यस्याऽभावत्वे सप्तमपरार्थत्वम्। सादृश्यस्य भावत्वे च गुणवत्त्वे सति, द्रव्यत्वम्। सादृश्यस्य भावत्वे, निर्गुणत्वे, सामान्यवत्वे, कर्मान्यत्वे च सति गुणत्वम्। सादृश्यस्य भावत्वे, निर्गुणत्वे, समान्यवत्त्वे गुणान्यत्वे च सति कर्मत्वम्। सादृश्यस्य भावत्वे, निर्गुणत्वे, निःसामान्यत्वे, असमवेतत्वे च समवायत्वम्। सादृश्यस्य भावत्वे, निर्गुणत्वे, निःसामान्यत्वे, समवेतत्वे, अनेकाश्रितत्वे च सति सामान्यत्वम्। सादृश्यस्य भावत्वे, निर्गणत्वे, निःसामान्यत्वे, समवेतत्वे, एकाश्रितत्वे च विशेषत्वम्।[2] यदि सादृश्यं गुणवत्त्वाद्विविधा-

---

१. *न्यायकुसुमाञ्जलि- कारिका ३/८*

२. *तत्रैव हरिदासी १/८*

स्वन्तर्भवेत् द्रव्यादिपदार्थषट्कान्नातिरिच्यते, अनन्तर्भावे च पदार्थ एव न स्यात्। इत्थं प्रकारेण पदार्थव्यवस्थितिः कार्या।

नैयायिकैः सादृश्यस्य पदार्थान्तरत्वे निरस्ते सति, अत्र पुनः मीमांसकः शंकते-सादृश्यं पदार्थान्तरं मा भूत्, अस्तु सामान्यमेव सादृश्यं, तथापि तद्ग्राहकमेवोपमानं प्रमाणान्तरं भवितुमर्हतीति वैशेषिकाणामाशयः। तस्याचार्येण इत्थं निराकृतम् -

**'साधर्म्यमिव वैधर्म्यं मानमेव प्रसज्यते'**[1]

यदि मीमांसकाः साधर्म्यग्राहकं प्रमाणान्तरमुपमानप्रमाणं स्वीकुर्वन्ति, चेत्, तुल्ययुक्त्या वैधर्म्यग्राहकमपि सप्तमं प्रमाणान्तरं मीमांसकैः स्वीकर्तव्यम् भवेदिति प्रतिबन्धिमुखेन नैयायिकास्तन्मतं खण्डयन्ति। अत्र मीमांसकाः वदन्ति यत्- 'सा गौरेतद्विसदृशी' इति ज्ञाने गवि करभवैधर्म्यं करभवृत्तिधर्माभाववत्त्वम्। तच्चाऽभावरूपत्वात् स्मृतेः गवि अनुपलब्धिप्रमाणगम्यमेवेति न तत्र मानान्तरापत्तिः। सादृश्यस्य तु भावरूपत्वात् प्रमाणान्तरमन्वेषणीयमेव, इत्यपि न युक्तम्, यतोहि— करभावृत्तिधर्मवत्त्वं हि गवि करभवैधर्म्यम्, तच्च भावरूपमेवेति नानुपलब्धिगम्यम्। ननु करभस्य गोवैधर्म्यम्, गवि करभवैधर्म्यं विनाऽनुपपन्नमतः गवि करभवैधर्म्यं कल्पयतीति तदर्थापत्तिप्रमाणगम्यमेवेति न तदर्थं प्रमाणान्तरं कल्पनीयमिति चेत्, तर्हि गवयस्य गोसादृश्यं, गोर्गवयसादृश्यं विनाऽनुपपन्नमतः गवि गवयसादृश्यं

---

१. न्यायकुसुमाञ्जलि- कारिका ३/९

कल्पयतीति तदपि अर्थापत्तिप्रमाणगम्यमेवेति तुल्यन्यायात् सादश्य-ग्राहकमुपमानं प्रमाणान्तरं न मन्तव्यम् स्यात्। निष्कर्षत एतदायाति - यदि मीमांसकाः सादृश्यग्राहकत्वेन उपमानस्य प्रामाण्यं स्वीकुर्वन्ति चेत्, वैधर्म्यग्राहकमपि किमपि सप्तमं प्रमाणमङ्गीकरणीयमेव। यदि वैधर्म्यग्राहकं अर्थापत्तिप्रमाणं तदा सादृश्यस्यापि अर्थापत्त्या एव ग्रहणं स्यात्, तथा सति का आवश्यकता उपमानप्रमाणस्य मीमांसकमते। अत उपमानं न सादृश्य-ग्राहकत्वेन प्रमाणमपि तु तस्य संज्ञासंज्ञिसम्बन्धनिर्णायकत्वेन प्रामाण्यमिति।

एवञ्च संज्ञासंज्ञिसम्बन्धमात्रजनकमुपमानप्रमाणं कथमपि नेश्वरे बाधकम्।

## शब्दप्रमाणम्

शब्दप्रमाणस्याऽतिरिक्तप्रमाणत्वविषये विवादेऽपि चार्वाका-तिरिक्तैः सर्वैः दार्शनिकैः शब्दप्रमाणमङ्गीक्रियते। अत एव परमकारुणिकमहर्षिणा गौतमेन 'आप्तोपदेशः शब्दः'[१] इति शब्दलक्षणं कृतम्। तदेवानुमोदयन् तर्कसंग्रहकारः - 'आप्तवाक्यं शब्दः' (प्रमाणम्) इति आह। अत्र आप्तो नाम - यथार्थवक्ता। वाक्यं-पदसमूहः, यथा 'गामा-नय शुक्लां दण्डेन' इति। शक्तं पदम्। तत्र का शक्तिरिति चेत्, उच्यते ईश्वरेच्छैवशक्तिः। सा च पदप्रकारकार्थविशेष्यिका, अर्थप्रकारकपदविशे-

---

१. *न्यायसूत्रम् १/१/७*

२. *तर्कसंग्रहः पृ० १२९*

ष्यिका च। तत्राद्या-'अस्मात्पदादयमर्थो बोद्धव्य' इति। द्वितीया च इदं पदममुमर्थं बोधयतु' इत्याकारिका। तादृशशक्त्यात्मकसम्बन्धेन 'घटमानय' इति पदज्ञाते सति पदार्थोपस्थितिर्जायते तदनन्तरं 'घटकर्मकमानयनं कार्यम्' इत्यात्कारकः शाब्दबोधो जायते। तदुक्तं मुक्तावल्याम् -

**पदज्ञानं तु करणं, द्वारं तत्र पदार्थधीः।**
**शाब्दबोधः फलं, तत्र शक्तिधीः सहकारिणी।।**[1]

तत्र पदं न करणं मौनिश्लोकादौ शाब्दबोधाभावप्रसङ्गात्, अत पदज्ञानं करणं, वृत्त्यात्मकशक्तिलक्षणान्यतरसम्बन्धेन पदजन्य-पदार्थोपस्थितिः व्यापारः, उपस्थितानां पदार्थानां परस्परान्वयावगाहिविशि-ष्टान्वयबोधरूपः शाब्दबोधः फलम्। तत्र पदं द्विविधम् - वैदिकं, लौकिकञ्च। वैदिकमीश्वरोक्तत्वात् सर्वमेवप्रमाणम्, लौकिकं त्वाप्तोक्तं प्रमाणम् अन्यदप्रमाणम्।

एवं 'आकांक्षा योग्यता सन्निधिश्च वाक्यार्थज्ञाने हेतुः। तत्र आकांक्षापदस्य पदान्तरव्यतिरेकप्रयुक्ताऽन्वयाऽनुभावकत्वम्। अर्थाऽबाधो योग्यता। पदानामविलम्बेनोच्चारणं सन्निधिः। तथा च आकांक्षादिरहितं वाक्यमप्रमाणम्। यथा - गौरश्वः पुरुषो हस्तीति न प्रमाणम् आकाक्षाविरहात्। वह्निना सिञ्चेदिति न प्रमाणं योग्यताविरहात्। प्रहरे प्रहरेऽसहोच्चारितानि 'गामानये'त्यादिपदानि न प्रमाणम् सान्निध्याभावात्'[2] इति तर्कसग्रहकारः।

---

१. *न्यायसिद्धान्तमुक्तावली - कारिका ८१*

२. *तर्कसंग्रहः पृ० १४०*

## शब्दप्रमाणस्य प्रमाणान्तरत्वस्थापनम्

काणादमते प्रत्यक्षम् अनुमानञ्चेति द्वयमेव प्रमाणम्। तन्मते नैयायिकाभिमतस्य शब्दस्य=आप्तवाक्यस्य अनुमितिकरणत्वेनैव प्रामाण्यं, न तु शाब्दबोधकरणत्वेन। अत एव प्रशस्तपादाचार्या आहुः 'शब्दादीनामप्यनुमानेऽन्तर्भावः समानविधित्वात् । यथा प्रसिद्धसमयस्यासन्दिग्धलिंगदर्शनप्रसिद्ध्यनुस्मरणाभ्यामतीन्द्रियेऽर्थे भवत्यनुमानमेवं शब्दादिभ्योऽपीति'।[१] अयं भावः—

| अनुमितिस्थले | शाब्दबोधस्थले |
| --- | --- |
| (१) व्याप्तिग्रहः (व्याप्तिज्ञानम्) | (१) शब्देषु शक्तिग्रहः |
| (२) लिङ्गदर्शनम् (पक्षधर्मता) | (२) वाक्यश्रवणम् |
| (३) व्याप्तिस्मरणम् (परामर्शः) | (३) पदार्थस्मरणम् |
| (४) अनुमितिः (कार्यम्) | (४) शाब्दबोधः |

अर्थात् यया रीत्या अनुमानेन अनुमितिः जायते, तया एव रीत्या शब्दप्रमाणेन शाब्दबोधोऽपि दृश्यते। अत समानविधित्वात् अनुमानानतिरिक्तत्वं शब्दस्य। तदेव आह महर्षिगौतमः 'उपलब्धेः अद्विप्रवृत्तित्वात्'[२] इति पूर्वपक्षसूत्रेण।

एवं 'शब्दोऽनुमानम् - अर्थस्यानुपलब्धेरनुमेयत्वात्'[३] इति सूत्रे-

---

१. प्रशस्तपादभाष्यम् पृ० १७३ (अनुमानप्रकरणम्)

२. न्यायसूत्रम् २/१/५०

३. ,, २/१/४९

णापि शब्दप्रमाणस्यानुमानेऽन्तर्भावमाशङ्किते - महर्षिगौतमः। तदर्थं प्रतिपादयन् भाष्यकारः प्रवदति 'शब्दोऽनुमानं न प्रमाणान्तरं, कस्मात्? शब्दार्थस्यानुमेयत्वात्, कथमनुमेयत्वम्? प्रत्यक्षतोऽनुपलब्धेः, यथाऽनुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चाद् मीयते इत्यनुमानम् एवं मितेन शब्देन पश्चाद् मीयतेऽर्थोऽनुपलभ्यमान इत्यनुमानं शब्दः। एवं 'संबन्धाच्च'[१] इति सूत्रेणापि शब्दप्रमाणानुमानप्रमाणयोरेक्यं प्रतिपादितम् महर्षिणा।

परन्तु अत्र ग्रन्थकारेण भिन्नप्रकारेण पूर्वपक्ष उपस्थापितः। तद्यथा वैशेषिकमते 'घटोऽस्ति' 'घटमानय' इत्यादिशब्दश्रवणोत्तरं पदवृत्त्या पदार्थानां स्मरणे सति तदुत्तरं तात्पर्यज्ञानविषयीभूतो यः स्मारितः पदार्थानां परस्परान्वयात्मकसंसर्गः तद्विषयिणी या नैयायिकाभिप्रेतशाब्दबोधात्मिका प्रमा सा अनुमित्यात्मिकैव, नान्या, तथा च पदार्थान्वय एव शब्दप्रमाणफलम्। स चान्वयः अनुमानेनैव सिद्ध्यति इति किं प्रयोजनम् शब्दस्य पृथक्प्रमाणत्वे इत्यभिप्रेत्य पदार्थसंसर्गप्रतिपादकमनुमानमाह हरिदासभट्टाचार्यः 'पदश्रवणानन्तरं 'एते पदार्थाः परस्परं संसर्गवन्तः, आकाङ्क्षायोग्यतासन्निधिमत्पदस्मारितत्वाद् दण्डेन गामभ्याज इति पदस्मारितपदार्थवत्' । इत्यनुमात् संसर्गप्रसिद्धिः'[२] इति।

एवं पदपक्षकानुमानेनापि शब्दस्याऽनुमानान्तर्भावयितुं शक्यते। तद्यथा 'गामानयेत्यादिलौकिकपदानि स्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकांक्षादिमत्पदत्वात्' इति। अथवा प्राभाकरमते लौकिकस्यानुवादकत्वं

---

१. न्यायसूत्रम् २/१/५१

२. शब्दशक्तिप्रकाशिका- कारिका ४

वैदिकशब्दस्यैव प्रमाणत्वमिति तन्मतानुसारेण वैदिकशब्दं पक्षीकृत्य 'स्वर्गकामो यजेतेत्यादिपदानि स्मारितपदार्थसंसर्गप्रमापूर्वकाणि आकांक्षादिमत्पदत्वात्।ननु तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकत्वसिद्धावपि न तत्पदार्थवत्तत्पदार्थरूपसंसर्गसिद्धिरिति चेत्, ज्ञानविषयकज्ञानस्य स्वविषयविषयकत्वनियमात् प्रकृते पदार्थसंसर्गप्रमानुमितेः स्वविषयभूतायाः पदार्थसंसर्गप्रमायाः यः पदार्थसंसर्गरूपो विषयः स एव विषयो यस्यास्तादृशत्वनियमात् अतोऽनुमानेनैव तत्तत्पदार्थवत्तत्तत्पदार्थरूपपरस्परान्वयात्मकसंसर्ग सम्भवे शब्दप्रमाणस्यातिरिक्तत्वकल्पनमनुचितमिति वैशेषिकाणामाशयः।

तदपि समीचीनं न प्रतिभाति—यतोहि पदार्थपक्षकेऽनुमाने परस्परं संसर्गवत्त्वसाधने निश्चितसंसर्गवत्त्वं साध्यते, आहोस्वित् संसर्गस्वरूपयोग्यत्वं साध्यते। तत्र नाद्यः 'पयसा सिञ्चति' इत्यत्र व्यभिचारात्। तथाहि—येन पयसा कदापि न किमपि सिक्तम्, तत्र पयः पदार्थस्य सेकपदार्थस्य च संसर्गाऽभावात् सेककरणत्वरूपसंसर्गवत्त्वरूपसाध्याभाववति तादृशजले आकाङ्क्षायोग्यतासत्तिमत्पदकदम्बस्मारितत्वरूपहेतुसत्त्वाद् भवति व्यभिचारः। न द्वितीयः संसर्गस्वरूपयोग्यत्वसाधने न निर्णयः स्वरूपयोग्यत्वमात्रनिर्णयेऽपि साध्यस्य संसर्गवत्त्वस्यानिर्णयात्। किञ्च सिद्धसाधनोऽपि दोषः - तद्यथा उपर्युक्तानुमाने यः हेतु स योग्यताघटित उपात्तः। हेतोश्च ज्ञानं साध्यसाधनात् पूर्वमेवापेक्षितमिति तु निर्विवादम्। एवं च पदार्थानां संसर्गयोग्यत्वावगमे एव योग्यताघटितहेतूपन्यासः सम्भवति। सति चैवम् हेतुज्ञानेन एव पदार्थानां परस्परसंसर्गयोग्यत्वस्य सिद्धौ पुनः तदेव संसर्गवत्त्वं यदि साध्यते पदार्थेषु तदा सिद्धसाधनम्। यदि तु पूर्वं योग्यताऽनवगमः तदा हेतोः स्वरूपस्यैवा-

सिद्धिरिति उभयथा दोषऽनुमान इति नानुमानं संसर्गयोग्यत्व-प्रतिपादकमपि, अतो न शब्दप्रमाणस्य कार्यं कर्तुमलम् तदुक्तमाचार्यैः

**अनैकान्तः परिच्छेदे सम्भवे च न निर्णयः ।**[1]

अत्र परिच्छेदो नाम नियमः, निश्चय इति यावत्। सम्भवः=सम्भावितः अथवा ससर्गस्वरूपयोग्यत्वरूपः, अत्र हरिदास-भट्टाचार्येण सिद्धसाधनत्वरूपदोषान्तरमुद्भावितम्, तत्तु मूलोक्तसम्भवपदस्य हेतुघटकयोग्यताऽर्थकत्व एव उपपन्नम्, यदि तु सम्भवपदस्य सन्दिग्धार्थकं तदा तु संसर्गाऽनिश्चय इति प्रथमदूषणमेवानुमानमपसारयितुं क्षममिति ।

पदपक्षकानुमानमपि न युक्तियुक्तम्, यतोहि—

**आकांक्षा सत्तया हेतुर्योग्यासत्तिरबन्धना ।।**[2] **इति ।**

अयं भावः— द्विविधो हि हेतुः । कश्चित् पदार्थः अस्तीत्येव कार्यकारी न तु तज्ज्ञानमप्यपेक्षितम्, यथा मार्गस्थः वह्निः ज्ञातः अज्ञातो वा भवतु परन्तु यदि कश्चित् पुरुषः तत्र भ्रमादपि पदं धत्ते तर्हि स वह्निरस्ति इति एतावतैव दाहं करोति। कश्चिच्च पदार्थो ज्ञातः सन्नेव हेतुत्वं भजते, यथा धूमः पर्वतवृत्तित्वेन ज्ञात एव तत्र वह्निमनुमापयति। अनुमाने च सर्वत्र ज्ञात एव पदार्थः हेतुत्वं भजते। अन्यथा 'अनागतादिलिङ्गेन न स्यादनुमितिस्तदा'[3] इति मुक्तावल्याम्। प्रकृतानुमाने

---

*१. २. न्यायकुसुमाञ्जलि- कारिका ३/१३*

*३. न्यायसिद्धान्तमुक्तावली - कारिका ६७*

च आकांक्षाऽपि हेतुगर्भा प्रविष्टेति तस्या अपि ज्ञानमावश्यकम्। परन्तु आकाङ्क्षा स्वरूपसत्येव शाब्दबोधहेतुः न तु आकाक्षाज्ञानं शाब्दबोधकारणम्। अनुमितौ तु हेतुनिर्णयस्यापेक्षितत्वात् आकाङ्क्षाया हेतुत्वे तस्या ज्ञानमपेक्षितमिति आकाङ्क्षाया लिङ्गविधया हेतुत्वासम्भवेन शब्दस्य प्रमाणान्तरत्वमवश्यमपेक्षणीयम्। आकांक्षा हि समभिव्याहृतपदस्मारितपदार्थजिज्ञासा, घटमित्युक्ते आनय पश्येति, आनयेत्युक्ते घटं पटं वेति जिज्ञासादयः।

ननु योग्यताया आसत्तेश्च ज्ञानं शाब्दबोधोपयागि, अतो योग्यताविशिष्टासत्तिरेव हेतुरस्तु किमाकाङ्क्षाया हेतुघटकत्वेन अतो योग्यतासत्तिमत्पदत्वादित्येव हेतुः संसर्गं बोधयेत् इति न शब्दस्य प्रमाणत्वमङ्गीकरणीयम् इति चेत्, न 'योग्यासत्तिरबन्धना' इति। अविद्यमानं बन्धनं व्याप्तिरूपो सम्बन्धो यस्याः सा अबन्धना व्याप्तिशून्येत्यर्थः। तथा च 'अहो विमलं जलं नद्याः, कच्छे महिषश्चरति' इत्यत्र वाक्ये नद्याः कच्छे इत्यनयोः पदयोः योग्यतासत्ती स्तः, तत्र योग्यतासत्तिमत्पदत्वरूपहेतोः सत्त्वेऽपि तयोरेकवाक्यत्वाभावात्,क्रियान्तरसम्बन्धेन निराकाङ्क्षत्वात्, तात्पर्यविषयस्मारितपदार्थसंसर्गप्रमापूर्वकत्वरूपसाध्याभावाद् व्यभिचारः। न च तात्पर्यज्ञानस्य शाब्दबोधहेतुत्वात्, तात्पर्यसंवलितयोग्यतासत्तिमत्त्वेन हेतुना पदार्थसंसर्गप्रमापूर्वकत्वं साधनीयमिति न व्यभिचार इति वाच्यम्, तथा सति योग्यतादिविशेषणस्य निष्फलत्वेन हेतोर्व्यर्थविशेषणघटितत्वापत्तेः, तात्पर्यं हि एकपदार्थवदपरपदार्थबोधेच्छयोच्चरितत्त्वं, तच्च एकपदार्थवदपरपदार्थप्रमापूर्वकत्वनियतमिति तत्तदर्थतात्पर्यकत्वस्य हेतुत्वे इतरवैयर्थ्यम्।

एवञ्च यत्र शिष्याकांक्षानन्तरं गुरुः राज्ञः पुत्र आगच्छति इतः

पुरुषः अपसार्यतामिति तात्पर्येण 'अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यताम्' इति वक्ति तत्र योग्यतासत्तिसत्त्वाद् राज्ञ इत्यस्य पदस्यार्थस्य पुरुषपदार्थेन समं तात्पर्याविषयोऽपि संसर्गः इति न निराकांक्षस्य संसर्गनिर्णयो निर्दुष्टः। तथा च आकांक्षायाः स्वरूपसत्त्याः एव शाब्दबोधप्रयोजकतया पदार्थसंसर्ग-प्रतिपादनाय प्रयुक्तेऽनुमाने आकांक्षाज्ञानस्योपयोगित्वे व्यर्थविशेषणत्वम्, आकांक्षा रहितस्यैव हेतुत्वे तु व्यभिचारः इति नोक्तानुमानं पदार्थसंसर्ग-ग्राहकमिति तदर्थं शब्दस्य प्रमाणान्तरत्वमवश्यमेवाभ्युपेयमिति। परन्तु अत्रेदं बोध्यम् आकाङ्क्षायाः पदनिष्ठत्वेऽपि योग्यताया अर्थनिष्ठत्वाद् योग्यतामत्पदाभावाद् अयं हेतुः समीचीनो न प्रतिभाति इति तु चिन्त्यम् । तदुक्तं शब्दशक्तिप्रकाशिकायाम् -

**योग्यतार्थगताकाक्षा शब्दनिष्ठानुभाविका ।**
**प्रत्येकं वा मिलित्वा वा नैते लिङ्गमसिद्धितः ।।[१] इति ।**

अत एव श्रीमदुदयनाचार्येण पदार्थपक्षकाऽनुमानस्थले पूर्वपक्षरूपेण 'वाक्यत्वात्' 'पदार्थत्वाद्' वा इति हेतुद्वयं कृतम्।

शब्दस्याऽनुमानाऽतिरिक्तत्वसाधनवेलायां मुक्तावलीकारः 'तत्र सम्यग्विना व्याप्तिबोधं शाब्दादिबोधतः'[२] इति। अर्थात् व्याप्तिज्ञान-शून्यकालेऽपि 'गामानय' इति श्रवणानन्तरं गोकर्मकानयनानुकूलकृति-मानिन्यादिशाब्दबोधस्य सर्वानुभवसिद्धत्वात्। तथा च व्यतिरेकव्यभिचारात् शाब्दबोधे व्याप्तिज्ञानस्य न कारणत्वमित्यतः शब्दः प्रमाणान्तरमिति। न च

---

*१. शब्दशक्तिप्रकाशिका - कारिका ४*

*२. न्यायसिद्धान्तमुक्तावली - कारिका १४१*

व्याप्तिज्ञानं विना शाब्दबोधोऽसिद्धः, तथा च यत्रानुभूयमान शाब्दबोधस्तत्रापि व्याप्तिज्ञानं कल्पनीयमिति वाच्यम् नहि सर्वत्र शब्दश्रवणानन्तरं व्याप्तिज्ञाने प्रमाणमस्ति। यदि सर्वत्र शाब्दबोधप्राक्क्षणे अनुमित्युत्पादनार्थं व्याप्तिज्ञानं कल्प्यते तदा तुल्ययुक्त्या अनुमितिप्राक्क्षणे पदज्ञानं कल्पयित्वा अनुमितिप्रमामपलाप्य तत्स्थाने शाब्दप्रमा एव स्वीक्रियताम्, तथा सति अनुमानप्रमाणस्य उच्छेदः स्यात्। तस्मादेकेन अपरस्याऽपलापासंभवात् शब्दस्यापि पृथक् प्रामाण्यम् आवश्यकम् इति।

शब्दस्यानुमानातिरिक्तत्वे जगदीशस्य युक्तिरियम् -

**साकांक्षशब्दैर्यो बोधस्तदर्थान्वयगोचरः।**
**सोऽयं नियन्त्रितार्थत्वान्न प्रत्यक्षं न चानुमा।।**[१]

अर्थादाकांक्षादिमत्पदप्रयोज्यतत्तदर्थसंसर्गावगाही यो बोधः स नियन्त्रितार्थकत्वात्=तादृशपदोपस्थाप्यस्यैवार्थस्यावगाहित्वात् न प्रत्यक्षो नानुमितिरिति तु तदर्थः। पूर्वं न्यायसूत्रे पूर्वपक्षरूपेण शब्दानुमानयो ऐक्यं प्रतिपादितम्। तत्र सिद्धान्तपक्षं प्रतिपादयन् महर्षिगौतमाः 'आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः'[२] इत्यादिसूत्रं प्रतिपादयन्ति। तदत्र संक्षेपेण विविच्यते—'पर्वतो वह्निमान् धूमात्' इत्यादौ यथा ज्ञातेन धूमादिलिङ्गेन साध्यस्य वह्न्यादेरनुमेयत्वं तथैव ज्ञातेन शब्देन जायमानस्यार्थस्य यदनुमेयत्वं वैशेषिकैः प्रतिपादितं तन्न सङ्गच्छते। यतः शब्दार्थयोर्व्याप्यव्यापकभावसम्बन्धाभावादयं शब्दोऽस्यार्थस्य वाचक

---

१. *शब्दशक्तिप्रकाशिका - कारिका ३*

२. *न्यायसूत्रम् २/१/५३*

इत्याद्याप्तोपदेशमूलकशक्तिग्रहसामर्थ्यात् योगयताकाङ्क्षादिज्ञानसहकृतवाक्यजन्यवाक्यार्थबोधो जायते। न चैवमनुमानस्य प्रकारः, न ह्यनुमानस्थले धूमज्ञानात् वह्नौ शक्तिग्रहो भवति अतोऽनुमानापेक्षया शब्दप्रमाणस्य विलक्षणत्वात् नानुमानत्वम्। अयमाशयः निखिलसंसारे स्वर्गादिपदार्थानां सत्यपि प्रत्यक्षाग्रह्यत्वात् न केवलं शब्दमात्रात् सम्प्रत्ययो भवति, परन्तु तादृशपदार्थप्रतिपादकानि आप्तवाक्यानि आप्तवाक्यत्वेन निबन्ध्य तथाभूतात् शब्दात् स्वर्गादीन् प्रतिपद्यते। यदि शब्दमात्रात् शब्दार्थबोधः स्यात् तर्हि धूमेन वह्नेरिव शब्दार्थस्यानुमेयत्वं स्याद् न चैवमस्ति, यथा 'अयं घटशब्दः आप्तैर्घटबोधनार्थं प्रयुक्तः' इति ज्ञानात् किम्वा 'घटशब्दः कम्बुग्रीवादिमत्पदार्थवाचकः' इति यदाप्तैरुक्तं तत्सामर्थ्यादेव घटशब्दात् घटपदार्थबोधो भवति। न तु तादृशोपदेशरहितात् शब्दमात्रात् शब्दार्थबोधकत्वं शब्दस्य, अपि तु आप्तोपदेशसामर्थ्यादेव शब्दार्थबोधकत्वम् न त्वनुमाने एतादृशसामर्थ्यात् लिङ्गस्य वाच्यवाचकभावसम्बन्धेन साध्यबोधकत्वमस्तीति शब्दस्यानुमानापेक्षया विलक्षणप्रमाणत्वं सिद्धमिति।

वस्तुतस्तु शब्दश्रवणान्तरोत्पन्नज्ञानोत्तरं 'शाब्दयामि' इत्यनुव्यवसायो जायते, न तु 'अनुमिनोमि' इति। अतः शाब्दबोधात्मिकायांप्रमायाम् अनुमितिभिन्नत्वस्यापलपितुमशक्यत्वेन तादृशविजातीयप्रमाकरणत्वेन शब्दस्य प्रमाणान्तरत्वं सिद्धमिति।

**वैदिकशब्दस्यैव स्वातन्त्र्यं प्रामाण्यं लौकिकशब्दस्यानुमानविधया इति गुरुमतनिरासः**

मीमांसकेषु प्राभाकराः वेदवाक्यानां स्वातन्त्र्यं प्रामाण्यम्,

लौकिकवाक्यानाञ्च अनुवादकत्वं (=अनुमानविधयैव प्रामाण्यं) प्रतिपादयन्ति। तदुक्तं मानमेयोदये 'गुरुस्त्वाह-वैदिकमेव शाब्दमिति पुरुषवचनानि तु वक्त्रभिप्रायानुमापकान्येव न स्वयमेव वाक्यार्थं बोधयति'[१] इति। एवञ्च प्रकरणपञ्जिकायां शालिकनाथः प्रवदति 'लौकिकं वाक्यं नार्थे स्वयं निश्चयमुत्पादयति, लौकिकवचसामनृतभूयिष्ठत्वादर्थव्यभिचारस्य शङ्कितत्वात्। ययो हि पुरुष एवमवधारितः - नायमशक्तः न प्रमादी नायमविज्ञायान्वयमर्थानामन्वितार्थानि प्रयुंक्ते इति, तद्वाक्यप्रयोगस्यान्वय-ज्ञातपूर्वकत्वादन्वयज्ञानं तावदनुमीयते, ज्ञानं हि ज्ञेयाविनाभावि ज्ञेयानुमाने भवत्येव लिङ्गम्। तद्वाक्यस्यानुवादकतैव, अत एव लौकिकं वचनं न शाब्दं प्रमाणम्'[२] इति। अत एव गुरुमते नारायण इत्थं प्रतिपादयति - 'तत्र नद्यास्तीरे फलानि सन्ति इति वाक्ये श्रुतेः पदार्थेषु च पृथक् पृथक् स्मृतेषु अनुमिनोति - एतानि पदानि एतेषां पदार्थानां संसर्गमवबुध्यैव प्रयुक्तानि, आप्तप्रणीतपदत्वात् गामानयेति पदवदिति'[३] इति। अतो लौकिकशब्दस्याऽनुमाविधयैव प्रामाण्यं प्राभाकराः स्वीकुवन्ति।

किञ्च वेदस्यापौरुषेयत्वात् तत्र वक्तृज्ञानानुमानासम्भवः। लौकिकवाक्ये तु वक्तृज्ञानापेक्षमेव प्रामाण्यं तथा च 'अयं वक्ता स्वप्रयुक्तवाक्यार्थयथार्थज्ञानवान् भ्रमाद्यजन्यवाक्यार्थज्ञानजन्यवाक्यप्रयो-कृत्वात्' इत्यनुमानाद् वक्तृज्ञानावच्छेदकतया उत्तरकालं वा 'एते पदार्थाः परस्परं संसृष्टाः वक्तृयथार्थज्ञानविषयत्वात्' इत्यनुमानात् साक्षाद् संसर्ग-

---

१. मानमेयोदयः पृ० १०४

२. प्रकरणपञ्जिका पृ० २४४

३. मानमेयोदयः पृ. १०४

सिद्धिः। तदनन्तरं वाक्यार्थमयादया संसर्गबोधेऽपि शब्दे ज्ञातज्ञापकत्वरूपम् अनुवादकत्वमेव अतः लौकिकं वाक्यं न प्रमाणमिति प्राभाकराणामाशयः हरिदासभट्टाचार्येण प्रतिपादितः। प्राभाकरोक्तपूर्वपक्षस्य निराकरणाय श्रीमन्त आचार्याः

**निर्णीतशक्तेर्वाक्याद्धि प्रागेवार्थस्य निर्णये।**
**व्याप्तिस्मृतिविलम्बेन लिङ्गस्यैवानुवादिता।।**[1]

तथा च वेदे यादृशी आकाङ्क्षायोग्यतासत्तिमत्त्वरूपा सामग्री सत्त्वेन शाब्दबोधो जायते तादृशी एव सामग्री लौकिकवाक्येऽपि अस्त्येव अतः शाब्दबोधो जनयेत् एव, क्लृप्तसामग्रीसत्त्वे अपेक्षणीयान्तराभावेन विलम्बाभावात्। तथा च अनुमित्युत्पादात् पूर्वमेव शाब्दबोधे जाते तदुत्तरं कथञ्चित् व्याप्तिस्मृत्यादिना अनुमितौ जातायां न शब्दस्यानुवादकत्वं किन्त्वनुमानस्यैव। अतः लौकिकवाक्यस्यापि अनुवादकत्वाभावात् पृथक् प्रामाण्यं मन्तव्यम्।

पूर्वपक्षी प्राभाकरः पुनरपि तमेव पूर्वपक्षमुत्थापयति प्रकारान्तरेण, तत्र तस्य इयं वाचो युक्तिः यत् - लौकिकवाक्येषु आप्तोक्तत्वस्य संशयः दास्यादिवाक्ये, व्यतिरेकश्च उन्मत्तादिवाक्ये दृष्ट इति तत्र शाब्दबोधानुपपत्तिरानुभाविकी अत आप्तोक्तनिश्चयः प्रामाण्य-ग्रहणार्थमावश्यकः। ननु आप्तोक्तत्वसंशयाभावः, तद्व्यतिरेकाऽभाव एव वा तद्धेतुरस्तु इति चेत्? न लाघवेन आप्तोक्तनिश्चयस्यैव एकस्य कारणत्वौ-

---

१. न्यायकुसुमाञ्जलि- कारिका ३/१४-१५

चित्यात्। आप्तोक्तत्वञ्च 'प्रकृतवाक्यार्थगोचरयथार्थधी जन्यत्वम्' इति। तथा च वक्तृज्ञानावच्छेदकतया संसर्गसिद्धेः पुनः वाक्यमर्यादया संसगनिश्चयोऽनुवादरूप एव इति लौकिकवाक्यमनुवादकमेवेति पूर्वपक्षः। अत्र सिद्धान्तपक्षमाह आप्तोक्तनिश्चयस्य शाब्दबोधहेतुत्वमेव नास्ति, कुतः तन्मूलकमनुमानं संसर्गज्ञापकं भवेत्। अनाप्तवाक्येषु योग्यताज्ञानाभावादेवान्वयबोधो विलम्बः। तथा च योग्यताज्ञानरूपशाब्दबोधकारणाभावादेव तत्र शाब्दबोधाभावः न तु आप्तोक्तत्वनिश्चयाभावादिति आप्तोक्तत्वनिश्चयस्य शाब्दबोधहेतुत्वमसिद्धम्। लौकिकवाक्यजन्यबोधे आप्तोक्तत्वनिश्चयस्य हेतुत्वाऽभ्युपगमे। प्रतिबन्धिमुखेन उत्तरमाह—

**व्यस्तपुंदुषणाशङ्कैः स्मारितत्वात् पदैः अमी।**
**अन्विता इति निर्णिते वेदस्यापि न तत् कुतः।।**[1]

अर्थात् लौकिकवाक्येषु आप्तोक्तनिश्चयस्य हेतुत्वे, वैदिकवाक्येष्वपि अपौरुषेयत्वनिश्चयो हेतुर्वाच्यः, तथा सति अमी वैदिकाः पदार्थाः परपरं संसर्गवन्तः व्यस्तपुन्दूषणाऽऽशङ्कैः पदैः स्मारितत्वात्' इत्यनुमानात् संसर्गनिर्णये वैदिकवाक्यानामपि अनुवादकत्वं प्रसज्येत। तथा च स्वीक्रियताम्वा वेदस्यप्यनुवादकत्वम्, तिरस्क्रियताम्वा लौकिकस्यापि - अनुवादकत्वम् इति स्थितिः। वैदिकवाक्यानामनुवादकत्वाभावे, लौकिकवाक्यानामपि नानुवादकत्वं किन्तु प्रामाण्यमेव, तस्मात् शब्दसामान्यं पृथक् प्रमाणमिति सिद्धान्तपक्षः।

---

*१. न्यायकुसुमाञ्जलि- कारिका ३/१४-१५*

## शब्दप्रमाणं नेश्वरे बाधकम्

एतावता प्रबन्धेन शब्दस्यातिरिक्तप्रमाणत्वे सिद्धेः, अनीश्वरवादिनः सांख्यमीमांसका वदन्ति यदस्तु तर्हि शब्दोऽतिरिक्तप्रमाणम्। स एव जगत्कर्तरि ईश्वरे बाधकः स्यात्। अस्ति च भगवद्गीता-वचनम्—

**प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः ।**
**अहङ्कारविमूढात्मा कर्त्ताहमिति मन्यते ।।**[1]

तदर्थश्च - प्रकृतेः=बुद्धितत्त्वस्य गुणैः=सत्त्वादिभिः क्रियमाणानि सर्वाणि कर्माणि, मोहात् बुद्धितत्त्वेन सह आत्मनो भेदाग्रहात्, अहं कर्त्तेति चेतनो मन्यते। तेन चेतनस्यात्मनः भेदाग्रहनिमित्तकमाभिमानिकं कतृत्वं न पारमार्थिकम् चेतनस्यात्मनो निर्विकारतया कृतिरूपपरिणामासम्भवात् पारमार्थिककर्तृत्वस्यासम्भवः। तथा च सर्वज्ञत्वेन जगत्कतृत्वेन च नेश्वरसिद्धिः इति सांख्यानामाशयः।

नैयायिकः स्वमतेन तदर्थं कृत्वा समाधत्ते। तत्र प्रकृतिपदं न प्रधानपरं किन्तु धर्माधर्माख्यादृष्टपरम् गुणैः - अदृष्टजन्यैरिच्छिदिभिः, कार्यमात्रं प्रति साधारणकारणानि यानि 'ईशस्तज्ज्ञानयत्नेच्छाः कालोऽदृष्टं दिग्, प्रागभावप्रतिबन्धकाभावौ' इत्यष्टौ तदन्यानि च विशेषकारणानि तैर्मिलित्वा क्रियमाणानि यावन्ति कार्याणि भवन्ति, तेषां कर्ता 'अहमेक एव' इति तु अहंकारेण विमुढः= अज्ञानावच्छिन्नजीवात्मा मन्यते तज्ज्ञानं भ्रम इति। अत इयं स्मृतिवाक्यं कदापि ईश्वरस्य जगत्कर्तृत्व बाधकं नास्ति। अन्यथा 'मत्तः सर्वं प्रवर्तते' इत्यादिवाक्यानामप्रामाण्यम् स्यात्।

---

१. श्रीमद्भगवद्गीता ३/२७

अतः एव भगवद्भक्तः उदयनाचार्यः प्रवदति **'आगमादे प्रमाणत्वे बाधनादनिषेधनम्'**[१] अर्थात् आगमादेः श्रुत्यादेः प्रमाणत्वे आगमादेव ईश्वरस्य कर्तृत्वादिसिद्धौ तत्र कर्तृत्वाद्यभावसाधने बाधात्, ईश्वरे कर्तृत्वादिनिषेधो न सम्भवति। आगमादिप्रमाणानामप्रमाणत्वे तु आगमप्रमाणेन कर्तृत्वाभावाभावः साधयितुं न शक्यते अत आगमप्रमाणं नेश्वरेबाधकम्। तदुक्तं श्रीमदाचार्येण—

**न प्रमाणमनाप्तोक्तिः नादृष्टे क्वचिदाप्तता।**
**अदृश्यदृष्टौ सर्वज्ञो न च नित्यागमः क्षमः।।**[२] **इति।**

तस्यायं भावः—यदि ईश्वराभावसाधकम् आगमादिवाक्यम् अनाप्तप्रणीतं तर्हि तस्य न प्रामाण्यमिति न तद्बलादीश्वरासिद्धिः। अदृष्टे=वाक्यार्थज्ञानविरहवति पुरुषे वेदादिकर्तृत्वेन स्वीकृते अपि तस्य कर्तुः न आप्ततेति पूर्ववदेव अप्रामाण्यम् तथाविधवाक्यस्येति नेश्वरबाधः। अथ वेदप्रामाण्योपपादनाय तत्प्रणेतुः आप्तत्वसिद्धये अदृष्टस्य अतीन्द्रियार्थस्य (वाक्यार्थस्य) द्रष्टृत्वमभ्युपेयते तर्हि सर्वज्ञः वेदादिकर्ता सिद्ध्यति स एवेश्वरः अस्माकम्। वेदस्य प्रामाण्यमन्तरा तद्बलेन पदार्थस्य सिद्धिर्न सम्भवति, तत्प्रामाण्यं चाप्तप्रणीतत्वेनैव सम्भवति आप्तत्वं

---

१. *न्यायकुसुमाञ्जलि-कारिका ३/५*
२. *,, कारिका ३/१६*

चाऽतीन्द्रियार्थज्ञानविरहवति नैव सम्भवतीति कश्चन अतीन्द्रियार्थदर्शी पुरुषविशेषः अङ्गीकार्य इति ईश्वरसिद्धिः। वेदस्य च प्रवाहनित्यतया प्रामाण्यं नाभ्युपगन्तुं शक्यम्, प्रलयस्य पूर्वं साधितत्वादिति। वेदकर्तृत्वेन नित्यः सर्वज्ञः ईश्वरः सिद्ध्यति।

ननु तर्हि ईश्वरस्याकर्तृत्वबोधकानामागमानामप्रामाण्यं स्यादिति चेत् न आगमः ईश्वरस्य कर्तृत्वाभावमेवाभिधत्ते इति न, 'जन्माद्यस्य यतः'[१] 'द्यावाभूमी जनयन्देव एको विश्वस्य कर्ता भुवनस्य गोप्ता' स्मृतयोऽपि 'अहं सर्वस्य प्रभवः मत्तः सर्वं प्रवर्तते'[२] यतः सर्वाणि भूतानि भवन्त्यादियुगागमे। यस्मिँश्च प्रलयं यान्ति पुनरेव युगक्षये'[३] इत्यादेः कर्तृत्वप्रतिपादकस्यापि-आगमस्य सत्त्वात्। तदुक्तम् - **'न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात्'**[४] इति।

ननु 'प्रकृतेः क्रियमाणानि' इत्याद्यागमस्य किं तात्पर्यमित्यत्र आहुः श्रीमन्त उदयनाचार्याः—

**निरञ्जनावबोधार्थो न च सन्नपि तत्परः।'**[५]

अत ईश्वरसाधकस्यागममात्रस्य मुख्यार्थत्वमवश्यमभ्युपगन्तव्यम्

---

१. *ब्रह्मसूत्रम्*

२. *श्रीमद्भगवद्गीता १०/८*

३. *महाभा० भीष्मयुधिष्ठिरसंवादः*

४. *न्यायकुसुमाञ्जलि - कारिका ३/१७*

५. ,, ३/१७

तद्विरुद्धानामीश्वराभावबोधकानां वाक्यानाञ्च मुख्यार्थत्वं कार्यकारणभावरूपप्रबलतरप्रमाणविरोधादेव न सम्भवति। अतो यत्र तत्रोपलभ्यमानानामीश्वराभावबोधकानां वाक्यानां न मुख्यार्थत्वं न वा स्वार्थे तात्पर्यं किन्तु परमात्मनो निराकाररूपप्रतिपादनमेव प्रयोजनम्। ननु बाधकश्रुतीनां गौणार्थत्वं साधकश्रुतीनाञ्च मुख्यार्थत्वमित्यत्र किं विनिगमकमिति चेत्, ईश्वरस्य कर्तृत्वसाधकश्रुतीनां कार्यकारणभावादितर्कमूलकानुमानसाचिव्येन मुख्यार्थकत्वमिति। अतः शब्दप्रमाणमीश्वरे बाधकं न भवति इति।

## अर्थापत्तिप्रमाणस्य न प्रमाणान्तरत्वम्

आचार्यमहर्षिगौतमेन 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'[१] इत्युक्त्वा प्रमाणानां चातुर्विध्यं प्रतिपादितम्। परन्तु एतस्याशयो यन्नास्त्येव अर्थापत्त्यादीनामप्रामाण्यम्। अत एव पूर्वपक्षरूपेण महर्षिगौतमः 'न चतुष्ट्वम् - 'ऐतिह्यार्थापत्तिसंभवाऽभावप्रामाण्यात्'[२] इति प्रतिपादयन् उत्तरयति 'शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः'[३] इति। अर्थात् क्लृप्तचतुर्विधप्रमाणेष्वेवाऽन्तर्भावाद् अर्थापत्यादीनां न प्रमाणान्तरत्वमत एव भाष्यकारस्य स्पष्टोक्तिः- 'सत्यमेतानि प्रमाणानि न तु प्रमाणान्तराणि'[४] इति। अत्र तावदेतदेव विचार्यते कथमर्थापत्यादीनां क्लृप्तप्रत्यक्षाद्यनतिरिक्तत्वम्, कथञ्चेश्वरा-

---

१. न्यायसूत्रम् १/१/३

२. ,, २/२/१

३. ,, २/२/२

४. न्यायभाष्यम् पृ० १६५-६६

बाधकत्वमिति ।

मीमांसका: वेदान्तिनश्चार्थापत्तेः पृथक् प्रामाण्यमुररीकुर्वन्ति। तत्रार्थापत्तिनिरूपणावसरे धर्मराजाध्वरीन्द्रः प्रतिपादयति-'तत्रोपपाद्य-ज्ञानेनोपपादककल्पनमर्थापत्तिः। तत्रोपपाद्यज्ञानं करणम्। उपपादकज्ञानं फलम् । येन विना यदनुपपन्नं तत्तत्रोपपाद्यम्, यस्याभावे यस्यानुपपत्ति-स्तत्तत्रोपपादकम्।'[१] एवमेव मानमेयोदयकारोऽपि प्रतिपादयति—

**अन्यथानुपपत्त्या यदुपपादककल्पनम्।**
**तदर्थापत्तिरित्येवं लक्षणं भाष्यभाषितम्।।**[२]

एवञ्च प्रत्यक्षवद् अर्थापत्तेरपि द्विविधव्युत्पत्तिबलेन फलरूपा, करणरूपा चार्थापत्तिरिति भवति । तद्यथा 'अर्थस्य आपत्तिः कल्पनेति षष्ठीसमासेन अर्थापत्तिशब्दः प्रमापरः। 'अर्थस्य आपत्तिः यस्मात् तत्' इति बहुव्रीहि-समासेन च अर्थापत्तिशब्दं प्रमाण(करण)परम्। सा चार्थापत्तिर्द्विविधा-दृष्टार्थापत्तिः, श्रुतार्थापत्तिश्चेति। शाबरभाष्ये तदेव प्रतिपादयति शबरस्वामी 'अर्थापत्तिरपि यत्र दृष्टः श्रुतो वार्थोऽन्यथा नोपपद्यते इत्यर्थकल्पना।' इति।

तत्र दृष्टार्थापत्तेर्लक्षणम् -

**प्रमाणघटकविज्ञातो यत्रार्थो नान्यथा भवेत्।**
**अदृष्टं कल्पयेदन्यं सार्थापत्तिरुदाहृता।।**[३]

---

१. *वेदान्तपरिभाषा पृ० २६६*

२. *मानमेयोदय - कारिका १२७*

३. *श्लोकवार्तिकम्*

एवं श्रुतार्थापत्तेर्लक्षणम् -

**पीनो दिवा न भुङ्क्ते चेत्येवमादिवचः श्रुतौ ।**
**रात्रिभोजनविज्ञानं श्रुतार्थापत्तिरुच्यते ।।**[1] **इति ।**

तदनुरोधेन प्रमाऽपि द्वेधा- अभिधेयाऽर्थापत्तिः, अभिधानाऽर्थापत्तिश्च इति ।

तत्र दृष्टार्थापत्तिर्यथा - पीनो देवदत्तो दिवा न भुङ्क्ते इत्यत्र पीनत्वस्य दिवाभुञ्जानस्य च प्रत्यक्षतो ज्ञाते पीनत्वस्य रात्रिभोजनं विनाऽनुपपन्नत्वाद् रात्रिभोजनमर्थापत्तिप्रमाणेन आक्षिप्यते। अथद्द् यद् येन विनाऽनुपपन्नं तत्तेनैवाक्षिप्यते इति न्यायाद् रात्रिभोजनजनकं यद् दिवाभुञ्जानस्य पीनत्वस्य प्रत्यक्षसिद्धत्वाद् रात्रिभोजनमर्थापत्त्या गृह्यते इति ।

एवं श्रुतार्थापत्तिः—यथा यत्र देवदत्तस्य शतवर्षजीवित्वं ज्योतिःशास्त्रादवगतं जीविनो गृहासत्त्वञ्चाऽवगतम्, तत्र शतवर्षजीविनो गृहासत्त्वं बहिःसत्त्वं विनाऽनुपपन्नमिति बहिःसत्त्वं कल्प्यते इति। तथा च - जीवतो देवदत्तस्य बहिःसत्त्वज्ञानम् उपपादकम् अर्थापत्तिः प्रमा, शतवर्षजीवित्वविशिष्टगृहाऽसत्त्वज्ञानम् उपपाद्यम् अर्थापत्तिः प्रमाणम्, इयं 'जीविदेवदत्तो गृहे नास्ति' इति आप्तवाक्यश्रवणे सति श्रुतार्थापत्तिर्बोध्या ।

एवं विरुद्धयोः प्रमाणयोर्विषयव्यवस्थया विरोधापादनमर्थापत्तेर्विषयः इति। तत्र च 'मा हिंस्यात्सर्वभूतानि' 'अग्नीषोमीयं पशुमालभेत' इति वैदिकवाक्यद्वयेन विरोध उपस्थापिते सति तस्य

---

१. श्लोकवार्तिकम्

वारणमर्थापत्तेर्विषय इत्युक्त्वा अर्थापत्तेरावश्यकत्वं प्रतिपादयन्ति। तदाहमानमेयोदये—

**साधारणप्रमाणानामसाधारणमानतः।**
**विरोधादविरुद्धांशे धीरर्थापत्तिरिष्यते।।**[१]

अर्थात् साधारणप्रमाणानां असाधारणमानेन विरोधे सति अविरुद्धांशे तात्पर्यावधारणमर्थापत्तिरिति मीमांसकानामाशयः। अत्र भाष्यकारस्य स्पष्टोक्तिः - सत्यमेतानि प्रमाणानि न तु प्रमाणान्तराणि' इति। अत एव आचार्यविश्वनाथः मुक्तावल्याम् —

**अर्थापत्तिस्तु नैवेह प्रमाणान्तरमिष्यते।**
**व्यतिरेकव्याप्तिबुद्ध्या चरितार्था हि सा यतः।।**[२] **इति।**

अनेन अर्थापत्तिप्रमाणम् अनुमानेऽन्तर्भावयति। तथाहि- व्यतिरेकव्या-प्तिज्ञानेन कृतकृत्यत्वात् पृथक् प्रमाणं नेष्यते। तथा चाऽयं प्रयोगः जीविदेवदो बहिःसत्त्वगृहसत्त्वान्यतरवान् जीवित्वात्, तत्र बहिः सत्त्वगृहसत्त्वान्यतराभावजीवित्वाभावयोः घटत्वादौ सहचारज्ञानाधीनं यत् बहिःसत्त्वगृहसत्त्वान्यतराभावव्यापकीभूताऽभावप्रतियोगिजीवित्वमिति व्यतिरेकव्याप्तिज्ञानं, तेन च बहिःसत्त्वगृहसत्त्वान्यतराभावव्यापकीभूताऽ-भावप्रतियोगिहेतुमान् पक्ष' इति परामर्शे सति 'जीविदेवदत्तः बहिःसत्त्वगृह-

---

१. *मानमेयोदय कारिका १२८*

२. *न्यायसिद्धान्तमुक्तावली - कारिका १४४*

सत्त्वान्यतरवानित्यनुमितिर्जायते, तत्र प्रत्यक्षेण गृहसत्त्वात्मककोटेर्बाधात् वहिः सत्त्वमेवेति अनुमितौ भासते। तथा च श्रुतार्थापत्तिप्रमाणस्य व्यतिरेकव्याप्तिज्ञानेऽन्तर्भावः इति।

एवं पीनो देवदत्तः दिवाभोजनरात्रिभोजनान्यतरवान् पीनत्वात्, इत्यत्र। मासोपवासिनि तापसे 'दिवाभोजनरात्रिभोजनान्यतराऽभावपीनत्वाभावयो सहचारज्ञाने सति पीनत्वहेतौ 'दिवाभोजनरात्रिभोजनान्यतराभावव्यापकीभूताभावप्रतियोगिपीनत्वमिति व्यतिरेकव्याप्तिमत्ताज्ञानात् परामर्शद्वारा उत्पत्स्यमानायां दिवाभोजनरात्रिभोजनांऽन्यतराऽनुमितौ प्रत्यक्षतः दिवाभोजनबाधे सति रात्रिभोजनं विधेयतया विषयो भवत्येव। तथा च अर्थापत्तिप्रमाया अनुमितित्वेनैव निर्वाहात् तत्करणप्रमाणस्याऽर्थापत्तेरपि व्यतिरेक्यनुमानत्वेन निर्वाहे न दृष्टार्थापत्तेरतिरिक्तत्वम्।

तदाहाचार्योदयनः **'अनियम्यस्य नाऽयुक्तिर्नाऽनियन्तोपपादकः।'**[१] अर्थात् योऽनुपपद्यमानोऽर्थः स सर्वदा व्याप्यो भवति। उपपादकीभूतश्चार्थः सर्वदा व्यापको भवति, तथा च अनुपपद्यमानार्थदर्शनात् उपपादकीभूतस्य अर्थस्य यद् ज्ञानं तत् व्याप्यद् व्यापकज्ञानमेव अतोऽनुमानान्तर्गतमेव इति न अर्थापत्तिः पृथक्प्रमाणम्।

अथ प्रमाणद्वयविरोधे सत्यविरोधापादनमर्थापत्तिः पृथक् प्रमाणमिति प्रतिपादयन्ति केचन। तद्यथा देवदत्तस्य सत्त्वं (जीवितत्त्वं) शब्दप्रमाणसिद्धम्, तस्य गृहाऽसत्त्वं च प्रत्यक्षप्रमाणसिद्धम्। तत्र सत्त्वस्य

---

१. *न्यायकुसुमाञ्जलि - कारिका ३/१९*

प्रामाण्ये असत्त्वस्य प्रत्यक्षप्रमाणसिद्धस्य प्रामाण्यं विरुद्ध्यते, असत्तस्य च प्रमाण्ये सत्त्वस्य प्रामाण्यं विरुद्ध्यते इत्येकतरप्रमाणेनाऽपि प्रमोत्पत्त्यसम्भवात् अर्थापते: पृथक्प्रमाणत्वाभ्युपगम आवश्यक:। अनेन च प्रमाणेन आगमप्रमाणसिद्धस्य सत्त्वस्य बहिर्विषयकत्वम् प्रत्यक्षप्रमाणसिद्धस्य च असत्त्वस्य गृहविषयकत्वं व्यवस्थापयता उभयो: प्रदर्शितो विरोध: परिहृतो भवति इति अर्थापत्ते: पृथक्प्रामाण्यवादीनां अन्तिमो तर्क: ।

तन्निराकरणायाह श्रीमदाचार्या:-

**न मानयोर्विरोधोऽस्ति प्रसिद्धे वाऽप्यसौ समः ।**[१]

नहि विरोधिनोद्वयोरपि प्रामाण्यं सम्भवति रज्जुसर्पयोरिवाऽन्यतरस्य मिथ्यात्वमावश्यकम्। अयं भाव: गृहावच्छिन्नेन देवदत्ताभावेन गृहसत्त्वमेव समानविषयतया प्रतिक्षिप्यते न तु सत्त्वमात्रम्, अवच्छिन्नाऽनवच्छिन्नयोर्विषयभेदेन विरोधाभावात्। तथा च यदुक्तं पूर्वम् सत्त्वावेदकस्य आगमस्य प्रमाणस्य असत्त्वावेदकेन प्रत्यक्षप्रमाणेन विरोध इति तन्निरस्तम्। एवं 'अग्नीषोमीयं पशुमालभेत' इति श्रुते: क्षेत्रं यागप्रदेश एव। 'मा हिंस्यात्सर्वाभूतानि' इत्यस्य तु यागप्रदेशव्यतिरिक्तक्षेत्रमेव अत: उभयोरपि प्रमाणयो प्रामाण्यम्। न हि उभयो: प्रमाणयो: वास्तविको विरोध:। अन्यथैकं प्रमाणं भज्यते एव। तथापि यत्र कुत्रचित् विरोधस्य भ्रान्तिर्भवति तत्रापि अनायासेनाऽनुमानप्रयोक्तुं शक्यते। तथा

---

१. न्यायकुसुमाञ्जलि - कारिका ३/१९

चाऽयं प्रयोगः - अयं प्रतीयमाने विरोधः भिन्नविषयकः, एकविषयतायां विरुद्धत्वे सति प्रमाणसिद्धत्वात्। इत्यादि - अनुमानेनैव विरोधस्य वारणे सति कृतमर्थापत्तिप्रमाणेन। अन्यथा पवतो वह्निमान् धूमात् इत्यादिप्रसिद्धस्थलेऽपि असौ अर्थापत्तिरेव, स्यात् अनुमानविलोपः। तद्यथा अर्वाग्भागावच्छेदन वह्न्यनुपलब्धिः वह्न्यभावग्राहकमानं, धूमश्च व्याप्तिविशिष्टपक्षधर्मत्वेन ज्ञायमानः वह्निसाधनमिति अनुपलब्ध्यनुमानयो-र्विरोधज्ञानेन अपरभागावच्छेदेन वह्निव्यवस्थापनमप्यर्थापत्तेरेव स्यात्। अनुमानाभावेऽपि च व्याप्तिग्राहकमानस्य वह्निसाधकत्वमर्थापत्तिरित्य-नुमानविलोपापत्तिः। तथा च सर्वजनसिद्धानुमानेनैव निर्वाहे अर्थापत्तिर्न प्रमाणान्तरमिति। तथा सति अर्थापत्तिरनुमानतो न भिद्यते इत्यर्थापत्तेरनुमानान्तर्भावात् 'क्वानुमानमनाश्रयम्' इत्यनेनानुमानस्य ईश्वरबाधकत्वनिरासेनैव अनुमानात्मिकाया अर्थापत्तेरपि ईश्वरबाधकत्वं निरस्तमिति।

## अर्थापत्तेरतिरिक्तप्रमाणत्वेऽपि ईश्वराबाधकत्वम्

यद्यपि अर्थापत्तेरनुमानान्तर्गतत्वात् पृथगर्थापत्तेरबाधकत्व-निरूपणमप्यनपेक्षितम् तथापि अर्थापत्तिः पृथक्प्रमाणवादिनां मतमनुसृत्य अर्थापत्तिरपि नेश्वरे बाधकम् इति प्रतिपादयति ग्रन्थकारः। तत्राऽयं मीमांसकानां पूर्वपक्षः 'यद्यसौ सर्वज्ञः स्यात् अनुपदिश्यापि प्रवर्त्तयेत् इत्युपदेशानुपपत्तिरेव अस्तु ईश्वरे बाधिका'[१] इति। अयमाशयः—सर्वज्ञत्वस्य मध्ये उपदेशं विनैव प्रवर्तनोपायज्ञानमपि वर्तते सर्वज्ञत्वेन अभिमते ईश्वरे

---

१. हरिदासी पृ० १३६-१३७

तदावश्यकम्। तथा च असौ सर्वज्ञः सर्वकर्ता वेदाननुपदिश्यैव पुरूषान् ज्योतिष्टोमादौ प्रवर्तयितुं, कलञ्जभक्षणादिभ्यश्च निवर्तयितुं शक्नोत्येवेति वेदोपदेशः न तेन कृतः स्यात्, परन्तु वेदोपदेशः कृत इति तदुपदेष्टुः उपदेशं विनापि यः प्रवृत्तिनिवृत्त्युपायस्तस्याऽज्ञानादेव सर्वज्ञत्वाभावे सिद्धे तस्य वेदनिर्मातृत्वे वेदस्याप्रामाण्यं स्यात् इति अगत्या नित्यत्वेनैव वेदस्य प्रामाण्यमास्थेयमिति न वेदकर्तृत्वेन सर्वज्ञस्येश्वरस्य सिद्धिरिति। सर्वज्ञत्वे उपदेशाऽनुपपत्तिः, परन्तु उपदेशः कृतः, स च ईश्वरस्य असार्वज्ञमन्तराऽनुपत्तिरूपं प्रमाणम् तदेव ईश्वरे बाधकम्। तथा च वेद-सम्प्रदायप्रवर्तनान्यथानुपपत्त्यैव नैयायिकाभिमतस्य ईश्वरस्याभावः सिद्ध्यति पूर्वपक्षस्य परमार्थः।

अत्रोत्तरमाह—

**हेत्वभावेफलाभावात् प्रमाणेऽसति न प्रमा।**
**तदभावात् प्रवृत्तिर्न कर्मवादेऽप्ययं विधिः ।।**[१]

यतः हेत्वभावे फलाभावः इति सामान्यनियमः अतः प्रवृत्तिप्रयोजकेष्टसाधनत्वज्ञापके 'अग्निष्टोमेन स्वर्गकामो यजेत' इत्यादि प्रमाणे असति, अग्निष्टोमादि मदिष्टसाधनमितिरूपा प्रमा न भवितुमर्हति इति तत्फलस्य अग्निष्टोमादिविषयकप्रवृत्तेः अभाव एव, अस्मदादीना-म्प्रवृत्तेरिष्टसाधनताज्ञानजन्यत्वनियमात्। तथा च उपदेशाभावे अस्मदादीना-म्प्रवृत्तेः खपुष्पायिततया उपदेशान्यथानुपपत्त्या उपदेशम्विनैव यः प्रवर्तनोपायोऽत

---

१. न्यायकुसुमाञ्जलि - कारिका ३/१८

ईश्वरस्याप्युपदेष्टुः सिद्धिः, अत ईश्वरे न किमपि बाधकम्।

ननु यथा पिशाचादयः प्राणिन आविश्य, बुद्धिमनुत्पाद्यैव, तान् कर्मसु प्रवर्तयन्ति, तथैव परमेश्वरोऽपि किमिति न प्रवर्तयततीति चेत्, तथा सति भूतावेशस्थल इव पुंसां फलभोक्तृत्वं न स्यात्, इष्टसाधनताज्ञानचिकीर्षापूर्वकप्रवृत्तेरभावात्। भूतावेशस्थले हि पिशाचादय एव फलान्युपभुञ्जते न भूताविष्टाः।

ननु इष्टसाधनत्वज्ञानचिकीर्षापूर्वकप्रवृत्तेरभावे फलं नोत्पद्यते इत्यत्र किं प्रमाणमिति चेत्, किमत्र प्रमाणान्तरान्वेषणेन। यस्मादीश्वर उपदिश्यैव प्रवर्तयति तस्मादुपदेशान्यथानुपत्यैवैतदवगम्यते यद् गत्यन्तरेण प्रवर्तनमशक्यमिति। उपदेशाभावेऽपि प्रवृत्तिसम्भवे, तव कर्मवादिमीमांसकमतेऽपि कर्मजन्यसदृष्टादेव प्रवृत्तिरुत्पद्यते इति तुल्यमेतत्। यदि प्रवृत्तिनिमित्तमदृष्टमस्ति ततः प्रवृत्तिर्भवेदेव किमुपदेशेन। यद्यदृष्टं नास्ति ततोऽदृष्टरूपकारणाभावात् प्रवृत्तिर्न भवेदेवेति किमुपदेशेन। तथा च उपदेशस्य प्रवर्तकत्वाभावे अभ्युपगते अदृष्टेनैव सर्वत्र प्रवृत्तिसम्भवे इष्टसाधनत्वबोधकवेदस्यानर्थक्यापत्तिः स्यादिति।

वस्तुतः 'अग्निष्टोमेन स्वर्गकामो यजेत' इत्यादौ कामनया अपि स्वर्गसाधनत्वश्रुतिः, कामना च नेष्टसाधनत्वज्ञानमन्तरा, इष्टसाधनत्वज्ञानं च नाप्तोपदेशं विना इति प्रवृत्तावुपदेशापेक्षणमागतमेवेति तदर्थस्य अलौकिकत्वेन च अस्मदाद्यप्रत्यक्षत्वान्नोपदेशकत्वमस्मदादीनाम् इति उपदेशकस्य सर्वज्ञस्य सिद्धौ न किमपि बाधकमिति।

पूर्वमर्थापत्तिरतिरिक्तप्रमाणमेव नास्ति कुतः तेनेश्वर बाधकमिति प्रतिपादितम्, अधुना तु तस्यार्थापत्तेः पृथक् प्रामाण्येऽपि ईश्वराबाधकत्वं

प्रतिपादितम्, अतोऽर्थापत्तेः पृथक् प्रामाण्ये वा प्रामाण्येव नेश्वरबाधकमिति ।

## अनुपलब्धेः प्रमाणान्तरत्वनिरासः

अनुपलब्धेरीश्वराबाधकत्वं पूर्वमेव प्रत्यक्षाबाधकत्वनिरूपणावसरे प्रतिपादितम्, अनुपलब्धिमात्रं नाभावग्राहकम्, अपि तु योग्यानुपलब्धिरभावग्राहिका, परमेश्वरविषये योग्यानुपलब्धेरभावात् ईश्वराभावसाधकत्वं निरस्तम् । इदानीमनुपलब्धिः पृथक्प्रमाणमेव न भवति - इति विविच्यते ।

अनुपलब्धिप्रमाणवादिनोऽभावग्रहणाय अनुपलब्धिं प्रमाणं मन्यन्ते भाट्टवेदान्तिनः । तथा चाह मानमेयोदये—

**अथोपलम्भयोग्यत्वे सत्यप्यनुपलम्भनम् ।**
**अभावाख्यं प्रमाणं स्यादभावस्यावबोधकम् ।।**[१]

अर्थात् योग्यप्रतियोगिनो याऽनुपलब्धिः सा प्रतियोग्यनुपलब्धिः सामग्रीसमवेता सति प्रतियोगिनोऽभावज्ञाने कारणम् । अत्र चाऽनुपलम्भः कारणम्, तस्य च उपलम्भाभावरूपज्ञानाभावरूपतया अभावः प्रमाणमित्युच्यते-इत्येवं रीत्या अनुपलब्धिप्रमाणेन जायमानं भूतले घटो नास्तीत्यादिज्ञानम् आनुपलब्धिकमिति स्वीकुर्वन्ति । अत एव श्लोकवार्तिककाराः—

---

१. *मानमेयोदय -कारिका १५४ (प्रमाणखण्डम्)*

**प्रमाणपञ्चकं यत्र वस्तुरूपे न जायते ।**

**वस्तुसत्तावबोधार्थं तत्राभावप्रमाणता ।। इति ।**

भाष्यकाराः शबरस्वामिनोऽपि 'अभावोऽपि प्रमाणाभावोपि नास्तीत्यस्यार्थस्य असन्निकृष्टस्य'[१] इति वदन्त एतमेवाभिप्रायन्ति । श्रीमद्धर्मराजाध्वरीन्द्रेण - 'ज्ञानकरणाजन्याभावानुभवासाधारणकरणमनुपलब्धिरूपं प्रमाणम्'[२] अर्थात् ज्ञानरूपं यत् करणं तदजन्यो यः अभावानुभवः तस्याऽसाधारणकारणम् अनुपलब्धिरूपं प्रमाणान्तरमिति प्रतिपादितम् ।

अत्र नैयायिका:- 'इह भूतले घटो नाति' इति प्रतीतिरभावविषयिणी सर्वेषां जायते । इयं च प्रतीतिः अक्षिनिमिल्य न जायते, इन्द्रियसन्निकर्षे सति उत्पद्यते, अतः सा प्रतीतिः इन्द्रियकरणिकैव वाच्या, न त्वनुपलब्धिरूपप्रमाणान्तरकरणिका इत्याशयं प्रकटयन्ति।

विषयेऽस्मिन् मीमांसका वदन्ति यत् - कुत्रचिदधिकरणे कस्यचित्पदार्थस्याभावः प्रतीयते, तेन यत्राभावः प्रत्येतव्यः तादृशाधिकरणग्रहणाय इन्द्रियव्यापारापेक्षा न त्वभावग्रहणाय । इन्द्रियव्यापारोऽधिकरणांश एव न त्वभावांश इति विभागः, कथं ज्ञायते ? उच्यते अधिकरणग्रहणमात्रोपरतेन्द्रियव्यापारस्यापि - अभावप्रतीतिदर्शनात्, केनचित्पुरुषेण स्वरूपमात्रेण गृहादिकं प्रतिपन्नम्, ततः स देशान्तरं गतः तत्रैतद्देशेऽविद्यमानं भावान्तरं विलक्षणं वस्तु दृष्ट्वा तदैव 'इदं वस्तु मद्गृहे

---

१. शाबरभाष्यम् पृ० ३९

२. वेदान्तपरिभाषा पृ० २७९

नासीत्' इत्यवबुद्ध्यते। तदा तस्य इन्द्रियव्यापारो नासीत् पूर्वमेव गृहाद्यधिकरणग्रहणवेलायामेव तस्योपरतत्वात्।

**स्वरूपमात्रं दृष्ट्वापि पश्चात् किञ्चित् स्मरन्नपि।**
**तत्रान्यनास्तितां पृष्टः तदैव प्रतिपद्यते।।**[१]

इति श्लोकेन अभावस्य प्रमाणान्तरत्वं स्थापितम्। इत्थं च इन्द्रियव्यापारनिरपेक्षा अभावप्रतीतिर्नैन्द्रियकी, अपि तु अनुपलब्धिरूपप्रमाणान्तरगम्यैव।

किञ्च 'इन्द्रियार्थसन्निकर्षजन्यज्ञानमेव प्रत्यक्षं भवति। इन्द्रियस्य चाभावेन सह न कोऽपि सन्निकर्षः सम्भवति सम्बन्धस्य संयोगसमवायद्विविधरूपत्वात्। तथा सति न संयोगोऽभावस्य अद्रव्यत्वात् 'द्रव्ययोरेव संयोगः' इति नियमात्। नापि समवायः अभावस्य द्रव्यगुणकर्मसामान्यविशेषभिन्नत्वात्, अयुतसिद्धेषु तेषु एव समवायविधानात्। अतः 'इन्द्रियार्थसन्निकर्षजन्यत्वाभावात् 'इह भूतले घटो नास्ति' इति सर्वजनानुभवसिद्धप्रतीतौ अनुपलब्धिप्रमाणमेव कारणम्।

अथ च 'घटाभाववद् भूतलमिति विशिष्टबुद्धिः विशेषणज्ञानपूर्विका विशिष्टबुद्धित्वात्, दण्डिपुरुष इति विशिष्टबुद्धिवदित्यनेन घटाभावविशिष्टबुद्धेः विशेषणज्ञानपूर्वभावित्वसिद्धौ भूतलरूपविशेष्यग्राहकेन्द्रियेणैव अभावरूपविशेषणमपि गृह्यत इतीन्द्रियस्य अभावांशेऽपि ग्रहणसामर्थ्यं कल्प्यत इति न वक्तुं शक्यम्, तथा सति सुरभि-

---

१. श्लोकवार्तिकम् अ० परि० कारिका २८

चन्दनमित्यत्र सौरभस्यापि चक्षुषैव ग्रहणप्रङ्गात्। अतोऽभावरूपविशेष-ग्रहणाय अनुपलब्धिरूपप्रमाणान्तरसम्भवः। इन्द्रियसन्निकर्षादिसत्त्वेऽपि घटाद्युपलब्धौ सत्यां न तदभावो गृह्यते इति अनुपलब्धेः कारणत्वमवश्यं स्वीकरणीयम्। इत्थं च सैवानुपलब्धिरभावज्ञाने कारणमिति वक्तुं युक्तम्। अत्राह वार्तिककाराः—

**भावात्मके यथा मेये नाभावस्य प्रमाणता।**
**तथैवाभावमेयेऽपि न च भावप्रमाणता।।**
**भावात्मकस्य मानत्वं न च राज्ञाज्ञया स्थितम्।**
**परिच्छेदफलत्वात्तु प्रामाण्यं स्याद् द्वयोरपि।।**[१]

इत्यभावाख्यप्रमेयस्याऽनुपलब्धिरूपप्रमाणान्तरगम्यत्वं स्फुटीकृतवन्तः। एवं रामायणे महर्षिणा—

**राम षड्युक्तयो लोके याभिस्सर्वेऽनुदृश्यते।**[२]

इत्यतोऽनुपलब्धेः पृथक् प्रामाण्यमनुमोदितम्। इति।

अत्र नैयायिकानामयमाशयः-यद्यपि अभावस्थले योग्या-नुपलब्धिरस्माभिरवश्यमङ्गीक्रियते, तथापि तस्या अभावज्ञाने (प्रमायां) सहकारित्वमात्रमेव चाक्षुषप्रत्यक्षे आलोकमहत्त्वोद्भूतरूपादीनामिव अङ्गिकुर्मः। 'इह भूतले घटो नास्ति' इति प्रतीतिस्तु चक्षुरादीन्द्रिय-करणिकैव। अतः प्रत्यक्षेणैव अभावग्रहणम् इति नानुपलब्धिः प्रमाणमिति

---

१. श्लोकवार्तिकम् ४६-४७

२. रामायणम् अरण्यकाण्डे - स० ७२ श्लोक ८

साधयितुं कारिकाद्वयेण अष्टविधाः हेतवः प्रदर्श्यन्ते आचार्यैः-

**प्रतिपत्तेरपारोक्षादिन्द्रियस्यानुपक्षयात् ।**
**अज्ञातकरणत्वाच्च भावावेशाच्च चेतसः ।।**
**प्रतियोगिनि सामर्थ्याद् व्यापाराव्यवधानतः ।**
**अक्षाश्रयत्वाद्दोषाणामिन्द्रियाणि विकल्पनात् ।।**[१] **इति ।**

तत्र कारिकोक्तम् 'इन्द्रियाणि' इति पदं पक्षनिर्देशपरम् । प्रतिपत्तेः=अभावग्रहे प्रकरणात् करणमिति योजयित्वा 'इन्द्रियाणि अभावग्रहे करणानि' इति प्रतिज्ञा वाक्यम्, तत्साधनाय चत्वारो हेतवः (३/२०) प्रथमकारिकायाम्, चत्वारश्च (३/२१) द्वितीयकारिकायामुक्ताः ।

तथा चेमे प्रयोगाः— इन्द्रियाणि अभावगहे करणानि (१) अपारोक्षात् = अपरोक्षज्ञानत्वात् (२) इन्द्रियस्यानुपक्षयात् (३) अज्ञातकरणत्वात् (४) चेतसः भावावेषात् (५) प्रतियोगिनि सामर्थ्यात् (६) व्यापाराव्यवधानतः (७) दोषाणाम् अक्षाश्रयत्वात् (८) विकल्पनाच्चेति अष्टविधहेतवः यथाक्रमं विविच्यते ।

(१) तत्र प्रथमो हेतुः अपारोक्षादिति तस्यायं भावः यत् - अभावप्रतीतिरपरोक्षो भवति । अपरोक्षज्ञानस्येन्द्रियजन्यत्वनियमाद-भावग्रहणमिन्द्रियजन्यमेव । तथाहि - 'भूतले घटो नास्ति' इत्यादि-प्रतीतिरिन्द्रियकरणिका साक्षात्कारित्वात्, यथा 'रूपवान् घटः' इति प्रतीतिरिति । ननु साक्षात्कारित्वमस्या असिद्धमिति चेत्, न 'निपुणतरमनुसृतो

---

१. न्यायकंसुमाञ्जलि- कारिका ३/२०, ३/२१

मया मन्दिरे चैत्रो न दृष्टः' इति अन्यदीयवचनं श्रुत्वा चैत्रानुपलब्धिं ज्ञात्वा श्रोता मन्दिरं चैत्राभाववदित्यनुमिनोति तत्र असाक्षात्कारिण्याः प्रतीतेः ज्ञातानुपलब्धिजन्यत्वात् 'भूतले घटो नास्ति' इत्यत्र (तद्विपरीततया) अज्ञातानुपलब्धिजन्यत्वात् तद्विपरीतकरणकत्वात् तद्विपरीतजातीयत्वमिति अस्याः प्रतीतेः साक्षात्कारित्वं नासिद्धम्। ननु अपरोक्षत्वं (साक्षात्कारत्वं) प्रत्यक्षत्वमेव तस्य च ईश्वरप्रत्यक्षे विद्यमानत्वात् अपरोक्षज्ञानस्येन्द्रियजन्यत्व-नियमस्य व्यभिचारित्वम् इति वाच्यम् अपरोक्षत्वं हि 'जन्यत्वे सति ज्ञानकरणकान्यत्वम्' । जन्यत्वविशेषणाद् ईश्वरप्रत्यक्षे न व्यभिचारः। तथा च अभावज्ञानस्य जन्यत्वे सति ज्ञानकरणकान्यत्वादीन्द्रियकरणकमेव।

(२) ननु व्यापारेणान्यथासिद्धत्वादभावप्रतीतौ इन्द्रियस्य कथं करणत्वमिति शङ्कायां द्वितीयो हेतुः 'इन्द्रियस्यानुपक्षयात्'। व्यापारेण व्यापारिणो नाऽन्यथासिद्धिरिति नियमात्, व्यापारेण इन्द्रियस्य अनन्यथासिद्धत्वात्, घटादिप्रत्यक्षे इव घटाभावप्रत्यक्षेऽपि इन्द्रियस्या-नुपक्षीणत्वात् करणत्वम्, अन्यथा घटादिप्रत्यक्षेऽपि सन्निकर्षादिव्यापारेण इन्द्रियस्यान्यथासिद्धत्वात् करणत्वं न स्यात्। न च ज्ञानसामान्ये मनसो हेतुत्वात्, अभावप्रतीतौ इन्द्रियजन्यत्वसाधने मनोजन्यत्वमादाय सिद्धसाधनमिति वाच्यम्। इन्द्रियजन्यत्वपदेन इन्द्रियत्वावच्छिन्नजनकता-निरूपितजन्यत्वस्य, मनस्त्वानवच्छिन्नेन्द्रियजन्यत्वस्य वा विवक्षित्वात्। तदुक्तमाचार्यविश्वनाथेन 'यद्यपि मनोरूपेन्द्रियजन्यं सर्वमेव ज्ञानम्, तथापीन्द्रियत्वेन रूपेणेन्द्रियाणां यत्र ज्ञाने करणत्वं तत्प्रत्यक्षमिति विवक्षितम्'[१] तादृश (इन्द्रियत्वेन इन्द्रियजन्य) ज्ञानमात्रे इन्द्रियकरणकत्वं-

---

१. न्यायसिद्धान्तमुक्तावली पृ० १८२

साध्यते अतो नोक्तदोषः। ननु अभावप्रत्यक्षमवश्यं किञ्चिद्धर्मविशेष्यकत्वेन धर्मिप्रत्यक्षात्मकमपि भवति धर्मिप्रत्यक्षं चावश्यमिन्द्रियसन्निकर्षजन्यं स्वीकार्यम्। तथा च व्यापारेण इन्द्रियस्यान्यथासिद्धत्वाभावेऽपि अधिकरणप्रत्यक्षार्थमिन्द्रियस्यापेक्षणीयत्वेन अधिकरणग्रहेण इन्द्रियस्यान्यथासिद्धत्वं स्यादिति चेन्न। अधिकरणस्य लौकिकप्रत्यक्षाभावेऽपि 'आकाशं शब्दध्वंसवत्' इत्यतीन्द्रियविषयकप्रत्यक्षे अधिकरणभानमुपनीतभानात्मकमवश्यमङ्गीकर्तव्यमिति तत्राधिकरणप्रत्यक्षार्थमिन्द्रियस्यानपेक्षणादधिकरणप्रत्यक्षेण इन्द्रियस्यान्यथासिद्धत्वाभावात्। एवं वायौ रूपाभावस्य ग्रहादधिकरणग्रहे इन्द्रियस्यानुपक्षयात्। ननु 'भूतलं घटाभाववत्' इति प्रत्यक्षस्य भूतलांशेऽपि लौकिकतया तत्र भूतलप्रत्यक्षार्थमिन्द्रियस्यापेक्षणीयत्वेन इन्द्रियमन्यथासिद्धमिति तत्रानुपलब्धेः करणत्वस्यावश्यकत्वे सर्वत्रैवाभावप्रत्यक्षस्यानुपलब्धिकरणकत्वमिन्द्रियमन्यथासिद्धमिति चेन्न, क्वचिदभावप्रत्यक्षस्य अधिकरणलौकिकप्रत्यक्षरूपत्वेऽपि अधिकरणग्रहस्य व्यापारत्वेन तेन इन्द्रियस्यान्यथासिद्धत्वाभावात्। अन्यथा घटादिग्रहणस्थलेऽपि निर्विकल्पकादिरूपे अवान्तरव्यापारे इन्द्रियशक्तेरुपक्षीणत्वात् इन्द्रियं घटग्रहणे समर्थं न स्यात्। अतोऽभावप्रतीतिरिन्द्रियकरणिका।

(३) ज्ञायमानलिङ्गस्यानुमितिकरणत्ववादिन आचार्यस्य मते अनुमितेः ज्ञानकरणकान्यत्वेन तत्र ज्ञानकरणकान्यत्वात्मकापरोक्षत्वरूपहेतोः सत्त्वेऽपि इन्द्रियजन्यत्वरूपस्य साध्यस्यासत्त्वात् व्यभिचारः स्यादिति उभयमतसाधारणमिन्द्रियजन्यत्वसाधकं तृतीयं हेतुमाह 'अज्ञातकरणत्वादिति। अज्ञातकरणजन्यज्ञानत्वेनाभावप्रतीतेरिन्द्रियजन्यत्वानुमानात्। अज्ञातकरणजन्यज्ञानत्वञ्च ज्ञायमानत्वावच्छिन्नकरणतानिरूपितकार्यता-

वद्भिन्नत्वे सति ज्ञानत्वावच्छिन्नकरणतानिरूपितकार्यतावद्भिन्नत्वे सति च जन्यत्वम्, तथा च ज्ञायमानलिङ्गस्यानुमितिकरणत्वे लिङ्गज्ञानस्यानुमिति-करणत्वे वा अनुमितौ तादृशहेतोरभावान्न व्यभिचारः। यदज्ञायमानकरणजन्यं ज्ञानम्, तत्साक्षादिन्द्रियजन्यं यथा रूपादिप्रत्यक्षम्, तथा चेह भूतले घटोनास्तीति अभावज्ञानम्। यथा वा स्मरणम् अज्ञायमानकरणजन्यं साक्षात्मनोजन्यम्। ननु यदि स्मरणं साक्षान्मन इन्द्रियजन्यं तर्हि सुखादिज्ञानवदस्य प्रत्यक्षत्वानुभवत्वे किमपि न स्तः। साक्षादिन्द्रियजन्यत्वस्य प्रत्यक्षत्वव्याप्यत्वादिति चेत्। संस्कारान्यः सन्निकर्षः प्रत्यक्षत्वप्रयोजकः, स्मरणे तु संस्कार एव सन्निकर्ष इति न स्मरणस्य प्रत्यक्षत्वम्। ननु अज्ञायमानकरणकं ज्ञानमिन्द्रियजन्यमिति व्याप्तिर्भावज्ञानेषु न तु अभावज्ञानेषु अभावज्ञानं तु अज्ञातकरणकत्वेऽपि न साक्षादिन्द्रियजन्यमिति चेन्न, सामान्यतः प्रवृत्ताया व्याप्तेर्बाधकर्मन्तरेण-भावविषयकत्वेन सङ्कोचानुपपत्तेः। अन्यथा सर्वव्याप्तीनामविशेषात् भावमात्रविषयत्वप्रसङ्गात्। अत इन्द्रियमेवाऽभावग्रहे कारणम्।

(४) अभावप्रतीतो इन्द्रियजन्यत्वसाधने 'चेतसः भावावेशात्'इति चतुर्थो हेतुः। सर्वं बाह्यज्ञानं भावभूतकरणसहकृतेन मनसा जन्यते, जन्यबाह्यानुभवस्य भावरूपकरणसहकृतमनोजन्यत्वनियमात्, तथा चायं प्रयोगः-जन्या बाह्यविषयकाभावप्रतीतिः भावरूपकरणसहकृतमनोजन्या जन्यत्वे सति बाह्यानुभवत्वात् घटादिप्रत्यक्षवत्। अनेनाऽनुमानेनाऽभावग्रहणेऽपि भावभूतं करणम् इन्द्रियमेव मनसः सहकारित्वेनाभ्युपेयम्, न तु अनुपलब्धिः करणम्। न चाऽभावानुभवविषयेऽनुपलब्धिमात्रसहकृतं मनः अभावानुभवं जनयतु इति व्याप्तिज्ञानशब्द-वाच्यम्, अभावानुमितिशाब्दबोधादौ जनयितव्ये मनसो व्याप्तिज्ञानशब्द-

ज्ञानादेरपेक्षादर्शनात्। तथा चान्र्द्रेन्धनसंयोगसापेक्षस्य धूमजनकस्य वह्नेरार्द्रेन्धनसंयोगाभावे धूमाजनकत्ववत् भावरूपकरणसापेक्षस्य वाह्यार्थानुभवजनकस्य मनसस्तदभावे वाह्यार्थानुभवजनकत्वमेव। अन्यथा अपेक्षणीयत्वेन निश्चितस्याभावेऽपि कार्योत्पत्तिस्वीकारे न किञ्चित् कस्यचित् कार्यं कारणं वा स्यादिति कार्यकारणभावभङ्गप्रसङ्गः। न चाऽभावानुमित्यादिस्थले योग्यानुपलब्धिरूपकारणाभावादस्ति व्याप्ति-ज्ञानादेरपेक्षा, प्रकृते तु योग्यानुपलब्धिसत्त्वात् सैवाभावप्रतीतिं जनयेत् किमिन्द्रियेणेति वाच्यम् । योग्यानुपलब्धिघटकयोग्यतायामिन्द्रियसन्निकर्षो घटको न वा, यदीन्द्रियसन्निकर्षो न घटकस्तदानुमित्यादिस्थलेऽपि योग्यानुपलब्धिरस्ति। यदि घटकस्तदा सिद्धमभावप्रतीतेरिन्द्रियजन्यत्व-मिति। तथा च इन्द्रियमेवाभावग्रहे करणम् नानुपलब्धिरिति।

(५) अभावग्रहणे इन्द्रियमेव करणमिति साधयितुं पञ्चमो हेतुः- 'प्रतियोगिनि सामर्थ्यात्' इति। यत् यद्भावावगाहिप्रमाणं तत्तदभावावगाहि, यथा अनुमानस्थले अनुमानेनैव घटस्य तदभावस्य च ग्रहणं भवति। शब्दस्थलेऽपि चैत्रो गेहेऽस्ति शब्दाद् भावः प्रतीयते, चैत्रो गेहे नास्तीति शब्दादभावः प्रतीयते। न चेदमप्रयोजकम्, भावग्राहिणोऽभावाग्राहकत्वे शब्दादिकमपि अभावं न बोधयेदिति तर्कस्य प्रयोजकत्वात्। तथैव चक्षुरादीन्द्रियं घटादिभावावगाहि, तेनैव तदभावोऽपि गृह्यते एव। अत एव 'येन इन्द्रियेण या व्यक्तिर्गृह्यते, तेनैव इन्द्रियेण तद्गताजातिः तदभावश्च गृह्यते' इति नियमोपपद्यते। तथा च अभावग्रहणस्थले इन्द्रियं प्रतियोगिनो घटस्य ग्राहकमिति घटाभावस्यापि ग्राहकमिद्रियमेव।

(६) अधिकरणग्रहणेनेन्द्रियस्यानन्यथासिद्धत्वप्रतिपादयितुं षष्ठो हेतुः 'व्यापाराव्यवधानत' इति। व्यापारेणाधिकरणप्रत्यक्षेण इन्द्रियस्या-

न्यथासिद्धत्वं न सम्भवति, अवान्तरव्यापारेण अव्यवधानात्। यद्यवान्तरव्यापारेणाऽपि व्यवधानं स्यात्तर्हि भावग्रहेऽपि इन्द्रियार्थसन्निकर्षादिव्यापारेण व्यवधानात् चक्षुरादिकमन्यथासिद्धं स्यात्। एवमिन्द्रियस्य अधिकरणग्रहणेन व्यवहितत्वाद् अभावप्रत्यक्षे इव सर्वसविकल्पकविषयेऽपीन्द्रियस्य निर्विकल्पकज्ञानव्यवहितत्वात् करणं न स्यादिति सवर्सविषयकज्ञानानां प्रत्यक्षत्वं न स्यात्। ननु यदि व्यवधानेऽपि - इन्द्रियमेवाभावज्ञाने करणं स्यात् तर्हि वह्न्यनुमितावपि धूमग्रहं द्वारीकृत्य इन्द्रियमेव करणं स्यात्, तथा सति अनुमानप्रमाणोच्छेद एव स्यादिति शङ्कायामाचार्येण व्यापारः किञ्चित् परिभाषितः 'यया क्रियया विना यस्य यत्कारणत्वं न निर्वहति, तं प्रति तस्या एव व्यापारत्वात्'[१] इत्यनेन। यथा संयोगं विना चक्षुषो वह्निसाक्षात्कारकारणत्वं न निर्वहति - इति संयोग एव चक्षुरिन्द्रियस्य व्यापारः। धूमज्ञानं विनापि इन्द्रियवह्निसन्निकर्षे सति इन्द्रियं वह्निज्ञानं जनयतीति धूमज्ञानं न तस्य व्यापारः। धूमज्ञानमपि इन्द्रियं विनैव संस्कारादिजन्यमपि वह्न्यनुमितिं जनयतीति वह्न्यनुमितौ इन्द्रियं न करणम्। तथा चाऽभावप्रत्यक्षे अधिकरणग्रहणेन व्यवधानाभावात् इन्द्रियमेव करणम्।

(७) 'अक्षाश्रयत्वाद्दोषाणाम्' इति सप्तमो हेतुः। कदाचित् विद्यमान एव वस्तुनि नास्तीत्याकारकाभावभ्रमो जायते। भ्रमस्थले सर्वत्र करणगतदोषस्यैव कारणत्वं स्वीक्रियते। उक्तं च विश्वनाथपञ्चानन-भट्टाचार्येण 'दोषो ऽप्रमाया जनकः'[२] इति। अतोऽभावभ्रमस्थलेऽपि करण-

---

१. *न्यायकुसुमाञ्जलि-स्वोपज्ञः पृ० २४०*

२. *न्यायसिद्धान्तमुक्तावली - कारिका १३१*

न्यथासिद्धत्वं न सम्भवति, अवान्तरव्यापारेण अव्यवधानात्। यद्यवान्तरव्यापारेणाऽपि व्यवधानं स्यात्तर्हि भावग्रहेऽपि इन्द्रियार्थसन्निकर्षादिव्यापारेण व्यवधानात् चक्षुरादिकमन्यथासिद्धं स्यात्। एवमिन्द्रियस्य अधिकरणग्रहणेन व्यवहितत्वाद् अभावप्रत्यक्षे इव सर्वसविकल्पकविषयेऽपीन्द्रियस्य निर्विकल्पकज्ञानव्यवहितत्वात् करणं न स्यादिति सवर्सविषयकज्ञानानां प्रत्यक्षत्वं न स्यात्। ननु यदि व्यवधानेऽपि - इन्द्रियमेवाभावज्ञाने करणं स्यात् तर्हि वह्न्यनुमितावपि धूमग्रहं द्वारीकृत्य इन्द्रियमेव करणं स्यात्, तथा सति अनुमानप्रमाणोच्छेद एव स्यादिति शङ्कायामाचार्येण व्यापारः किञ्चित् परिभाषितः 'यया क्रियया विना यस्य यत्कारणत्वं न निर्वहति, तं प्रति तस्या एव व्यापारत्वात्'[१] इत्यनेन। यथा संयोगं विना चक्षुषो वह्निसाक्षात्कारकारणत्वं न निर्वहति - इति संयोग एव चक्षुरिन्द्रियस्य व्यापारः। धूमज्ञानं विनापि इन्द्रियवह्निसन्निकर्षे सति इन्द्रियं वह्निज्ञानं जनयतीति धूमज्ञानं न तस्य व्यापारः। धूमज्ञानमपि इन्द्रियं विनैव संस्करादिजन्यमपि वह्न्यनुमितिं जनयतीति वह्न्यनुमितौ इन्द्रियं न करणम्। तथा चाऽभावप्रत्यक्षे अधिकरणग्रहणेन व्यवधानाभावात् इन्द्रियमेव करणम्।

(७) 'अक्षाश्रयत्वाद्दोषाणाम्' इति सप्तमो हेतुः। कदाचित् विद्यमान एव वस्तुनि नास्तीत्याकारकाभावभ्रमो जायते। भ्रमस्थले सर्वत्र करणगतदोषस्यैव कारणत्वं स्वीक्रियते। उक्तं च विश्वनाथपञ्चाननभट्टाचार्येण 'दोषो ऽप्रमाया जनकः'[२] इति। अतोऽभावभ्रमस्थलेऽपि करण-

१. *न्यायकुसुमाञ्जलि-स्वोपज्ञः पृ० २४०*

२. *न्यायसिद्धान्तमुक्तावली - कारिका १३१*

दोषस्यैव प्रयोजकत्वं स्वीकार्यम्। अभावग्रहे इन्द्रियं चेत् करणं तदा इन्द्रियदोषोऽभावभ्रमे कारणम्। अनुपलब्धिश्चेत् करणं तर्हि अनुपलब्धिनिष्ठो दोषस्तत्र कारणम्। अनुपलब्धेश्चाभावरूपत्वात् न दोषाधिकरणत्वमुपपद्यते। पित्तदूरत्वादिदोषाणामधिकरणमिन्द्रियमेव अतोऽभावभ्रमे इन्द्रियाश्रितो दोष एव कारणम्। अत इन्द्रियमेवाभावग्रहे कारणम्।

(८) 'विकल्पनात्' इति अष्टमो हेतुः। विशिष्टज्ञानाद् इति तु तदर्थः। 'घटाभाववद्भूतलम्' इत्यत्र घटाभावो विशेषणम्, भूतलञ्च विशेष्यम् इति विशेषणविशेष्यभावयुक्तमेव विशिष्टज्ञानम्। तत्र यदि भावग्रहणाय प्रत्यक्षम्, अभावग्रहणाय चानुपलब्धिः पृथक् प्रमाणमिति मन्यते तदा घटाभाववद्भूतलमिति विशिष्टज्ञानं न इन्द्रियजन्यमभावधीत्वात्। नानुपलब्धिजन्यं भावधीत्वात् इति - अनुमानद्वयं जागरूकं तिष्ठति। नाहि विशिष्टज्ञानग्रहणाय सप्तमं किञ्चिदिह प्रमाणमस्ति यदिमां विशिष्टबुद्धिं जनयेत्। अतो घटग्रहणवत् घटाभावग्रहणेऽपि इन्द्रियमेव कारणम्। इति - अष्टविधहेतुना 'इह भूतले घटो नास्ति' इति प्रतीतिरभाव-विषयिणी इन्द्रियकरणिकेति सिद्धाः।

अत्र मीमांसकाः पुनः प्रत्यवतिष्ठन्ते यत् - 'घटाभाववद् भूतलम्' इति ज्ञानं विशिष्टबुद्धिरूपं वर्तते। विशिष्टबुद्धौ विशेषणज्ञानं कारणमिति 'घटाभाववद् भूतलम्' इति विशिष्टबुद्धेः पूर्वं विशेषणस्य घटाभावस्य ज्ञानमावश्यकम्। विशिष्टस्य ग्रहणे इन्द्रियं समर्थमस्तीति केवलस्य विशेषणस्य अभावस्यापि ग्रहणे तत् समर्थमिति नैयायिकैः यत् प्रतिपादितम् तन्न समीचीनम्, यतोहि- तथा सति - 'सुरभिचन्दनम्' इति विशिष्टबुद्धिजनकं चक्षुरिन्द्रियं विशेषणस्य केवलस्य सौरभस्यापि ग्रहणे

समर्थमिति स्वीकारप्रसङ्गः ।तस्मादभावस्य विशेषणस्य ग्रहणाय षष्ठं प्रमाणमनुपलब्धिरूपमङ्गीकार्यम् । विशिष्टबुद्धेः पूर्वं विशेषणज्ञान-स्यावश्यकत्वात्, विशेषणस्य सौरभस्य ज्ञाने जनिते सति सौरभज्ञानलक्षणप्रत्यासत्तिसहकृतं चक्षुरिन्द्रियं 'सुरभि चन्दनम्' इति चन्दनांशे लौकिकं सौरभांशे अलौकिकं ज्ञानं जनयति। एवं प्रकृतेऽपि अनुपलब्धिजन्याभावग्रहसहकृतमिन्द्रियं 'घटाभाववद् भूतलम्' इति अभावांशे अलौकिकं भूतलांशे लौकिकं विशिष्टज्ञानं जनयतीति सिद्धमनुपलब्धिरूपं षष्ठं प्रमाणम्।

एवं यदि अभावज्ञानं सविकल्पकात्मकमिन्द्रियजन्यं प्रत्यक्षरूपं स्वीक्रियते तर्हि तत्पूर्वमभावस्य निर्विकल्पकमावश्यकम्, 'सविकल्प-कप्रत्यक्षे निर्विकल्पकस्य कारणत्वात्। तस्मान्निर्विकल्पकं विना जायमानं घटप्रतियोगित्वविशिष्टाभावसविकल्पकस्येन्द्रियजन्यत्वासम्भवात्, प्रत्यक्ष-त्वाभावात्, अभावज्ञाने इन्द्रियभिन्नमेव प्रमाणं वक्तव्यम्, तदनुप-लब्धिरूपमेव।

एवं इन्द्रियस्य विषयं प्राप्य ज्ञानजनकत्वनियमात्, अभावेन सह इन्द्रियस्य क्लृप्तसंयोगसमवायादिसन्निकर्षाणाम् अभावात्, तेषां भावधर्मत्वात्, अभावज्ञानमिन्द्रियजन्यं न भवितुमर्हति। न च इन्द्रियेण सह अभावस्य विशेषणविशेष्यभावलक्षणः सम्बन्धः सम्भवतीति वाच्यम्, सन्निकर्षान्तरवशादभावज्ञाने जाते सत्येव विशेषणविशेष्यभावसम्भवात्। अभावस्य च संयोगसमवायादिसम्बन्धासम्भवात् विशेषणत्वमपि न प्राप्तं, तथा सति तत्र कथं विशेषणता सम्बन्धः। अतः सिद्धं अनुपलब्धिरूपं षष्ठं प्रमाणम् इति मीमांसकानामशयः।

मीमांसकोक्तत्रिविधदोषेषु मध्ये प्रथमदोषस्य वारणम् मूलकारेण साक्षान्न कृतम्, हरिदासभट्टाचार्येणापि प्रथमदोषः सम्यक्तया प्रतिपादितेऽपि वारणं न कृतम्। द्वितीय दोषः वारणायोक्तमाचार्येण

**अवच्छेदग्रहध्रौव्यादध्रौव्ये सिद्धसाधनात्।**[१]

अत्र 'अवच्छिद्यते भिद्यते अनेन' इति व्युत्पत्त्या अवच्छेदशब्दः प्रतियोगिपरः, प्रतियोगिज्ञानं विना अभावज्ञानं न भवति, अभावबुद्धौ प्रतियोगिज्ञानस्य कारणत्वात्, अभावज्ञानं प्रतियोगिप्रकारकमेव जातम्। तथा सति अभावस्य निर्विकल्पकविषयत्वं न सम्भवति, निष्प्रकारकज्ञानस्यैव निर्विकल्पकत्वात्। तस्मात् 'घटाभाववद् भूतलम्' इति ज्ञाने विशेषणत्वेऽपि केवलस्याभावस्य पूर्वं ग्रहणं न सम्भवति अभावज्ञानस्य प्रतियोग्यादिज्ञानजन्यतया विशिष्टज्ञानसामग्रीसत्त्वात् केवलमभावो न भासते अतोऽभावो न निर्विकल्पकविषयः। घटादिग्रहे तु प्रथमं निर्विकल्पकज्ञानमावश्यकम्। अत आह विश्वनाथः 'चक्षुः संयोगाद्यनन्तरं 'घटः' इत्याकारकं घटत्वादिविशिष्टं-ज्ञानं न सम्भवति, पूर्वं विशेषणस्य घटत्वादेर्ज्ञानाभावात्। विशिष्टबुद्धौ विशेषणज्ञानस्य कारणत्वात्। तथा च प्रथमतो घटघटत्वयोर्वैशिष्ट्यानवगाह्येव ज्ञानं जायते। तदेव निर्विकल्पकम्' इति। निष्कर्षत एतदायाति विशिष्टज्ञानसामान्यस्य न विशेषणज्ञानपूर्वकत्वमङ्गीक्रियते किं त्वीतरनिरूपणानधीनविशेषण-विशिष्टज्ञानस्यैव यथा दण्डी कुण्डली इत्यत्र दण्डकुण्डल्यादिविशेषणस्य

---

१. *न्यायकुसुमाञ्जलि- कारिका ३/२२*

२. *न्यायसिद्धान्तमुक्तावली पृ० १९४-९५*

इतरनिरूपणानधीनत्वेन स्वातन्त्र्येणापि ज्ञानसम्भवात् तद्विशिष्टज्ञाने तद्विशेषणज्ञानपूर्वकत्वमभ्युपगम्यते। अभावज्ञानस्य तु प्रतियोगि-ज्ञानजन्यतया न निर्विकल्पकविषयः, किं तु सविकल्पविषय एव। अत अभावविषयतायां निर्विकल्पकजन्यत्वाभावेन इन्द्रियजन्यत्वाभावं साधयितुं न शक्यते। (यदि अभावज्ञानं प्रतियोग्यादिज्ञानानपेक्षं तर्हि - अभावोऽपि निर्विकल्पविषय एवेति सिद्धसाधनम्) तथा सति अभावज्ञानस्येन्द्रियजन्यत्वे न किञ्चिद् बाधकम्।

अभावस्य चेन्द्रियस्य च सन्निकर्षो नास्ति इति यदुक्तं तदपि न तयोः विशेषणतैव सन्निकर्षः। अभावेऽपि सम्बन्धान्तरं विनापि स्वरूपेणैव विशेषणम्। स्वरूपातिरिक्तसम्बन्धस्याभावसम्बन्धत्वकल्पनेऽनवस्था स्यात्, यथा संयोगस्य समवायः सम्बन्धान्तरं तथा अतिरिक्ताभावसम्बन्धस्यापि सम्बन्धान्तरमवश्यमङ्गीकर्तव्यम्। स च स्वरूपसम्बन्ध 'तत्तत्कालीनं तत्तद्भूतलादिकं तत्तदभावानां सम्बन्धः'[१] इति मुक्तावल्यां प्रतिपादितम्। अतः स तत्तत्कालावच्छिन्न-तत्तद्देशस्वरूप एव। न च स्वरूपसम्बन्धस्यापि सम्बन्धान्तरमवश्यं वाच्यमेव एवं तस्य तस्यापीति अनवस्था इति वाच्यम्। स्वरूपसम्बन्धस्य सम्बन्धान्तरं स्वात्मकमेव नातिरिक्तमित्यनवस्थाविरह एव। अन्यथा मीमांसकाभिमतस्य वैशिष्ट्याख्यस्यातिरिक्ताभावसम्बन्धस्य स्वीकारेऽपि तत्तत्सम्बन्धधारायामनवस्था स्यात्। तदर्थम् भवतापि तादृशवैशिष्ट्यसम्बन्धस्य सम्बन्धः स्वरूपसम्बन्धः स्वीकर्तव्यः। अतः सिद्धम् अभावस्य स्वरूपसम्बन्ध इति।

---

१. न्यायसिद्धान्तमुक्तावली पृ० ५८

एवमनङ्गीकारे भवत्पक्षेऽपि षष्ठेनापि अनुपलब्ध्याख्यप्रमाणेन सह अभावस्य कस्यचित्सम्बन्धो ग्राह्य एव, नो चेद्, असम्बद्धार्थग्राहकत्वं स्वीकर्तव्यं भवेत्। तदुक्तं श्रीमदाचार्यैः—

**'प्राप्त्यन्तरेऽनवस्थानान्न चेदन्योऽपि दुर्घटः'** ।[१]

इत्थं च विशेषणत्वस्याभावप्रत्यक्षे सन्निकर्षत्वात् युक्तमभावस्येन्द्रियेण ग्रहणमिति भूतले घटो नास्ति' इति प्रतीतेरिन्द्रियकरणत्वम्, ज्ञानभिन्न-करणत्वेन साक्षात्कारित्वञ्च सिद्धम्। गृहादिकं स्वरूपेणैव प्रतिपन्नस्य देशान्तरं गतस्य पुरुषस्य तत्रत्यं विलक्षणं वस्तु दृष्ट्वा 'इदं वस्तु मद् गृहे नासीत्' इति या बुद्धिः, एवं सम्प्रति आनीतस्य घटस्य 'प्रागयमिह नासीत्' इति या प्राङ्नास्तितताबुद्धिः एतत्सर्वं अनुमानगम्याः। एवं गृहे देवदत्तो नास्तीति शब्दात् जायमाना याऽभावबुद्धिस्सा शब्दप्रमाणगम्या। अनुमानशब्दादिगम्याभावप्रतीतेः ज्ञानानुपलब्धिकरणत्वाद् असाक्षा-त्कारित्वम्। इत्थं च सर्वत्र यथासम्भंव योग्यानुपलब्धिसहकृत तत्तद्भावरूप-प्रत्यक्षानुमानशब्दप्रमाणगम्य एवाभावः, नत्वतिरिक्तानुपलब्धिरूपप्रमाणा-न्तरगम्य इति स्थितम्।

## सम्भवैतिह्यचेष्टानां मानान्तरत्वनिरासः

यद्यपि प्रमाणनिरूपणात्मकतृतीयस्तवके आचार्योदयेन सम्भवऐतिह्यचेष्टानां स्थानं न दत्तम्, अत एव परवर्तिग्रन्थेषु तादृश-सम्भवऐतिह्यचेष्टानां स्थानं... 

---

१. न्यायकुसुमाञ्जलि- कारिका ३/२२

प्रकरणे 'न चतुष्टवम्, ऐतिह्यार्थापत्तिसम्भवाऽभावप्रामाण्यात्'[१] इत्यत्र सम्भवैतिह्यप्रमाणयोः पृथग् प्रामाण्यमाशंकितम् वर्तते। अतोऽत्र किञ्चित् विचार्यते—

पौराणिकाः हि सम्भवैतिह्ययोरतिरिक्तप्रमाणत्वं वदन्ति। तत्र सम्भवो नाम- 'अविनाभाविनः अर्थस्य सत्ताग्रहणाद् अन्यस्य सत्ताग्रहणं सम्भवः'[२] इति भाष्ये प्रतिपादितम्। तद्यथा 'खार्यां द्रोणाढकप्रस्थाद्यवगमः' तत्र द्रोणचतुष्टयं खारी चतुराढकश्च द्रोणः, चतुः प्रस्थं चाऽऽढकम्, चत्वारः कुडवाः प्रस्थम्, मुष्टिचतुष्टयं कुडवः। तत्र 'खारी' इत्युक्ते द्रोणााढकप्रस्थादीनां ज्ञानं भवति । एवं 'शतवान्' इत्युक्ते 'पञ्चाशद्वान्' इति ज्ञानं यत् जायते तत् चतुर्विधप्रमाणातिरिक्तेन सम्भवप्रमाणेन इति पूर्वपक्षस्याशयः। तन्न समीचीनम् सम्भवस्याऽनुमानप्रमाणे एवान्तर्भावात् न प्रमाणान्तरम्। तथाहि- यद् अनुमानं न, न तत् अविनाभावबलेन अर्थप्रतिपादकं यच्च अविनाभाव (=व्याप्ति) बलेन अर्थप्रतिपादकं तत् अनुमानमेवेति नियमः। खारीत्वं हि द्रोणादिव्याप्यं सत्प्रतीतं भवति। यत्र यत्र खारीत्वं तत्र तत्र द्रोणादिघटितत्वमिति। द्रोणादिव्याप्यत्वेनैव प्रतीतं सदेव द्रोणादिसत्त्वमवगमयति यथा वह्निव्याप्यत्वेन प्रतीतो धूमो वह्निसत्त्वं गमयति। अतोऽनुमानेऽन्तर्भावः। तथा चाऽयं प्रयोगः 'इयं खारी द्रोणघटिता खारीत्वात्। एवं शतं पञ्चाशद्धटितम् शतत्वात्, इत्यत्र द्रोणवत्ता-

---

१. न्यायदर्शनसूत्रभाष्ये २/२/१

२. तत्रैव ।

ज्ञानं पञ्चाशद्वत्ताज्ञानञ्चाऽनुमानेनैव , तदर्थं सम्भवस्य न प्रमाणान्तरतेति । अत एव जयन्तभट्टः—

**भिन्न सम्भव एव न ह्यनुमितेराख्यापि खार्यामतो ।**
**द्रोणः सम्भवतीति सेयमविनाभावान्मति लैङ्गिकी ।।**[१]

एवं 'इति होचुः' इति अनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यम् ऐतिह्यम्'[२] इति न्यायभाष्यकाराः। 'इति ह' इति निपातसमुदायः परावृत्ते, तस्य भावः ऐतिह्यम्' इति उपस्कारकाराः। 'पारम्पर्योपदेशेस्यादैतिह्यमिति-हाव्ययम्'[३] इत्यमरः। तद्यथा 'इह वृक्षे यक्षः प्रतिवसति' इत्यत्र 'असौ उच्चारयिता एतद्गोचरप्रभावात्' इति विशेषेण न ज्ञातम्, बहुजनपरम्पराप्रवादमात्रादवगतम् 'इह वृक्षे यक्षः प्रतिवसति' इति ज्ञानम् ऐतिह्यकम्। तज्जनकं प्रमाणं पृथग् ऐतिह्यनामकं इति पौराणिका- तदपि न -यतो यद्यज्ञातमूलप्रवक्तृकः शब्दः, तदाऽप्रमाणमेव यदि च आप्तप्रवक्तृकः शब्दः, तदा शब्दप्रमाणेऽन्तर्भावः।

अत एव प्रशस्तपादाचार्याः 'तथैवैतिह्यमप्यवितथमाप्तोप-देश ऐवति'[४]। एवञ्च जयन्तभट्टः—

**ऐतिह्यं तु न सत्यमात्र हि वटे यक्षोऽस्ति वा नेति वा ।**

---

१. न्यायमञ्जरी प्रमाणप्रकरणम् पृ० ५९

२. न्यायदर्शनसूत्रभाष्ये २/२/१

३. अमरकोषः द्वितीयकाण्डम्, ब्रह्मवर्गः श्लोकः १२

४. प्रशस्तपादभाष्यम् पृ० १८४

**को जानाति कदा च केन कलितं कीदृग्वपुः यक्षस्य ।।**[१]**इति ।**

एवं चेष्टा अतिरिक्तप्रमाणमिति तान्त्रिकाः वदन्ति तदपि न नेत्रादिमिषेणाऽऽह्वानात्मकसंकेतितार्थग्रहजनकशब्दस्मारकत्वेन लिप्यादिसमानत्वात् यथा शब्दस्मारिका लिपी न प्रमाणान्तरं तथा चेष्टापि न प्रमाणान्तरं किन्तु चेष्टास्थले शब्दस्मरणेन अर्थस्मरणद्वारा शाब्दबोध एव। अथवा अनुमानेऽन्तर्भावः। तथाहि नेत्रमिषेणाऽऽहूयमानां कांचिदवलोक्य दर्शकस्तावदनुमितनोति 'इयं मामाह्वयति, ममाऽऽह्वानानुकूलचेष्टावत्त्वात्' इत्याद्यनुमानेनैव सर्वव्यवहारसम्भवे चेष्टाप्रमाणमपि नातिरिक्तम् इति। तथा च पूर्वमेवाऽनुमानस्य शब्दस्य वा ईश्वरबाधकत्वनिरासेनैव सम्भव अनुमानात्मकतया, ऐतिह्यस्य च शब्दात्मकतया, चेष्टायाश्च शब्दात्मकतया अनुमानात्मकतया वा सम्भवैतिह्यचेष्टानां ईश्वराबाधकत्वमेव।

**

---

१. न्यायमञ्जरी प्रमाणप्रकरणम् पृ० ५९

# चतुर्थोऽध्यायः

मङ्गलाचरणम्

साक्षात्कारिणि नित्ययोगिनि परद्वारानपेक्षस्थितौ
भूतार्थानुभवे निविष्टनिखिलप्रस्ताविवस्तुक्रमः ।
लेशादृष्टिनिमित्तदुष्टिविगमप्रभ्रष्टशङ्कातुषः
शङ्कोन्मेषकलङ्किभिः किमपरैस्तन्मे प्रमाणं शिवः ॥

## ईश्वरज्ञानस्य प्रमात्वसाधनम्

# चतुर्थोऽध्याय

अधुना **'ईश्वरस्य सत्त्वेऽपि तस्याऽप्रमाणत्वात्'** इति मूलोक्तचतुर्थी विप्रतिपत्तिर्विविच्यते। तथा च 'ईश्वरः प्रमाणं न वा' इति विप्रतिपत्तिस्वरूपम्। अत्र विधिकोटिः नैयायिकानां, निषेधकोटिस्तु जैनानामिति। यद्यपि उपलब्धेषु जैनग्रन्थेषु एतादृशः पूर्वपक्षो नैवोपलभ्यते तथापि प्रायः सर्वैः टीकाकारा निषेधकोटिः जैनानामिति प्रतिपादयन्ति। अतः जैनदर्शने ईश्वरस्य स्थानं दिङ्निर्देशनं कृत्वा मीमांसकोक्तज्ञातताया: सयुक्तिकखण्डनपुरस्सरं प्रमाणस्वरूपस्य शिवस्य स्थापनं विधीयते।

## जैनानामीश्वरविरोधित्वम्

जैनमतप्रवर्तकास्तीर्थंकराः सन्ति, तीर्थङ्कराः जिनशब्देन व्यपदिश्यन्ते। जिनाः जेतारः कामादीनाम्, निर्वाणमपि लब्धवन्तश्चेति। तदुक्तं देवलक्षणं कुर्वता षड्दर्शनसमुच्चये—

**जिनेन्द्रो देवता तत्र रागद्वेषविवर्जितः।**
**हतमोहमहामल्लः केवलज्ञानदर्शनः॥**
**सुरासुरेन्द्रसंपूज्यः सद्भूतार्थप्रकाशकः।**
**कृत्स्नकर्मक्षयं कृत्वा संप्राप्तः परमं पदम्॥**[१]

अतो जैनाः तादृशतीर्थङ्करानेवोपासन्ते। बुद्धवत् तीर्थङ्करैरपि

---

१. *षड्दर्शनसमुच्चयः ४५-४६ पृ० १६२*

किमपि ग्रन्थो न निर्मितः, तथापि तेषामुपदेशानां एकत्रीकृत्यानन्तरं जैनमुनिभिः अनेकग्रन्थाः निर्मिताः। तत्र प्रसिद्धानि सप्ततत्त्वानि 'जीवाजीवास्रवबन्धसंवरनिर्जरामोक्षस्तत्त्वम्'[१] इति तत्त्वार्थसूत्रे प्रतिपादितानि। तत्र **जीवः** - दर्शनान्तरेषु आत्मपदेनोच्यते। अस्य सामान्यं लक्षणमुपयोगः,[२] उपयोगो नाम चैतन्यपरिणतिः, अतः चैतन्यमेवास्य लक्षणं भवति। जीवाश्चानन्ताः सर्वे च स्वरूपतः सामानाः नित्याश्च सन्ति। न्यायादिप्रायो दर्शनेषु जीवस्य सर्वव्यापित्वं स्वीक्रियते, कुत्रचिद्दर्शने जीवस्य सूक्ष्मत्वमणुरूपत्वञ्च स्वीक्रियते। अत्र जीवः संकोचविकाशशाली शरीरमात्रपरिमाणोऽङ्गीक्रियते। अस्य भेदौ द्वौ स्तः संसारस्थः मुक्तश्च। **अजीवः**- पुद्गलाकाशकालधर्माधर्माः अजीवसंज्ञामालभन्ते। तत्र रूपरसगन्धस्पर्शवत्त्वं पुद्गलसामान्यलक्षणम्।[३] आकाशः समस्तेभ्यः जीवाजीवादिभ्यो द्रव्येभ्यः स्थानं प्रददाति। समस्तद्रव्यानामुत्पादादिरूपपरिणमने सहकारी कालद्रव्यं भवति। धर्मः जैनदर्शने कायारम्भकः सूक्ष्मो मूर्तिमान् सुखहेतुः पुद्गलनामधेयः। अधर्मः - दुःखहेतुः। **आस्रवः** - कर्माणि त्रिविधानि भवन्ति कायिकं कर्म, वाचिकं कर्म, मानसिकं कर्म चेति। एतत्त्रिविध-कर्मनिमित्तः काययोगः, वाग्योगः, मनोयोगश्च आस्रवपदेन बोध्यन्ते।[४] **बन्धः**- क्रोधमानमायालोभाख्यकषायविशिष्टत्वादात्मा यत् कर्मपुद्गलानादत्ते

---

१. तत्त्वार्थसूत्रम् १/४

२. ,, २/८

३. ,, ५/२३

४. जैनदर्शन - डॉ० महेन्द्रकुमारः पृ० १७२-१७३

स एव बन्धः।[१] **संवरः**—आस्रवनिरोधः संवरपदेनोच्यते।[२] **निर्जरतत्त्वम्**—अर्जितस्य कर्मणः तपः प्रभृतिभिर्निजरणमेव निर्जराख्यं तत्त्वम्। **मोक्षः**—मिथ्यादर्शनाविरत्यादीनां बन्धहेतूनां निरोधेन नवीनकर्माभावान्निर्जरा-हेतुनार्जितस्यापि कर्मणो क्षयेनात्यन्तिककर्ममोक्षणं मोक्षपदार्थः। तदुक्तं तत्त्वार्थसूत्रे 'बन्धहेत्वभावनिर्जराभ्यां कृत्स्नकर्मविप्रमोक्षो मोक्षः' इति। परन्तु तत्र नास्ति कर्तुमकर्तुमन्यथाकर्तुं सर्वसमर्थस्य परमात्मनः स्थानम्।

जैनदर्शने कस्यचिन्नित्यस्येश्वरस्यास्तित्वं नैव स्वीक्रियते नैव च स्वीकर्तुं शक्यते। जैनदर्शनस्य सिद्धान्तो विद्यते यत् कश्चित् सर्वद्रष्टा सर्वदा कर्मभिरस्पृष्टः नैव सम्भवति। तदाह—

**नास्पृष्टः कर्मभिः शश्वद्विश्वदृश्वाऽस्ति कश्चन।**
**तस्यानुपायसिद्धस्य सर्वथानुपपत्तितः॥**[३]

एवं जैनदर्शनानुसारं जगदिदमनादि। नासीत् कश्चिदेतादृशः कालः यदा किञ्चिदपि न स्यात् अनन्ताः सन्तः पदार्था अनादिकालतोऽनन्तकालं यावत् क्षणं क्षणं विपरिवर्तमानाः मूलधारायां प्रवहन्ति। तेषां संयोगवियोगाभ्यां सृष्टिचक्रोऽयं स्वयमेव संचालितो भवति। स्वकीयपारस्परिककार्यकारणभावैः सुव्यवस्थितः नियन्त्रितश्च प्रवर्तते। तत्र कस्यचित् कर्तुर्हस्तक्षेपस्य नास्ति काचिदावश्यकता प्रयोजनं वा। कर्मणोऽपि नास्त्यधिष्ठातुः काचिदावश्यकता कर्मणां स्वत एव फलप्रदा-

---

१. तत्त्वार्थसूत्रम् ८/२

२. ,, ९/१

३. आप्तपरीक्षा श्लोकः ९ पृ० ३२

यकत्वात्। वेदानाञ्चाप्रामाणिकतया नास्ति तत्कर्तुरीश्वरस्यावश्यकता। जैनदर्शने मोक्षं प्राप्ताः जीवा एव सकलकर्मक्षयात् सिद्धाः भवन्ति, एते सिद्धाश्च ज्ञानावरणीय-दर्शनावरणीय-वेदनीय-मोहनीय-आयुः-नाम-गोत्र-अन्तरायैरष्टभिः कर्मभिर्विरहिताः भवन्ति। सम्यक्त्वादिभिरष्टभिः गुणैश्च युक्ताः भवन्ति। एते सिद्धा अर्हन्तः तीर्थङ्करादयः मुक्ताः जीवा एवेश्वरतुल्या : सन्ति। अनादिसिद्धस्य कस्यचिदीश्वरस्य नास्त्यत्र स्वीकारः।

## ईश्वरस्य प्रमाणत्वं, तज्ज्ञानस्य प्रमात्वसाधनञ्च

'ईश्वरो न प्रमाणम्' इति वदतां जैनानामयमाशयः-यथाकथञ्चिदनुमानेन परमेश्वरस्य सिद्धौ सत्यामपि तत्रेश्वरे प्रमाणत्वं न सिद्ध्यतीति। अत्रेदमवधेयम् - प्रमाणशब्दो हि करणल्युडन्तः प्रमासाधनवाचकः। परन्तु भावे कर्त्तरि चापि ल्युटा एतत्प्रयोगो नानुचितः, 'कृत्यल्युटो बहुलम्'[१] इति पारमर्षसूत्रात्। तथा सति भावनिष्पन्नप्रमाणशब्दः प्रमाऽपरपर्यायः, कर्तृनिष्पन्नश्च प्रमाश्रयार्थकः। तथाहि प्रपूर्वकमाधातोर्ल्युटप्रत्यये प्रमाणशब्दो निष्पद्यते। तत्र 'करणाधिकरणयोश्च' इति सूत्राधिकारे करणेऽर्थे 'ल्युट् च' इति सूत्रेण ल्युटिकृते निष्पन्नस्य प्रमाणशब्दस्य प्रमाकरणमर्थः। 'भावे' इति सूत्राधिकारे पठितेन 'ल्युट च' इति सूत्रेण ल्युटि कृते निष्पन्नोऽयं प्रमाणशब्दः प्रमावाचकः। 'कृत्यल्युटोबहुलम्' इति सूत्रेण बाहुलकात् कर्त्रर्थे ल्युटि निष्पन्नस्य प्रमाणशब्दस्य प्रमाकर्ताऽर्थः। तथा सति प्रकृतविप्रतिपत्तौ प्रयुक्तोऽप्रमाणघटकप्रमाणशब्दः त्रयाणामेव वाचकः। इत्थं प्रकारेण परमेश्वरः न प्रमाकरणं नाऽपि प्रमाकर्ता न वा ईश्वरज्ञानं प्रमा इत्यर्थो लभ्यते।

---

१. पाणिनिसूत्रम् ३/३/११३

तथाहि, अस्मदादिप्रमायामीश्वरस्य करणत्वे प्रमाणाभावात्, ईश्वरसमेवेतज्ञानस्य नित्यत्वस्य नैयायिकैरभ्युपगमात्, नित्यस्य पदार्थस्य करणस्य कर्तुश्चाऽसम्भवात्, तथा चाऽयं प्रयोगः 'ईश्वरो न प्रमाणं प्रमाकर्तृत्वप्रमाकरणत्वान्यतराभावात्' इति। एवं ईश्वरसमवेतं ज्ञानं प्रमा भवितुं नार्हति, सर्वज्ञस्येश्वरस्याज्ञातस्य विषयस्यासम्भवाद् अज्ञातविषयकस्यैव ज्ञानस्य प्रमापदवाच्यत्वात्। अत एव पूर्वानुभवजनितसंस्कारजन्यस्य स्मरणस्य न प्रमात्वम्। अनुमानप्रयोगो यथा 'ईश्वरसमवेतज्ञानं न प्रमा अज्ञातार्थविषयकत्वाभावात्' स्मरणवत्' इति।

ननु ईश्वरसमवेतज्ञानस्य अज्ञातविषयकत्वं कथं नास्तीति चेदुच्यते - अज्ञातविषयकत्वं हि स्वप्राक्कालिक-स्वसमानाधिकरणज्ञानाविषयविषयकत्वरूपम्, ईश्वरसमवेतज्ञानस्य नित्यत्वेन तस्य प्राक्कालाऽप्रसिद्ध्या एतल्लक्षणघटकस्वपदेन तस्य ग्रहणं न सम्भवतीति न तस्य अज्ञातविषयकत्वरूपमगृहीतग्राहित्वम्। कथञ्चित् स्वात्मकज्ञानस्यैवस्वाधिकरणकिञ्चित्कालपूर्वकालिकतया स्वप्राक्कालिकत्वसम्भवेऽपि तस्य सर्वविषयकत्वेन तदविषयाप्रसिद्ध्या सुतरां न तस्य प्रकृतलक्षणाक्रान्तत्वम्। तस्मादीश्वरज्ञानस्य प्रमात्वाभावादीश्वरस्य प्रमाकरणत्वरूपस्य प्रमाकर्तृत्वरूपस्य वा प्रमाणत्वस्याऽभावादप्रमाणपुरुषस्य वचने कः श्रद्धधीतेति न वेदकर्तृत्वेनेश्वरसिद्धिरिति पूर्वपक्षिजैनानामाशयः।

अत्र सिद्धान्तपक्षः - पूर्वपक्षिणा अगृहीतग्राहिज्ञानत्वं प्रमालक्षणं कृत्वा दोषोद्भावितः परन्तु नैयायिकमते 'अगृहीतग्राहिज्ञानं प्रमा' इति नाभ्युपगम्यते। तदुक्तं श्रीमदाचार्यैः—

**अव्याप्तेरधिकव्याप्तेरलक्षणमपूर्वदृक् ।**[1] **इति**

अर्थात् अपूर्वदृक् अपूर्वस्य अगृहीतस्य दृक् दर्शनं ज्ञानं भावपरो निर्देशः। तथा च अनधिगतार्थविषयकत्वं न प्रमालक्षणं 'घटोऽयं घटोऽयम्' इति धारावाहिकबुद्धौ अव्याप्त्यापत्त्या। एवञ्च शुक्तौ 'इदं रजतम्' इत्यादि संशयविपर्ययस्वप्नबुद्धिष्वतिव्याप्त्यापत्त्या। ननु अनधिगतार्थविषयक-त्वस्य प्रमालक्षणत्वे धारावाहिकबुद्धिष्वव्याप्तिरित्युक्तं तन्न समीचीनम्। अनुभूतार्थविषये अनुभव एव न जायते पिष्टपेषणतुल्यत्वादिति चेन्न, सिद्धिरूपप्रतिबन्धकबलेन अनुमितिरूपानुभवासम्भवेऽपि तदन्यानुभवस्य स्वकारणबलेन सम्भवे बाधकाभावात्। न च पूर्वानुभवेनैव व्यवहारनिर्वाहात् उत्तरानुभवो न जायते प्रमातुरनपेक्षितत्वादिति वाच्यम्। स्वकारणाधीनस्य प्रमात्वस्य प्रमातुरपेक्षां विनाऽप्युपपत्तेः, प्रमात्रनपेक्षत्वस्य प्रमात्वाभावं प्रति हेतुत्वाभावात्, अन्यथा शत्रुवैभवादिज्ञानमप्रमैव भवेत्। न चोत्तरज्ञानस्य पूर्वज्ञानान्यूनानतिरिक्तविषयकतया न प्रमात्वमिति वाच्यम्। तथा सति पूर्वज्ञानस्यापि उत्तरज्ञानान्यूनानतिरिक्तविषयकतया अप्रमात्वापत्तेः। ननु यथा कुठारः छिन्ने काष्ठे पुनश्छेदनं न जनयति तथा चक्षुरादिकमपि गृहीतार्थे पुनर्ज्ञानं न जनयेदिति चेन्न कुठारस्थले छिदारूपं फलं पुनर्नोत्पद्यते, चक्षुरादिस्थले तु उत्तरज्ञानरूपं फलमुत्पद्यते एवेति, फलं प्रति चक्षुरादीनां साधकतमत्वं नास्तीति वक्तुमशक्यत्वात्, तेषां करणत्वस्य निषेधासम्भवात् जायमानं ज्ञानं न प्रमेति वक्तुमशक्यम्।

अत्र यद्यपि वेदान्तपरिभाषाकारेण 'अनधिगताबाधितविषय-

---

१. *न्यायकुसुमाञ्जलि- कारिका ४/१*

ज्ञानत्वम्' स्मृतिव्यावृत्तप्रमालक्षणं कृत्वा तत्र च मीमांसकोक्तः 'न सोऽस्तिप्रत्ययो लोके यत्र कालो न भासते' इति नियमं स्वीकृत्य कालस्येन्द्रियवेद्यत्वाभ्युपगमेन धारावाहिकबुद्धेरपि पूर्वपूर्वज्ञानाविषय-तत्तत्क्षणविशेष-विषयकत्वेन तत्र अव्याप्तिः निवारिता।[१] तथापि न्यायमते क्षणानामतीन्द्रियत्वेन सर्वत्र ज्ञाने पूर्वं कालस्योपनयसन्निकर्षसत्त्वे प्रमाणाभावात्। एवं ज्ञानस्य स्वप्रकाशत्ववादिमते पूर्वज्ञानाविषयस्य स्वस्य उत्तरज्ञानेन विषयीकरणाद् उत्तरज्ञानस्यागृहीतग्राहित्वमस्ति इत्यपि न पूर्वपूर्वज्ञानाविषयस्वातिरिक्तविषयकत्वरूपप्रमात्वस्य उत्तरज्ञाने अभावात्।

ननु यत्र पूर्वं केनचित् प्रमाणेन गृहीतस्य पश्चात् विस्मृतस्यार्थस्य शाब्दबोधः स प्रमा वा अप्रमा वा। यदि यत्किञ्चित्काला-गृहीतग्राहित्वं प्रमात्वं, तर्हि तस्मिन् तत्सत्त्वात् तस्य प्रमात्वम्। यदि सर्वपूर्वकालागृहीतग्राहित्वं प्रमात्वं, तर्हि तस्मिन् शाब्दबोधे तादृशप्रमात्वाभावात् तस्याऽप्रमात्वमेव। ननु तस्य शाब्दबोधस्याऽ-प्रमात्वमेवेति चेदेवं हि वेदप्रामाण्यमेव न सम्भवति। 'यजेत स्वर्गकाम;' इत्यादिवेदवाक्यार्थानामनादिसंसारे यदा कदाचिदेकैकेनाप्यात्मना पूर्वं गृहीतत्वस्याऽवश्यकत्वेन तद्विषयकबोधस्य कदाप्यगृहीतार्थविष-यकत्वस्याऽसम्भवात् अप्रमात्वात् तद्बोधकवेदस्याऽप्रामाण्यापत्तेः। ननु संसारस्यानादित्वेऽपि तस्य पुरुषस्य त्रैवर्णिकत्वं पूर्वजन्मन्यासीदित्यस्य निश्चयाभावात् तदर्थस्य तेन पूर्वं गृहीतत्वे सन्देह एवेति चेत्, एवमपि वेदे प्रामाण्यसन्देह एवेति न वेदप्रामाण्यावधारणम्। ननु प्रकृतजन्मावच्छेदेना-

---

१. वेदान्तपरिभाषा पृ० ११

गृहीतग्राहित्वमेव प्रमात्वं, स्वप्राक्कालिक-स्वसमानाधिकरणस्वावच्छेदक-जन्मावच्छिन्नज्ञानाविषयविषयकत्वमिति यावत्, तथा च जन्मान्तरे तदर्थस्य गृहीतत्वेऽपि अस्मिन् जन्मनि गृहीतत्वाभावात् तदर्थबोधस्य यथोक्तप्रमात्वसम्भवात् न तादृशबोधजनकस्य वेदस्याऽप्रामाण्यापत्तिरिति चेत् परिभाषामात्रमिदम्। नानाजन्मानङ्गीकारिनास्तिकादिमतसाधारण्येनैव लोकानुभवसिद्धप्रामाण्यस्य निर्वचनीयत्वात्। किञ्च परिभाषाया अस्याः स्वीकारेऽपि येन पुरुषेण तस्मिन्नेव जन्मनि गृहीतोऽपि विस्मृतो यस्य वेदस्यार्थस्तं प्रति तद्बोधः अप्रमा स्यात्, तथा च तस्य वेदस्याऽप्रामाण्यप्रसङ्गः। अतोऽनधिगतार्थविषयकत्वं न प्रमालक्षणम्।

किं तर्हि प्रमालक्षणम्? तत्रोच्यते यथार्थानुभवत्वं प्रमायाः लक्षणम्। ननु प्रमालक्षणमिदं कथं लभ्यते इति चेत् महर्षि गौतमः प्रथमसूत्रे '.......तत्त्वज्ञानान्निःश्रेयसाधिगमः'[१] इति, प्रत्यक्षलक्षणसूत्रे च 'इन्द्रियार्थ-सन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम्'[२] इति च प्राह। तत्र प्रथमसूत्रे तत्त्वपदेन यथार्थत्वस्य, ज्ञानपदेन च अनुभवत्वस्य लाभः, तथा प्रत्यक्षलक्षणसूत्रे च अव्यभिचारिज्ञानपदाभ्यां यथार्थत्वस्यानुभवत्वस्य च ग्रहणात्।

ननु उक्तसूत्राभ्यां यथार्थज्ञानत्वमेव प्रमाप्रवृत्तिनिमित्तं लभ्यते न तु तद्विशेषोऽनुभवत्वमपि उभयत्र ज्ञानपदस्यैवोपादानात्, अनुमानप्रयोगश्च 'स्मृतिः प्रमा यथार्थज्ञानत्वात् अनुभववत्' अतः यथार्थानुभववद् यथार्थस्मृति-

---

१. न्यायसूत्रम् १/१/१

२. ,, १/१/४

रपि प्रमा कथं न स्यात् प्रमात्वे यथार्थत्वमेव प्रयोजनमनुभवस्य व्यर्थत्वात्, प्रथमसूत्रे तत्त्वज्ञानं=यथार्थज्ञानं द्वितीयसूत्रे च अव्यभिचारिज्ञानं=यथार्थज्ञानमित्यस्यैव सम्यत्वादिति चेन्न, स्मृतेर्यथार्थत्वं स्वजनकानुभवसापेक्षं, नैवानुभवस्य तथा च स्मृतेः स्वजनकानुभवसमानविषयकतया तत्प्रामाण्याधीनप्रामाण्यकतया सापेक्षत्वात् तत्र शास्त्रज्ञातॄणां न प्रमाव्यवहारः। ननु स्मृतिः प्रमापदेन व्यवहरेदिति चेत्, अत्र स्पष्टवक्ता आचार्योदयनः 'सिद्धे व्यवहारे निमित्तानुसरणात्, न च स्वेच्छाकल्पितेन निमित्तेन लोकव्यवहारनियमनम्, अव्यवस्थया लोकव्यवहारविप्लवप्रसङ्गात्।'[1] अर्थात् लोकव्यवहारसिद्धात् शक्तिग्रहात् पूर्वव्यवहारमनुसृत्य प्रवृत्तिनिमित्तनिर्णयः कार्यः न तु स्वाभीष्टं किञ्चित् प्रवृत्तिनिमित्तं परिकल्प्य लोकव्यवहारो नियन्तुं युक्तः। तथा सति अश्वादावपि गोपदप्रयोगः स्यात्। स्मृतौ प्रमाव्यवहारः यदि स्यात्तर्हि स्मृतिहेतुः संस्कारः प्रमाणपदेन व्यवह्रियेत नैतदस्ति। प्रमाणाभिज्ञाः शास्त्रप्रणेतारः 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'[2] इति स्पष्टं निर्दिशन्तः प्रत्यक्षाद्यनुभवहेतुमिन्द्रियादिकमेव प्रमाणमिति स्वीकुर्वाणाः स्मृतिहेतुसंस्कारं पृथगनिर्दिशन्तः स्मृतेरप्रमात्वमेव मन्यन्ते। ननु अर्थापत्त्यादीनामिव स्मृतिहेतोः संस्कारस्य उक्तेषु प्रमाणेषु अन्तर्भावात् तस्य पृथगनिर्देश इति चेत् संस्कारस्य स्मृतिरूपासाक्षात्कारिफलकत्वेन साक्षात्कारिफलके प्रत्यक्षे नान्तर्भावः। अनुमानोपमानशब्दानां ज्ञायमानत्वेनैव करणत्वात्, स्मृतिहेतोः संस्कारस्य च सत्तामात्रेण करणत्वात् नानुमानादिष्वन्तर्भाव इति, अतः स्मृतिहेतोः

---

१. न्यायकुसुमाञ्जलि- स्वोपज्ञः पृ० ५०५ (हिन्दी व्याख्या)

२. न्यायसूत्रम् १/१/३

संस्कारस्य पञ्चमप्रमाणत्वेनाऽपरिगणनात् स्मृतेः प्रमात्वं महर्षीणां नेष्टमिति प्रमालक्षणेऽनुभवत्वनिवेश आवश्यकः। एतावत्पर्यन्तं व्यवहारमनुसृत्य स्मृतिरप्रमेति व्यवस्थापितम्, अत एव वाचस्पतिमिश्राः तात्पर्यटीकायां स्मृत्यप्रामाण्ये तान्त्रिकव्यवहाराभावमेव शरणमिति प्रतिपादितवन्तः।

जयन्तभट्टास्तु अनर्थजत्वेन स्मृतेः प्रामाण्याभावः इति प्राहुः। भासर्वज्ञास्तु 'सम्यगनुभवः प्रमा'[१] इति प्रतिपादयन् अनुभवपदस्य स्मृतिवारकत्वात् स्मृतेः न प्रमात्वमित्युक्तवन्तः। एवं वैशेषिकाचार्यः श्रीधरोऽपि पूर्वानुभवपारतन्त्र्यं स्मृतेः प्रामाण्याभावे कारणमिति प्राह। एवं मीमांसकाचार्याः प्रभाकराः—

**प्रमाणमनुभूतिः सा स्मृतेरन्या स्मृतिः पुनः ।**
**पूर्वविज्ञानसंस्कारमात्रजं ज्ञानमुच्यते ।।'** (प्र०प० पृ० १०४)

एवञ्च मानमेयोदये 'स्मृतिव्यतिरिक्ता च संविदनुभूति'रिति प्राभाकराः (मानमेयोदयः पृ०९)

परन्तु वेदान्तपरिभाषायां 'तत्र स्मृतिव्यावृत्तं प्रमात्वं, 'अनधिगताबाधितविषयज्ञानत्वम्। स्मृतिसाधारणं तु 'अबाधितविषयज्ञानत्वम्'[२] इति द्विविधलक्षणं कृतम्।

नवीनास्तु यथार्थज्ञानत्वमेव प्रमात्वं, यथार्थत्वञ्च तद्वति तत्प्रकार-

---

*१. न्यायसारविचारः प्रथमपरिच्छेदः सू० ११*

*२. वेदान्तपरिभाषा पृ० ९*

कत्वं, तथा च स्मृतेरपि प्रमात्वमिष्टमेवेति प्रतिपादयन्ति। अत एवाह विश्वनाथः 'भ्रमभिन्नं तु ज्ञानमत्रोच्यते प्रमा' इति। एवञ्च तस्य व्याख्यानावसरे 'अथैवं स्मृतेरपि प्रमात्वं स्यात्, ततः किमिति चेत्, तथा सति तत्करणस्यापि प्रमाणान्तरत्वं स्यादिति चेत् न, यथार्थानुभवकरणस्यैव प्रमाणत्वेन विवक्षिततत्वात्' इत्युक्त्वा स्मृतेः प्रमात्वं प्रतिपादयति। तत्तु समीचीनमेव मन्ये।

तदिदं सारं 'अगृहीतग्राहित्वं प्रमात्वम्' इति जैनमीमांसकैः यदुक्तं, तस्य शुक्तौ 'इदं रजतम्' इत्यादिभ्रमस्थले अतिव्याप्तिः। एवं धारावाहिकबुद्धावव्याप्तिभियाप्रमायाः 'यथार्थानुभवत्वमेव लक्षणं कर्तव्यम्, तथा सति ईश्वरज्ञानस्यापि प्रमात्वं सम्भवति । अधिकमग्रे।

## ज्ञाततताखण्डनम्

अगृहीतग्राहिज्ञानं प्रमा' इति प्रमालक्षणमभ्युपेत्य ईश्वरस्य सर्वज्ञत्वात् तज्ज्ञाने अगृहीतग्राहित्वं नोपपद्यते इति ईश्वरज्ञानं न प्रमा। अतः ईश्वरः न प्रमाणमिति पूर्वपक्षः उपस्थापितः आसीत्। अस्मिन् प्रमालक्षणे भ्रमस्थले अतिव्यप्तिः एवं धारावाहिकबुद्धिस्थल अव्याप्तिश्च दर्शयित्वा प्रत्याख्यात आसीत् नैयायिकैः। परन्तु अत्र पूर्वपक्षी मीमांसकः पुनः प्रत्यवतिष्ठते यत् - अगृहीतग्राहित्वमेव प्रमायाः लक्षणम् तथा सत्यपि भ्रमस्थले नातिव्याप्तिः। तथाहि प्राभाकरमते ज्ञानमात्रस्य यथार्थत्वं, सर्वस्य ज्ञानस्य अर्थाव्यभिचारित्वेन तन्नियमात्। 'यस्यां संविदि योऽर्थोऽवभासते स तस्या विषयो नान्यः'[१] तस्य तत्राऽनवभासात्, अनवभासमानस्य विषयत्वेऽति

---

१. *न्यायसिद्धान्तमुक्तावली - कारिका १३४, पृ० ४३०-४३२*

१. *तत्रायथार्थज्ञानस्याभावात् .........। मानमेयोदयः पृ० ५-६*

प्रसंगात्, तेन अन्यस्य अन्यथाभानं प्रतीतिविरुद्धमेव। शुक्तौ 'इदं रजतम्' इत्यत्र न विशिष्टज्ञानमेकं किन्तु ज्ञानद्वयमेव, प्रत्यक्षात्मकं स्मरणात्मकञ्च, तत्र इदमांश एव प्रत्यक्षप्रतीतिविषयो न रजतांशस्तस्य चक्षुरादिसन्निकर्षाभावात्, किन्तु रजतांशस्य स्मरणमेव।[१] तत्र रजतस्मरणं गृहीतग्राहि, इदमितिधर्मिणोऽनुभवस्य अगृहीतग्राहित्वात् प्रमात्वमिष्टमेव। तथा च अगृहीतग्राहित्वमेव प्रमायाः लक्षणं तस्य च ईश्वरज्ञाने विरहात् ईश्वरज्ञानं न प्रमा।

एवं धारावाहिकज्ञाने अव्याप्तिं वारयन्ति मीमांसकाः। तदुक्तं मानमेयोदये 'तत्राप्ययमयमिति उत्तरोत्तरेषां कालांशानामज्ञातानामवगमादुत्तरे क्षणे घटादिसद्भावस्य च पूर्वज्ञानेनाधिगतत्वात्'[२] इति। एवं शास्त्रदीपिकायां पार्थसारथिमिश्रः 'धारावाहिकेष्वप्युत्तरोत्तरेषां कालान्तरसम्बन्धस्यागृहीतस्य ग्रहणाद् युक्तं प्रामाण्यम्'[३] इति। मीमांसका नीरूपस्यापि कालस्य इन्द्रियवेद्यत्वं स्वीकुर्वन्ति, अत एव सिद्धान्तचन्द्रिकाकारः— 'नास्माकं वैशेषिकादिवदप्रत्यक्षः कालः किन्तु प्रत्यक्ष एव 'अस्मिन् क्षणे मयोपलब्ध' इत्यनुभवात्। अरूपस्याप्याकाशवत् प्रत्यक्षत्वं भविष्यति, न हि रूपि प्रत्यक्षमित्यस्माकं प्रत्यक्षलक्षणं किन्तु संविदेव परोक्षापरोक्षनिर्भासा जायमाना 'इदं प्रत्यक्षम्', 'इदमप्रत्यक्षम्' इति विभजते'[४] इति। अत एव 'इदानीं घटः' इत्यादिप्रतीतौ कालविशेषस्य विषयत्वेनानुभवः। अन्यथा

---

१. प्रकरणपञ्चिका पृ० ४८

२. मानमेयोदयः पृ० ३-४

३. शास्त्रदीपिका पृ० ४५ (निर्णय, बम्बई)

४. सिद्धान्तचन्द्रिका पृ० ४५-४६ (,, ,,)

गृहीतेऽपि घटे, 'घटो वर्तमानो न वा' इत्याकारको वर्तमानतासंशयो लोकस्य भवेत्। न च तथा, तस्मात् कालस्य प्रत्यक्षत्वं स्वीकार्यम्। तथा सति धारावाहिकबुद्धिस्थले नूतनानां क्षणानां ग्राह्यत्वात्, अगृहीतग्राह्यत्वस्य द्वितीयादिज्ञानेऽपि सत्त्वात् भवति तस्य प्रमात्वम् अतो नाव्याप्तिः, तस्य च ईश्वरज्ञानेऽसत्त्वात् भवति च ईश्वरज्ञानस्याप्रमात्वम्।

एवं विषयव्यवस्थापकः सर्वद्रव्यवर्ती प्राकट्याभिपरपर्यायज्ञाततानामकः सामान्यगुणः सर्वैरपि अङ्गीकार्यः। ननु किमिदं प्राकट्यं नाम ? श्रूयताम् - सन्ति तावल्लौकिकपरीक्षकाणां घटः प्रकाशते, घटो भाति, प्रकटो घट इत्यादयो व्यवहाराः। न चैते भ्रान्तिमूलाः, बाधकाभावात्। अबाधितानामपि प्रत्ययानां भ्रन्तिमूलत्वकल्पने सर्वेषामपि तथात्वप्रसङ्गात्। तस्मादेते व्यवहारा एव स्वोपपादनाय प्रकाशविशिष्टमर्थमवकल्पयन्ति। तत्र विशेषणभूतः प्रकाशपदार्थः प्राकट्यमित्युच्यते[1] इति मानमेयोदये नारायणः, एवं 'नीतितत्वाविर्भावे' चिदानन्दश्च प्रतिपादयतः।

तदिदं पूर्वपक्षरूपेण प्रतिपादयन् हरिदासभट्टाचार्यः-ज्ञानेन हि विषयनिष्ठो धर्मः कश्चिज्जननीयः। अन्यथा ज्ञानस्य विषयम्प्रति नियमो न स्यात्। अयमाशयः - पटज्ञानस्य विषयः पट इत्यभिमतं सर्वेषाम्। परन्तु यदि कथं पट एव तज्ज्ञानस्य विषयो न घटादिरित्यत्र किं मूलमिति प्रश्नः क्रियते तदा किमुत्तरम्? ज्ञानविषययोः भेदे च सर्वजनप्रसिद्धे 'पटेन

---

१. मानमेयोदयः पृ० २४३, नीतितत्त्वाविर्भावः पृ० १३२

ज्ञानस्य तादात्म्यमादाय विषयप्रतिनियमः' इति सौगतमतेन न निर्वाहः, आलोकादेरपि पटचाक्षुषादिजनकत्वे सर्वाभिमते 'पटेन तज्ज्ञानं जन्यते अतः पटे एव तस्य विषयो नान्यः' इति तदुत्पत्तिपक्षेऽपि नोपपत्तिः। अतः पटे पटीयज्ञानविषयत्वप्रतिनियमार्थं पटीयज्ञानेन पटे कश्चित् धर्मः ज्ञातताऽऽख्यः जन्यते इति अवश्यमङ्गीकार्य इति। ज्ञातताख्यधर्मोत्पत्ति-स्वीकारस्य विषयत्वप्रतिनियमार्थमावश्यकत्वे च पूर्वज्ञानजन्यज्ञातता स्वाव्यवहितोत्तरक्षणोत्पन्नद्वितीयादिज्ञाने भासते इति पूर्वपक्षिणां सिद्धान्तात् धारावाहिकस्थले द्वितीयादिज्ञानानां पूर्वपूर्वज्ञातताविषयकत्वमिति अगृहीतग्राहित्वमेवेति। अतोऽगृहीतग्राहित्वस्य प्रमात्वप्रयोजकत्वे न किञ्चिद्बाधकमिति। एवं ज्ञातताधर्मस्वीकारे च यज्ज्ञानं यन्निष्ठज्ञातताजनकं, तज्ज्ञानं तन्निष्ठविषयतानिरूपकमिति नियम उपपद्यते। तथा च पटज्ञानजन्यज्ञातता रूपः पटज्ञानसम्बन्धः पटज्ञानविषयतानियामक इति पटज्ञानविषयत्वं पटज्ञानजन्यज्ञाततारूपसम्बन्धाश्रये पटे एव वर्तते न तु पटज्ञानजन्यज्ञाततारूपसम्बन्धानाश्रये घटे अतः भवति विषयनियमनम्। तस्मात् ज्ञातता स्वीकर्तव्या।

ज्ञाततायाः नैयायिकैरपि विषयत्वप्रतिनियमार्थमवश्याभ्युपेय-मेव तत्स्वीकारे सति नेश्वरसिद्धिः। तथाहि यत्र यत्र कार्यत्वं तत्र तत्र सकर्तृकत्वमिति ईश्वरवादिनां नैयायिकानां मतम्। कर्तृत्वञ्च उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमत्त्वम्। तथा च कार्यस्य उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वे विशेषणीभूतोपादान-विषयापरोक्षज्ञानजन्यत्वमपि सिद्ध्यत्येव। एवं च सति ज्ञानजन्यज्ञाततायाः अपि कार्यीभूतायाः तदुपादानगोचरापरोक्षज्ञानजन्यत्वमुचितम्। तच्चानुप-पन्नम्, ज्ञाततया उत्पत्यर्थं तदुपादानभूतपटादिविषयकज्ञानमावश्यकम्,

परन्तु तदुपादाने पटादौ ज्ञानविषयत्वं तावन्न सम्भवति विषयत्वस्य ज्ञातताधीनतया ज्ञाततोत्पत्तेः प्राक् पटादेः ज्ञानविषयत्वासम्भवात्। तथा च ज्ञाततोत्पत्त्यपेक्षं तदुपादाने ज्ञानविषयत्वम्, तदुपादाननिष्ठज्ञानविषयत्वापेक्षा च ज्ञाततोत्पत्तिरिति अन्योन्याश्रयः, तृतीयकल्पने चक्रकम्, अधिककल्पने तु अनवस्थेति न ज्ञाततायाम् सत्यपि कार्यत्वे उपादानज्ञानजन्यत्वमुपपद्यते।

द्वितीयकल्पे तु व्यभिचारः। तथाहि ज्ञाततायां कार्यत्वमस्ति किन्तु सकर्तृकत्वं नास्ति यतः सकर्तृकत्वव्याप्यमुपादानज्ञानजन्यत्वं नोपपद्यते इति यत्र यत्र कार्यत्वम् तत्र तत्र सकर्तृकत्वमिति व्याप्तेरेव ग्रहणं न सम्भवति, सहचारदर्शनव्यभिचाराऽदर्शनाभ्यां हि नैयायिकानां व्याप्तिग्रहः। प्रकृते च घटादौ सत्यपि सहचारदर्शने सकर्तृकत्वाभाववत्यां ज्ञाततायां कार्यत्वस्य दर्शनेन व्यभिचारस्य दर्शनादिति कार्यत्वसकर्तृक-त्वयोः व्याप्तेरसिद्धौ न तामाश्रित्य क्षित्यादिकार्यस्य सकर्तृकत्वानुमान-परिशेषादीश्वरसिद्धिरिति मीमांसकानामाशयः।

अत्र नैयायिकाः-घटादिज्ञानेन घटादिरूपे विषये ज्ञातता जन्यते इति मीमांसकमतस्वीकारेऽपि घटज्ञानेन घटे एव ज्ञातता जन्यते न पटे इत्यत्र कश्चिन्नियामको वाच्यः। स च नियामकः स्वभावविशेषः एवेति स्वीकरणीयम्। नियामकाभावे ज्ञातता घटादौ नियते विषये जनयितुमशक्या। यदि स्वभावविशेषः ज्ञातताया नियामक इत्यङ्गीक्रियते तदा स एव स्वभावविशेषो विषयत्वनियामकः भवेदेवेति किमतिरिक्तज्ञातताकल्पनेन। अथ स्वभावमन्तरेण यथा कथञ्चित् सति विद्यमाने अर्थे घटादिरूपे विषये ज्ञाततायाः सुघटत्वेऽपि, अन्यथा स्वभावस्य नियामकत्वाभावे असति अविद्यमाने अतीते अनागते वा विषये का गतिः। अतीतानागतादेरसत्त्वेन तत्र ज्ञानजन्यज्ञाततारूपफलाना-

धारत्वात्, तस्य विषयत्वव्याघात एव स्यात्। तथा च स्वसमवेतसामान्यं प्रति स्वस्य तादात्म्यसम्बन्धेन हेतुत्वात्, घटादिसमवेतज्ञाततां प्रत्यपि घटादेस्तादात्म्यसम्बन्धेन हेतुतया अतीतानागतादिघटस्थले घटादिरूप-कारणाभावात् न ज्ञातताजननसम्भवः। ननु अतीतादिविशेषाणमभावेऽपि अतीतादिघटादौ भासमाने घटत्वादेरपि भासमानत्वात् घटत्वादौ एव ज्ञाततोत्पत्तिः स्यादिति चेत्, तथा सति ज्ञातताऩाश्रयत्वात् घटादिर्ज्ञानविषयो न स्यात् घटत्वादौ ज्ञातताजननात् घटत्वादिरेव ज्ञानविषयः स्यात्। ज्ञातताश्रयस्यैव ज्ञानविषयत्वाङ्गीकारात्। तदुक्तमाचार्यैः—

**स्वभावनियमाभावादुपकारोऽपि दुर्घटः।**
**सुघटत्वेऽपि सत्यर्थेऽसति का गतिरन्यथा।।**[1] इति।

अतो विषयतानियमार्थं तत्रावश्यं स्वाभाविक एव सम्बन्धो नियामकः इति मन्तव्यम्। ज्ञाततावलम्बेन धारावाहिकबुद्धिस्थले द्वितीयादिज्ञाने नाव्याप्तिनिरासः। अतः अगृहीतग्राहित्वं प्रमात्वम्' इति लक्षणं दुष्टमेव । तथा च नास्ति ज्ञातता इति न तत्र कार्यत्वस्य सकर्तृकत्व-व्यभिचार इति क्षित्यादिकार्यकर्तृत्वेन ईश्वरः सिद्ध्यत्येवेति स्थितम्।

'या या क्रिया सा सा कर्मनिष्ठकिञ्चिज्जनिका' इति व्याप्तिमवलम्ब्य पूर्वपक्षी मीमांसकः ज्ञानक्रियया घटे ज्ञातताधर्मोपत्तिं साधयति। अयमाशयः - परसमवेतक्रियाजन्यफलशालित्वं हि कर्मत्वं नैयायिकाः सङ्गिरन्ते। तथा च देवदत्तादिसमवेतज्ञानक्रिययाऽपि कश्चिदति-

---

१. न्यायकुसुमाञ्जलिः कारिका ४/२

शयः घटादिकर्मणि अवश्यमेव जननीय, इतरथा घटादेः कर्मत्वानुपपत्ते-रिति। तथा चायं प्रयोगः 'ज्ञानक्रिया स्वकर्मनिष्ठफलजनिका क्रियात्वात्, ग्रामस्वरूपकर्मनिष्ठसंयोगरूपफलजनकगमनक्रियावत्। अनेनाऽनुमानेन विषयनिष्ठं ज्ञाततारूपं फलं सिद्ध्यति। ज्ञाततासिद्धौ च सकर्तृकत्वव्यभि-चारित्वं कार्यत्वहेतौ यथावस्थमेवेति पूर्वपक्षः।

अत्र नैयायिकाः-'सकर्मिका क्रिया स्वकर्मणि कश्चिदतिशयं जनयत्येव' इति नियमे व्यभिचारः। कथमिति चेत्, तावत्प्रथमं इदं ज्ञेयम्, क्रियाशब्दस्य (१) धात्वर्थः, (२) करणव्यापारः, (३) स्पन्दश्चेति त्रयोऽर्थाः सम्भवन्ति। तत्र कोऽर्थः भवताभिप्रेतः यदि प्रथमस्तदा 'शरेण गगनं युनक्ति' इत्यत्र संयोगादिरूपधात्वर्थेन गगनरूपे कर्मणि किञ्चित्फलाजननात् 'या क्रिया सा कर्मनिष्ठकिञ्चित्फलजनिकेति' नियमे व्यभिचारः। ननु 'शरेण गगनं युनक्ति' इत्यत्र संयोगानुकूलस्पन्दः धात्वर्थस्तथा च तत्र संयोगानुकूलस्पन्दरूपधात्वर्थेन गगनरूपे कर्मणि संयोगरूपफलस्य जननात् गगनस्य स्पन्दजन्यसंयोगरूपफलवत्त्वेन न व्यभिचार इति चेत्, 'चैत्रः अन्त्यशब्दं जानाति' इत्यत्र अन्त्यशब्दाभि-व्यक्तौ व्यभिचारः। तत्र अभिव्यक्तिक्रियाया अन्त्यशब्दे कर्मणि किञ्चित्फलजनकत्वाभावात्। न च अन्त्यशब्दाभिव्यक्त्या अन्त्यशब्दे ज्ञाततैवोत्पद्यते इति वाच्यम्, अन्त्यशब्दस्याऽव्यवहितोत्तरक्षणे एव नाशात्। समवायिकारणस्य च कार्यसमानकालतानियमात्। न च मीमांसकमते शब्दानां नित्यत्वस्य स्वीकारेण अन्त्यशब्दे ज्ञाततोत्पत्तिः सम्भवतीति वाच्यम्, शब्दनित्यत्वस्य पूर्वमेव निषेधात्।

यदि द्वितीयः करणव्यापारः क्रियाशब्दार्थः। तदा 'चक्षुषा घटं पश्यति' इत्यत्र इन्द्रियसंयोगादिना करणव्यापारेण प्रमातरि फलजनकत्वेऽपि

कर्मणि घटे किञ्चित्फलाजननात्, क्रियात्वस्य पश्यति इत्यत्र सत्त्वेऽपि, कर्मनिष्ठफलजनकत्वरूपसाध्याभावात् भवति व्यभिचारः। फलमेव क्रियेति स्वीकारे 'ओदनं पचति' इत्यादौ विक्लित्यादौ फले ओदनादिरूपकर्म-निष्ठकिञ्चित्फलजनकत्वाभावात् व्यभिचारः। यदि फलेनापि फलान्तरं जन्यते इति स्वीक्रियते ततस्तेन तेनापि इति भवति अनवस्था। क्वचित्फले विश्रान्तौ तत्रैव किञ्चित्फलजनकत्वाभावात् व्यभिचारः। यदि आशुविनाशि-धर्मः क्रिया इति स्वीक्रियते, तदा आशुविनाशिषु अपेक्षाबुद्धिजन्येषु तन्नाशनाश्येषु द्वित्वादिषु स्वाश्रये किञ्चित्फलाजनकेषु व्यभिचारः। तत्र एकत्वसंख्ययैव सङ्ख्यान्तरोपजननात्। यदि आशुकारकत्वं क्रियात्वमित्युच्यते, तदा किमिह कर्मण्याशुकारकत्वं हेतुः, कर्तर्याशुकारकत्वं वा। यदि कर्मण्याशुकारकत्वं हेतुस्तदा तस्यैव साध्यत्वादसिद्धत्वम्। यदि कर्तर्याशु-कारकत्वं हेतुस्तदा शब्दलिङ्गेन्द्रियव्यापारेषु पदार्थस्मरणलिङ्गपरामर्शेन्द्रिय-सन्निकर्षेषु व्यभिचारः। ते हि कर्तर्यात्मनि वाक्यार्थज्ञानानुमितिप्रत्यक्षाणि जनयन्तोऽपि नहि कर्मणि वाक्यार्थे अनुमेयादौ वा किञ्चिज्जनयन्ति।

यदि तृतीयः क्रियाशब्दार्थः स्पन्दः स्वीक्रियते, तदा ज्ञाने पक्षे स्पन्दात्मकत्वस्य हेतोः असत्त्वेन स्वरूपासिद्धिः। तथा च ज्ञानं कर्मनिष्ठकिञ्चिदतिशयाधायकं क्रियात्वादित्यनुमानं न सम्भवति, कर्मनिष्ठातिशयजनकत्वाऽव्याप्यत्वादिति नानुमानेन कर्मणि क्रियात्वस्य घटादौ ज्ञानजन्यज्ञाततासिद्धिरिति। तदाहुः आचार्याः—

**अनैकान्तादसिद्धिर्वा न च लिङ्गमिह क्रिया।**[1] **इति।**

---

१. न्यायकुसुमाञ्जलि- कारिका ४/३

अत्र मीमांसकाः- अस्तु तर्हि नानुमानेन ज्ञाततासिद्धिः, तथापि ज्ञाततासिद्धौ प्रत्यक्षमेव प्रमाणम्, तदाह नारायणः मानमेयोदये प्राकट्यभिपरपर्यायज्ञाततानामकसामान्यगुणः 'संयुक्ततादात्म्यसम्बन्धेन प्रत्यक्षगम्यः'[१] इति। तथा च 'ज्ञातो घटः' इत्यत्र सामान्यरूपेण 'साक्षात्कृतो घटः' इत्यत्र च विशेषरूपेण घटादिरूपविषयविशेषणतया ज्ञातता प्रत्यक्षानुभवसिद्धैवेति नानुमानेन सिद्धावपि का हानिः। इत्यत्राह- **'तद्वैशिष्टप्रकाशत्वान्नाध्यक्षानुभवोऽधिके'**[२]। इति। अर्थात् - सर्वत्र विशिष्टज्ञाने विशेषणं, विशेष्यं, तदुभयसम्बन्धश्च विषयो भवति, तथैवात्रापि 'ज्ञातो घटः' इत्यादिविशिष्टानुभवे ज्ञानात्मकविशेषणं, घटात्मकविशेष्यं, तद्वैशिष्ट्यप्रकाशकः तदुभयसम्बन्धात्मकः विषयतारूप-स्वरूपसम्बन्ध एव भासते, अधिके ज्ञानविषयत्वातिरिक्ते ज्ञाततारूपधर्मे न प्रमाणम्, स च विशेषणविशेष्ययोः सम्बन्धः क्वचित् 'घटवद्भूतलं' इत्यादौ संयोगः, 'रूपवान् घटः' इत्यादौ समवायः, क्वचित्तु स्वरूपः। तथा च यथा घटज्ञानमिति प्रतीतौ ज्ञाने घटस्य विषयित्वरूपः सम्बन्धो भासते नातिरिक्तः सम्बन्धस्तथा 'ज्ञातो घटः' इति प्रतीतावपि घटे ज्ञानस्य विषयत्वरूपः सम्बन्धो भासते न तु अतिरिक्तो ज्ञाततारूपो धर्मः। अन्यथा 'ज्ञातो घटः' इति प्रतीतौ अतिरिक्तज्ञाततारूपधर्मस्य भावस्वीकारे 'इष्टो घटः' इति प्रतीतौ अतिरिक्तः इष्टतारूपो धर्मः, 'कृतो घटः' इति प्रतीतौ च अतिरिक्तः कृततारूपो धर्मो भासते इत्यपि स्वीकर्तव्यं स्यात्। ननु 'इष्टो घटः' इत्यादि- प्रतीतौ स्वरूपसम्बन्ध एव भासते न तु अतिरिक्तेष्टत्वमिति चेत्

---

१. मानमेयोदयः पृ० २४२-२४३

२. न्यायकुसुमाञ्जलिः कारिका ४/३

'ज्ञातो घटः' इत्यत्रापि स्वरूपसम्बन्ध एव भासते न तु अतिरिक्ता ज्ञातता। तथा च 'इष्टो घटः' इत्यादिप्रतीतौ घटे इच्छादेरिव 'ज्ञातो घटः' इत्यत्रापि घटे ज्ञानस्य विषयतारूपः सम्बन्धो भासते नत्वतिरिक्ता ज्ञाततेति सिद्धम्। इत्थं प्रकारेण ज्ञाततायाः निरासे सति पूर्वोक्तम् 'अगृहीतग्राहित्वं प्रमायाः लक्षणं न सम्भवति, अव्याप्ति-अतिव्याप्तिदोषदूषितत्वात्, तथा सति यथार्थानुभवत्वमेव प्रमाया लक्षणं कर्तव्यम्, तस्य च ईश्वरज्ञानेऽपि सत्त्वात् भवति ईश्वर ज्ञानं प्रमा। एवञ्च ज्ञाततायाः निरासे कार्यत्वहेतुरव्यभिचारी अतः तेन सकर्तृकत्वं सिद्ध्यति स एव कर्ता ईश्वर इति। अगृहीतग्राहित्वाभावेन ईश्वरज्ञानस्य अप्रमात्वम् इति पक्षे विफलीभूत; पूर्वपक्षी पक्षान्तरेणेश्वरज्ञाने प्रमात्वाभावं साधयितुमाह—'ईश्वरज्ञानं न प्रमा प्रमाणजन्यत्वाभावात्' प्रमाणजन्यफलमेव प्रमा भवति। ईश्वरज्ञानस्य च नित्यत्वेन प्रमाणजन्यत्वाभावात् न प्रमात्वम्। ननु तर्हि ईश्वरज्ञानस्य प्रमाकरणत्वरूपं प्रमाणत्वमस्तु इति चेत् 'ईश्वरज्ञानं न प्रमाणं प्रमाकरणत्वाभावात्'। ईश्वरज्ञानस्य कार्यमात्रे साधारणकारणत्वेन अस्मदादिप्रमां प्रति कारणत्वेऽपि नियतव्यापाराभावेन करणत्वाभावात्। तथा च ईश्वरज्ञानस्य प्रमात्वरूपं प्रमाकरणत्वरूपं वा प्रामाण्यं न सम्भवति। यत ईश्वरज्ञानं न प्रमा अतस्तदाश्रय ईश्वरो न प्रमाता प्रमाश्रयस्यैव प्रमातृत्वादिति मीमांसकानामाशयः।

अत्र नैयायिकाः - अगृहीतग्राहित्वं प्रमाया लक्षणखण्डनपुरस्सरं यथार्थानुभवत्वमेव प्रमात्वमिति तत्तु 'नित्यानित्यसाधारणम्। तस्य चेश्वरज्ञाने सत्त्वाद्भवति ईश्वरज्ञानं प्रमा। अत्र प्रमालक्षणे अनित्यत्वं न निवेशनीयं नित्यानुभवसिद्ध्यसिद्धिभ्यामनुपपन्नत्वात्। तथा च नित्यानुभव-सिद्धौ तत्प्रमात्वस्यापीष्टतया तद्व्यवच्छेदस्याऽनिष्टत्वाद् अनित्यत्वविशेषणस्य

वैयर्थ्यम्। नित्यानुभवाऽसिद्धौ च व्यावर्त्याभावेन अनित्यत्वविशेषणस्य वैयर्थ्यप्रसङ्गात्। एवं 'ईश्वरज्ञानं न प्रमा प्रमाणजन्यत्वाभावात्' इत्यनुमानं न सम्भवति आश्रयासिद्धिदोषदूषितत्वात्। तथा च पूवपक्षिमीमांसकानां मते ईश्वरज्ञानस्यानभ्युपगमात्। क्वानुमानमनाश्रयम्। ईश्वरज्ञानाभ्युपगमे तु धर्मिग्राहकप्रमाणेन तत्र प्रमात्वस्याऽपि सिद्धत्वेन तत्र प्रमात्वाभावसाधने बाधात्। अत ईश्वरज्ञानस्य प्रमात्वे न किमपि बाधकम्।

एवं प्रमातृत्वमपि प्रमासमवायित्वमेव, न तु कारकत्वे सति प्रमासमवायित्वम्। ईश्वरसिद्धौ तादृशप्रमात्वस्यापि सिद्धत्वात् कारकत्वदलस्य वैयर्थ्यात्। ईश्वराऽसिद्धावपि व्यावर्त्याभावेन कारकत्वे सति इति विशेषणदानस्य व्यर्थत्वात्। ननु यदीश्वरस्य प्रमातृत्वमभ्युपगम्येत तर्हि 'मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्'[१] इति न्यायसूत्रविरोधः। तेन हीश्वरस्य प्रामाण्यं प्रतिपाद्यते न तु प्रमातृत्वमिति चेन्न, प्रमासमवायो हि प्रमातृव्यवहारनिमित्तं, प्रमया सह अयोगव्यवच्छेदेन सम्बन्धः प्रमाणव्यवहारनिमित्तं, तदुभयञ्चेश्वरे अस्त्येव। तथा च निमित्तद्वयसमावेशेन एकस्मिन्नीश्वरे प्रमातृव्यवहारेण सह प्रमाणव्यवहारसमावेशे न कश्चित् विरोधः। अत्रापि लक्षणे 'कार्यया प्रमया सह समवायः प्रमातृत्वम्' 'कार्यया प्रमया सहायोगव्यवच्छेदेन सम्बन्धः प्रमाणम्' इति कार्ययेति विशेषणपदनिवेशः सिद्ध्यसिद्धिभ्यां पूर्ववन्निरर्थकः। ननु तथापीश्वरस्य प्रमाणत्वं प्रमातृत्वं च न सम्भवति। तथाहि प्रमीयते अनेनेति प्रपूर्वकमाधातोः 'करणाधिकरणयोश्च' इति सूत्रेण करणकारके ल्युट्प्रत्यये

१. न्यायसूत्रम् २/१/६८

प्रमाणशब्दो निष्पद्यते, एवं 'प्रमिणोति' इति प्रपूर्वकडुमिञ् प्रक्षेपणे इति धातो:'ण्वुल्तृचौ' इति सूत्रेण कर्तृकारके तृच्प्रत्यये 'मीनातिमिनोतिदीङां ल्यपि च' इति सूत्रेण आत्वे प्रमातृशब्दः। तथा चोक्तव्युत्पत्त्या प्रमाकरणत्वं प्रमाणत्वं, प्रमां प्रति कर्तृकारकत्वे सति प्रमासमवायित्वं च प्रमातृत्वम्। तदीश्वरस्य न सम्भवति। ईश्वरप्रमाया नित्यत्वाभ्युपगमेन ईश्वरस्य तां प्रति कथमपि कारकत्वाभावादिति चेन्न, वैयाकरणव्युत्पत्तिमात्रमिदम्। यथा 'गच्छति' इति गौरित्यत्र गम्लृधातो: 'गमर्डो' इत्यौणादिकसूत्रेण डो प्रत्यये धातोष्टिलोपे च गमनक्रियारूपं प्रवृत्तिनिमित्तमादाय गोशब्दस्य व्युत्पन्नत्वेऽपि अगच्छत्यपि गोशब्दप्रयोगात्, सास्नादिमत्त्वमेव गोशब्दस्य प्रवृत्तिनिमित्तं, न तु गमनं, तथा प्रमातृशब्दस्यापि प्रमासमवायित्वमेव प्रवृत्तिनिमित्तं, न तु प्रमां प्रति कर्तृकारकत्वे सति प्रमासमवायित्वम्। यदि प्रमाकर्तृत्वेनैव प्रमातृत्वं 'स्वतन्त्रः कर्ता' इति पाणिनिशासनात् शाब्दिकप्रवृत्तिनिमित्ता-नुसरणं च तदा अस्मदादीनामपि स्वातन्त्र्याभावात् प्रमातृव्यवहारो न भवेत् । फलानुकूलकृतिमत्त्वं हि कर्तृत्वं, सर्वप्रमायामस्मदादीनामपि तत्कर्तृत्वं नास्ति। अस्मदादिप्रयत्नं विनापि अस्मदाद्यजिज्ञासितविषयक-प्रमोत्पत्तेः। ननु तथापि प्रत्यक्षादिसर्वप्रमाणानुगतत्वात् प्रमाकरणत्वमेव प्रमाणशब्दस्य प्रवृत्तिनिमित्तमस्तु तत्तु ईश्वरे न सम्भवतीति चेत्। लोके यद्यपि चक्षुरादिषु प्रमाणव्यवहारः प्रमाकरणत्वनिमित्तकस्तथापि लोकोत्तरे ईश्वरे प्रमाया अयोगव्यवच्छेदेन सम्बन्धनिमित्तक एव।

ननु यदीश्वरः प्रमाणं तर्हि तस्य पञ्चमप्रमाणत्वापत्त्या 'प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि'[१] इति प्रमाणपदार्थस्य चतुर्धा विभाग-

---

१. न्यायसूत्रम् १/१/३

व्याघातः। न चेश्वरस्य क्लृप्तप्रमाणेष्वेवाऽन्तर्भावात् न चतुर्धाविभागव्याघात इति वाच्यं, तस्य इन्द्रियलिङ्गशब्दरूपकरणभिन्नत्वात् उपमानस्य नियतविषयत्वात् तद्भिन्नत्वमीश्वरस्य स्पष्टमेवेति चेन्न, ईश्वरज्ञानस्य साक्षात्कारिप्रमात्वेन प्रत्यक्षमध्ये निवेशात्, ईश्वरस्य साक्षात्कारिप्रमया सह अयोगव्यवच्छेदेन सम्बन्धस्य सम्भवेन ईश्वरस्य प्रत्यक्षप्रमाणान्तर्भावान्नोक्तदोषः। ईश्वरज्ञानस्य साक्षात्कारिप्रमात्वं तु धर्मिग्राहकमानसिद्धम्। ननु ईश्वरज्ञानस्य इन्द्रियार्थसन्निकर्षोत्पन्नत्वाभावात् तस्य प्रत्यक्षत्वस्वीकारे 'इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभि-चारि व्यवसायात्मकं प्रत्यक्षम्' इति न्यायसूत्रविरोध इति चेन्न, यथाश्रुतं सूत्रं तु लौकिकप्रत्यक्षमात्रविषयमित्यदोषः।

ननु तथापि ईश्वरज्ञानमप्रमैव भ्रमत्वात्। ईश्वरज्ञानस्य कथं भ्रमत्वमिति चेत्, ईश्वरस्य सर्वज्ञत्वेन तज्ज्ञानस्य सर्वविषयकत्वानुरोधेने अस्मदादिभ्रमविषयकत्वं, ज्ञानविषयकज्ञानस्य ज्ञानविषयविषयकत्वनियमात् भ्रमविषयविषयत्वावश्यकत्वात्, अस्मदादिभ्रमवदेव विपरीतार्थावगाहना-दीश्वरज्ञानमपि भ्रमः स्यादेव। ईश्वरज्ञानस्य अस्मदादिभ्रमाविषयकत्वे तु ईश्वरस्य असर्वज्ञत्वात् अस्मदादिभ्रमनिवृत्त्यर्थानां तदुपदेशानामसर्वज्ञ-पूर्वकत्वेन अश्रद्धेयत्वं स्यादिति चेन्न, ईश्वरज्ञानस्य व्यधिकरणप्रकारक-त्वाभावेन भ्रमत्वाभावात्। यत्र विशेष्ये यः प्रकारो नास्ति तत्र विशेष्ये तस्य प्रकारस्य ज्ञानं हि व्यधिकरणप्रकारकत्वाद् भ्रम इत्युच्यते। यथा शुक्तौ इदं रजतमिति ज्ञानम्। तद्धि शुक्तिरूपे विशेष्ये यद्रजतत्वं प्रकारो नास्ति तस्य रजतत्वस्य ज्ञानं भ्रमः। 'शुक्तिविशेष्यकरजतत्वप्रकारकज्ञानवानयं जीवः' इतीश्वरज्ञानं तु भ्रमनिष्ठं शुक्तिविशेष्यकत्वं रजतत्वप्रकारकत्वं सदेवाऽवगाहते इति न तस्य भ्रमत्वम्। तथा च शुक्तौ इदं रजतमिति ज्ञाने

व्यधिकरणत्वं रजतत्वं प्रकारस्तेन तज्ज्ञानं व्यधिकरणप्रकारकत्वाद् भ्रमः। ईश्वरज्ञाने तु रजतत्वप्रकारकत्वं प्रकारस्तत्तु न व्यधिकरणं तस्य भ्रमे विद्यमानत्वादिति ईश्वरज्ञानस्य न भ्रमत्वं किन्तु यथार्थानुभवत्वरूपं प्रमात्वमेव। भ्रमस्य प्रमात्वाभावेऽपि भ्रमविषयकज्ञानस्य भ्रमत्वाभावात्। अन्यथा भ्रमविषयकज्ञानस्य अप्रमात्वे, प्रमाणाभावात् भ्रमपदार्थ एव न सिद्ध्येत्। भ्रमत्वग्राहकज्ञानस्य भ्रमविषयमुल्लिखतो भ्रमस्येव अयथार्थत्वात्। यथार्थज्ञानेन हि वस्तुसिद्धिः। भ्रमविषयकज्ञानञ्च तव मते भ्रमविषयविषयकत्वात् न यथार्थज्ञानम्। तत् तेन कथं भ्रमपदार्थः सिद्ध्येत्। तथा च शुक्तिविशेष्यकरजतत्वप्रकारकभ्रमज्ञानवानयमितीश्वरज्ञानेन भ्रमे शुक्तिविशेष्यकत्वं रजतत्वप्रकारकत्वं च वर्तमानमेव गृह्यते इति तद्यथार्थमेव। अतो यथार्थानुभवत्वरूपप्रमात्वमपि तत्र नास्तीति नाशङ्कनीयम्। तत्सिद्धमीश्वरज्ञानस्य प्रमात्वम्, ईश्वरस्य प्रमातृत्वं प्रमाणत्वं (=प्रमाश्रयत्वं) चेति।


**

# पञ्चमोऽध्यायः

मङ्गलाचरणम्

इत्येवं श्रुतिनीतिसम्प्लवजलैर्भूयोभिराक्षालिते
येषां नास्पदमादधासि हृदये ते शैलसाराशयाः ।
किन्तु प्रस्तुतविप्रतीपविधयोऽप्युच्चैर्भवच्चिन्तकाः
काले कारुणिक ! त्वयैव कृपया ते तारणीया नराः ।।
अस्माकन्तु निसर्गसुन्दर ! चिराच्चेतो निमग्नं त्वयी-
त्यद्धानन्दनिधौ तथापि तरलं नाद्यापि सन्तृप्यते ।
तन्नाथ त्वरितं विधेहि करुणां येन त्वदेकाग्रतां
याते चेतसि नाप्नुवाम शतशो याम्याः पुनर्यातनाः ।।

## ईश्वरसिद्धिसमीक्षा

# पञ्चमोऽध्यायः

ईश्वरविषयकपञ्चविधविप्रतिपत्तिषु मध्ये चरमा विप्रतिपत्तिरस्ति **'तत्साधकप्रमाणाभावात्'** इति। इयं विप्रतिपत्तिः सांख्यानाम्। तदर्थश्च - ईश्वरबाधकप्रमाणानामभावेऽपि साधकप्रमाणाभावान्नास्त्येवेश्वर इति। एवञ्च बाधकप्रमाणसद्भावे साधकप्रमाणमकिञ्चित्करं भवति। पूर्वोक्ततृतीयेऽध्याये बाधकप्रमाणं निराकृतम्। अत्रोऽत्र साधकप्रमाणपुरस्सरमीश्वरसिद्धिः समीक्ष्यते।

## ईश्वरसाधकप्रमाणं नास्तीति साङ्ख्याः

आध्यात्मिक-आधिदैविक-आधिभौतिकात्मकसंसाराऽनल-तप्तानां जीवानां समुद्धरणाय महर्षिकपिलाः सांख्यसूत्रं निर्मीय साङ्ख्यदर्शन-मारब्धवन्तः। तत्र भवता महर्षिणा कपिलेन 'ईश्वराऽसिद्धेः' 'मुक्तबद्धयो-रन्यतराभावान्न तत्सिद्धिः' 'उभयथाऽप्यसत्कारत्वम्' 'मुक्तात्मनः प्रशंसा उपासासिद्धस्य वा'[१] इति चतुर्भिः सूत्रैरीश्वराङ्गीकारो निषिद्धः। तत्र प्रथमसूत्रेणेश्वरनिषेधः प्रतिज्ञातः। द्वितीयसूत्रेण चेश्वरास्तित्वे स किं मुक्तपुरुषान्तर्गतः, उत बद्धपुरुषान्तगत इत्याक्षेपः कृतः। तृतीयेन सूत्रेण तस्य मुक्तपुरुषान्तर्गतत्वे सृष्टिप्रयोजकाभिमानाद्याभावान्न तेनेश्वरेण सृष्टिसम्भवः। बद्धपुरुषान्तर्गतत्वे चास्य मूढत्वान्न सृष्ट्यादिक्षमत्वमित्यु-भयथाप्यनुपयुक्तत्वं प्रतिपाद्य चतुर्थेन सूत्रेणेश्वरप्रतिपादकवचनानां मुक्तात्मनां प्रशंसामात्रपरत्वमिति व्यवस्थापितम्। पुनश्च 'प्रमाणाभावान्न तत्सिद्धिः'

---

१. सांख्यसूत्रम् ५/९२-९५

'सम्बन्धाभावान्नानुमानम्' 'श्रुतिरपि प्रधानकार्यत्वस्य'[१] इति सूत्रत्रयेणेश्वरास्तित्वे न प्रत्यक्षादिप्रमाणं सम्भवतीत्युक्तम्। तथा च प्रत्यक्षं द्विविधं - बाह्यं, मानसञ्च नहि तत्र बाह्यप्रत्यक्षं प्रमाणम्। अरूपिद्रव्यत्वात्। बहिरिन्द्रियजन्यद्रव्यप्रत्यक्षे च उद्भूतरूपस्य कारणत्वात्। नापि मानसं प्रत्यक्षम्। स्वात्मभिन्नद्रव्यत्वात्, ज्ञानादिभिन्नत्वाच्च। परात्मनः परेण मनसाऽग्राह्यत्वात्, स्वमनसा स्वात्मप्रत्यक्षं प्रति परात्मव्यावृत्तविजातीयात्ममनःसंयोगस्यैव कारणत्वात्। ईश्वरे च तस्याऽभावात्। नाप्यनुमानं प्रमाणम्, ईश्वरस्याऽप्रत्यक्षतया तस्य केनचिल्लिङ्गेन सहचारदर्शनाभावेन व्याप्तिग्रहाऽसंभवात्। उपमानप्रमाणस्य त्वनुमानाद्यनतिरिक्तत्वम्। तस्य प्रामाण्येऽपीश्वरतुल्यस्य कस्यचिदभावेन सादृश्यज्ञानाऽसंभवात्। नापि शब्दस्तत्र प्रमाणम्, 'द्यावाभूमी जनयन्देव एकः' इत्यादिश्रुतीनामीश्वरोच्चरितत्वेन प्रामाण्याद् ईश्वरस्यैव सन्दिग्धत्वेन तदुक्ततया श्रुतीनां प्रामाण्येऽपि सन्देहात्,[२] अर्थापत्त्यादिप्रमाणानां न पृथक्प्रामाण्यम्। तथा च चतुर्विधप्रमाणाऽगोचरत्वादीश्वरस्य वस्तुन एवासत्त्वात् किञ्चिदपि प्रमाणमीश्वरसाधकं नोपलभ्यते। एवञ्च श्रुतिरपि नेश्वरसाधिका—

**अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः ।।**

इति श्रुत्या प्रकृतेरेव जगत्स्रष्टृत्वस्य प्रतिपादितत्वादिति सूत्रत्रयस्याशयः।

परन्त्वत्र सूत्रकारस्य महर्षेराशयो विज्ञानभिक्षुणा ईश्वरसाधनपरत्वेन व्यवस्थाप्यते। तथाहि—'अयं चेश्वरप्रतिषेध एकदेशिनां प्रौढवादे-

---

१. *सांख्यसूत्रम् ५/१०-१२*

२. *न्यायसिद्धान्तमुक्तावली -दीनकरी - पृ० १८*

नैवेति प्रागेव प्रतिपादितम्, अन्यथा हीश्वराभावादित्येवोच्येत'[१] इति। अस्यायमाशयः - नैभिः सूत्रैरीश्वरखण्डने सूत्रकाराभिप्रायः। यद्येवं स्यात् तदेश्वराभावादित्येवं सूत्रयेत्, न तु ईश्वरासिद्धेरित्याकारकं सूत्रं रचयेत्। तस्मान्महर्षिणा ईश्वरस्य प्रत्यक्षगम्यत्वमेव निषेधितम्, नेश्वराभावः साधित इति। एवमुदयवीरशास्त्रिमहाभागाः सांख्यसूत्रेषु महर्षिणा कपिलेन जगदुपादानभूतस्यैवेश्वरस्याऽसिद्धिः कृताः, न तु सर्वथा ईश्वरासिद्धिरिति प्रतिपादयन्ति। अत एव 'ईश्वरासिद्धेः' इत्यादिसूत्रदिशा परमेश्वरस्य जगदुपादानत्वं प्रतिषिध्य 'तत्सन्निधानादधिष्ठातृत्वं मणिवत्'[२] इति प्रकरणोपसंहारसूत्रेण कपिलश्चेतनस्य सर्वजगन्नियन्तुः परमेश्वरस्यैव जगदधिष्ठातृत्वं प्रत्यष्ठापयदिति। सांख्यकारिकाव्याख्याने 'अधिष्ठानात्' इति हेतुं विवृण्वन् माठरः 'ततः पश्यामोऽसौ परमात्मा अस्ति पुरूषो येनाधिष्ठितं महदहङ्कारतन्मात्रेन्द्रियभूतान्युत्पादयति'[३] इत्युपपादयत्। अस्यैव हेतुपदस्य व्याख्याने माठरगौडपादावुभावपि पञ्चशिखसूत्रमेकमुद्धरतः 'पुरुषधिष्ठितं प्रधानं प्रवर्तते' इति। पुरुषपदं हि सांख्यनये पारिभाषिकं चेतनमात्रपरम्। चेतनो जीवात्मा मूलप्रकृतेरधिष्ठाता भवितुं नार्हति। अतः चेतनाधिष्ठितप्रधानस्य प्रवृत्तिं व्याचक्षाणः पञ्चशिखः सकलजगदधिष्ठातारं परमात्मानमेवोपपादयति।

वस्तुतस्तु द्विविधा हि सांख्यविचारधारा प्रवहन्ती दृश्यते - सेश्वर-सांख्यधारा, निरीश्वरसांख्यधारा चेति। अत्र सेश्वरसांख्यानामपीश्वरो न

---

१. *सांख्यसूत्रम् १/९२ प्रवचनभाष्यम्*

२. *सांख्यसूत्रम् १/९६*

३. *सांख्यकारिका १७, पृ० ८५ (माठरवृत्तिः)*

नैयायिकाभिमतेश्वर इव नित्यसर्वज्ञत्वादिगुणयुक्तः, न वा प्रपञ्चकर्तृत्वसामर्थ्यवान् किन्तु प्रकृतिप्रतिबिम्बितत्वात् पुरुषः सर्ववित्त्वसर्वकर्तृत्वाभिमानवान्। एतादृशाऽभिमानयुक्तः पुरुष एवेश्वरः। तदुक्तं वृत्तिकारेण - 'यद्यस्मादभिमत आत्मरा ईश्वरः भवतु , न्यायाभिमते च प्रमाणं नास्ति'[१] इति। सांख्यानाञ्चात्रायं सिद्धान्तः - प्रकृतिश्चेतनाऽपि सती जगदिदं प्रसूते यथा च वत्सविवृद्ध्यर्थं क्षीरं प्रवर्तते तथैव प्रकृतिरपि पुरुषविमोक्षार्थं प्रवर्तते। प्रकृतिर्जडा पुरुषश्चेतनस्तयोः पंग्वन्धवत्संयोगः भवति तस्माच्च संयोगात् सर्गः भवति। अतो जगत्सर्जकतयाऽपि नेश्वरसिद्धिः। एवञ्च 'नेश्वराधिष्ठिते फलसम्पत्तिः कर्मणा तत्सिद्धेः'[२] इत्यारभ्यैकादशभिः सूत्रैरत्रापीश्वरास्तित्वं खण्ड्यते। अनया रीत्या सांख्यसूत्रानुसारमीश्वरस्यास्तित्वं नैव स्वीकर्तुं शक्यते। अत एव सर्वसिद्धान्तसंग्रहे शङ्कराचार्यैः कपिलप्रणीतस्य सांख्यशास्त्रस्य निरीश्वरत्वं स्फुटं प्रतिपाद्यते। अन्यैरपि पार्थसारथिमिश्रादिभिः विद्वद्भिःसांख्यस्य निरीश्वरत्वमेव स्वीक्रियते।[३] तथा सत्येव 'कपिलो निरीश्वरवादी' इति बहोः कालात् प्रचलितः प्रवादोऽपि साधु संगच्छते। तथा च साधकप्रमाणाभावात् नेश्वरसिद्धिरिति सांख्यराद्धान्तः।

## ईश्वरसाधकप्रमाणम्

ईश्वरसाधकप्रमाणोपन्यासससमये प्रायः दार्शनिकाः शास्त्रस्यैव

१. सांख्यसूत्रम् अ०वृ० ३/५७

२. सांख्यसूत्रम् ५/२

३. शास्त्रदीपिका पृ० ३२० - द्रष्टव्यम्

प्रामाण्यमस्ति परमेश्वरसाधनाय इति प्रतिपादयन्ति। परन्तु शास्त्रस्य प्रामाण्यं तदैव सम्भवति यदा तत्र आप्तोच्चरितत्वं स्यात्। तदुक्तं महर्षिकणादेन 'तद्वचनादाम्नायस्य प्रामाण्यम्'[१] इति। अतोऽत्र न्यायदर्शनं नवीनां सरणि-मुपस्थाप्याऽनुमानस्यापि परमेश्वरास्तित्वे प्रमाणतयोल्लेखं करोति। पूर्वाचार्येण महर्षिगौतमेनापीश्वरसाधकमनुमानं प्रदर्शितम्। भाष्यकारादयोरपि तमेव मार्गमनुसृतवन्तः। अतएव न्यायकुसुमाञ्जलौ बहून्यनुमानानि प्रस्तूयते। तानीश्वरसाधकानुमानान्यत्र विविच्यन्ते।

## महर्षिगौतमानुसारमीश्वरसाधकप्रमाणम्

तत्र परमकारुणिकमहर्षिरक्षपाद ईश्वरसाधनाय 'ईश्वरः कारणम् पुरुषकर्माफल्यदर्शनात्' 'न पुरुषकर्माभावे फलानिष्पत्तेः' 'तत्कारित-त्वादहेतुः'[२] इति त्रिभिः सूत्रैः कारणत्वेनेश्वरं साधयति। तत्र प्रथमसूत्रेण पुरुषकर्मणां सत्यपि प्रयासविशेषे वैफल्यदर्शनात् परमेश्वरोऽपि कारणम्। यदा स भगवाननुगृह्णाति तदा पुरुषकर्म फलं जनयति, यदा च नानुगृह्णाति तदा कृतेऽपि कर्मणि फलं न प्राप्यतेऽतः पुरुषोऽयं समीहमानो नावश्यं कर्मफलमाप्नोति, किन्तु कदाचित् सफलतां कदाचिच्चासफलतां प्राप्नोत्यतोऽनुमीयते यत् पुरुषस्य कर्मफलाराधनं पराधीनं यदधीनमस्ति पुरुषस्य कर्मफलाराधनं स ईश्वर इति प्रतिपादयति। अपरेण सूत्रेणाशङ्कते कर्मफलप्राप्तौ यदीश्वरः कारणं स्यात् तदा तस्य नित्यत्वेन सर्वदा वर्तमानत्वेन पुरुषकर्मणामभावेऽपि कदाचित् फलसिद्धिः स्यात्, न चैवं

---

१. वैशेषिकदर्शनम् १/१/३

२. न्यायसूत्रम् - ४/१/१९-२१

कदापि दृश्यते, अतो नेश्वरः कारणमिति। तस्या आशंकायाः समाधानाय तृतीयं सूत्रं, तस्य भावः - रागद्वेषादिरहितत्वादीश्वरः पुरुषकर्मानुसारेणैव फलं ददातीति न कर्माभावे फलसंभवः न वेश्वरस्याऽकारणत्वमितीश्वरस्य कारणत्वं सिद्धमिति। एवं 'मन्त्रायुर्वेदप्रामाण्यवच्च तत् प्रामाण्यमाप्त-प्रामाण्यात्'[१] इत्यस्मिन् सूत्रे आप्तपदेनेश्वरः सूचितः महर्षिणा। तथा चेश्वररूपाप्तोच्चरितत्वेन वेदानां प्रामाण्यमिति। यद्यपि न्यायसूत्रेषु तादृशमीश्वरविषयकं वर्णनं न प्राप्यते यादृशवर्णनं परवर्त्तिग्रन्थेषु प्राप्यते। तदानीमनपेक्षत्वादिति मन्ये। कस्यचित् कर्मनिरपेक्ष ईश्वरकारणतावादस्यैव सूत्रकारस्यानभिमतत्वात् तस्य खण्डनपुरस्सरं कर्मसापेक्षेश्वरकारणतावादस्य प्रतिपादनं कृतम्। अत एव वार्तिककाराः 'अत परं प्रावादुकानां दर्शनान्युपन्यस्य कानिचित् प्रतिषिध्यन्ते कानिचिदुपगम्यन्ते'[२] इति आहुः। तथापि सूत्रकारेण सूत्रात्मकभाषया भाष्यकारादीनां कृते बीजरोपणं तु कृतमेव। प्राचीनभारतीयपरम्परायां सूत्रभाष्यादिक्रमेणैव ग्रन्थानामशयः क्रमशः स्फुटीक्रियमाण आसीदिति। पूर्वोक्तसूत्रेण जीवकर्मफलप्रदातृत्वेन वेदप्रणेतृत्वेन चेश्वरस्य सिद्धिः महर्षिणा कृता एव। परन्त्वेतन्न ज्ञायते महर्षिगौतमः जगत्स्रष्टृत्वेनेश्वरः स्वीकरोति न वा। अत एव खद्योतकाराः - 'तथा चेश्वरः केवलं नियन्तैवेति न्यायमतं प्रतिभाति, भाष्यकारोऽप्यग्रे ईश्वरो द्रष्टा बोद्धा सर्वज्ञातेत्येवोक्तवान् न पुनः कर्ता स्रष्टेति'[३] इति। तथापि न्यायसूत्रेषु अदृष्टाधिष्ठातृत्वेन वेदप्रणेतृत्वेन चेश्वरसिद्धिरिति तु स्पष्टमेव।

---

१. न्यायसूत्रम् २/१/६८

२. न्यायवार्तिकम् ४/१/१९

३. न्यायभाष्यखद्योतव्याख्या पृ० ६८०

## वात्स्यायनानुसारमीश्वरसाधकप्रमाणम्

भाष्यकार आचार्यवात्स्यायनः महर्षिगौतमोक्तमीश्वरसाधनमनुमोदयन् जगत्कर्तृत्वेनापि ईश्वरं साधयति। तथाहि—पुरुषोऽयं फलार्थं यतमानः स्वयत्नफलं नावश्यं प्राप्नोति तेनाऽनुमीयते 'पराधीनं पुरुषस्य कर्मफलराधनमिति, यदधीनं स ईश्वरः तस्मादीश्वरः कारणम्। अत एवेश्वरः यतमानस्य पुरुषस्य फलं सम्पादयति, यदा न संपादयति तदा पुरुषकर्माऽफलं भवति अतोऽदृष्टाधिष्ठातृत्वेनेश्वरस्य सिद्धिरिति भाष्यकाराणामाशयः।

एवञ्चेश्वरस्वरूपनिरूपणावसरे अणिमादि-अष्टविध ऐश्वर्यवान्नीश्वरः भवति इति प्रतिपादितम्। तानि अणिमा, लघिमा, गरिमा, महिमा, प्राप्तिः, प्राकाम्यं, वशित्वम्, ईशित्वञ्चेति अष्टविधैश्वर्याणि। तेषु मध्ये ईशित्वस्यार्थं कुर्वन् वाचस्पतिमिश्राः सांख्यतत्त्वकौमुद्याम् 'ईशित्वं यतो भूतभौतिकानां प्रभवस्थितिलयानामिष्टे'[१] इति प्रतिपादितवन्तः। अर्थात् भूतानां पृथिव्यादीनां भौतिकानां चाऽङ्कुरादीनां यस्मात् प्रभवः=उत्पत्तिः स्थितिः=रक्षणं लयः=विनाशो जायन्ते स एव भगवान् परमात्मा इत्यतः क्षित्यादिकर्तृत्वेनेश्वरसिद्धिः। एवञ्च वात्स्यायनेन स्पष्टतया उक्तं 'प्रत्यात्मवृत्तीन् धर्माधर्मसंचयान् पृथिव्यादीनि च भूतानि प्रवर्तयति'[२] इत्यतोऽपि जगत्कर्तृत्वेनेश्वरसिद्धिः। अयमीश्वरः आप्तकामोऽपत्यानां पितेव, दुःखतप्तजीवानां समुद्धरणाय वेदानुपदिशति। पितृवत् प्रमाणभूतः न हि

१. सांख्यतत्त्वकौमुदी - कारिका २३ व्याख्यायाम्

२. वात्स्यायनभाष्यम् ४/१/२१ पृ० ३५४

पिता पुत्रमसन्मार्गे प्रवर्तयितुमुपदिशति किन्तु सन्मार्गे प्रवर्तयितुमेवोपदिशति इति । ईश्वरसिद्धिभाष्योपसंहरणे वेदकर्तृत्वेनापि ईश्वरं साधयतिं वात्स्यायनः । अतो वात्स्यायनमते अदृष्टाधिष्ठातृत्वेन, क्षित्यादिकर्तृत्वेन, वेदप्रणेतृत्वेन, चेश्वरसिद्धिः भवति ।

## उद्योतकरानुसारमीश्वरसाधकप्रमाणम्

न्यायवार्तिककार उद्योतकर ईश्वरसाधनाय स्पष्टतोऽनुमानानि प्रदर्शितवान् । 'कः पुनरीश्वरस्य कारणत्वे न्यायः ? अयं न्यायोऽभिधीयते - प्रधानपरमाणुकर्माणि प्राक्प्रवृत्तेर्बुद्धिमत्कारणाधिष्ठितानि प्रवर्तन्ते अचेतनत्वात् वास्यादिवदिति । यथा वास्यादिः बुद्धिमता तक्ष्णा अधिष्ठितमचेतनत्वात् प्रवर्तते तथा प्रधानपरमाणुकर्माणि अचेतनानि प्रवर्तन्ते तस्मात् तान्यापि बुद्धिमत्कारणाधिष्ठितानीति' ।[१] एवं क्षित्यप्तेजोवायुमहाभूतचतुष्टयम्, स्वोचितधारणक्लेदनादिक्रियायां बुद्धिमत्कारणाधिष्ठितं सत् प्रवर्तते, उक्तमहाभूतवर्गस्याचेतनत्वात् । यद् यदचेतनं वस्तु स्वोचितक्रियायां प्रवर्तते तत् बुद्धिमत्कारणाधिष्ठितमेव प्रवर्तते यथा वास्यादिशस्त्रम् । एवमेव पृथिव्याद्यचेतनभूतसमूहः स्वोचितधारणक्रियायां बुद्धिमत्कारणाधिष्ठितं सदेव प्रवर्तते । अचेतनमहाभूतवर्गस्य यस्तावदधिष्ठाता स एव बुद्धिमत्कारणमीश्वरः । यदि चाधिष्ठातारं विना प्रधानपरमाण्वदृष्टानां प्रवृत्तिर्भवतीति स्वीक्रियते तदा 'परमाणवः प्रवर्तन्त इति सततं प्रवृत्त्या भवितव्यम्'[२] इति न्यायवर्तिककारः । अनया रीत्या प्रधानपरमाण्वदृष्टानामधिष्ठायकतयेश्वर-

---

१. *न्यायवार्तिकम्* १४५

२. ,, १४६

सिद्धिर्भवति। एवमदृष्टाधिष्ठायकत्वेनेश्वरसाधनाय अपरमप्यनुमानं प्रस्तौति 'धर्माधर्मौ बुद्धिमत्कारणाधिष्ठितौ पुरुषस्योपभोगं कुरुतः करणत्वात् वास्यादिवत्'[१] इत्यनुमानेनाऽदृष्टाधिष्ठातारमीश्वरं साधयति। एवं 'बुद्धिमत्कारणाधिष्ठितं महाभूतादिव्यक्तं सुखदुःखादिनिमित्तं भवति रूपादिमत्वात् तुर्यादिवदिति'। तथा च न्यायवार्तिके ईश्वरसाधकानि बहूनि अनुमानानि प्राप्यन्ते।

## वाचस्पतिमिश्रानुसारमीश्वरसाधकप्रमाणम्

न्यायवार्तिकटीकाकाराः वाचस्पतिमिश्रा ईश्वरसाधनाय अनुमानमेकं प्रस्तुवन्ति। 'विवादाध्यासितास्तरुमहीधरादय उपादानाभिज्ञ-कर्तृका, उत्पत्तिमत्त्वात्, अचेतनोपादानत्वाद्वा। यदुत्पत्तिमदचेतनोपादानकं वा तत्सर्वमुपादानाभिज्ञपूर्वकं यथा प्रासादादि, तथा च विवादाध्यासिता-स्तरुमहीधरादयः तस्मात्तथेति'[२] इत्यत ईश्वरं साधयन्ति। अत्र वाचस्पतिः स्पष्टयति 'त्रयो हि खलु भावा जगति भवन्ति, प्रसिद्धचेतनकर्तृकाः यथा प्रासादाट्टाल-गोपुरतोरणादयः। प्रसिद्धतद्विपर्ययाः यथा परमाण्वाकाशादयः। संदिग्धचेतनकर्तृकाः यथा तनु-तरु-महीधरादयः। तत्र प्रमेयत्वाद् वादिविप्रतिपत्तेर्वा साधकबाधकप्रमाणाभावे चेतनकर्तृत्वे संशयः। न च प्रत्यक्षानुपलब्धिमात्रमत्र बाधकं भवितुमर्हति। स्वभावविप्रकर्षिणां सतामपि प्रत्यक्षानुपलब्धेः परमाण्वादीनाम्।'[३] इत्यतः सन्दिग्धचेतनकर्तृकेषु तनुतरु-

---

१. *न्यायवार्तिकम् पृ० १४७*

२. *न्यायवार्तिकतात्पर्यटीका पृ० ९५३*

३. *तत्रैव पृ० ९५३*

महीधरेषु चेतनकर्तृकत्वं साध्यते। एतेषां चेतनकर्तृकत्वे सिद्धे सति यच्चेतनकर्तृकत्वं तनुतरुमहीधरादीनां स चेतन एवेश्वर इति भवतीश्वरसिद्धिः।

## आचार्योदयनमते ईश्वरसाधकप्रमाणम्

तत्र भवान्नाचार्योदयनो निःश्रेयसार्थमुपास्यत्वेनाभीष्टं परमात्मपदाभिधेयं भगवन्तमीश्वरं साधयितुम्। एवञ्च 'तत्साधकप्रमाणाभावात्' इति सांख्योक्तविप्रतिपत्तिं समाधातुमष्टौ हेतून्ननुमानाय प्रदर्शयति—

**कार्यायोजनधृत्यादेः पदात् प्रत्ययतः श्रुतेः।**
**वाक्यात् सङ्ख्या विशेषाच्च साध्यो विश्वविदव्ययः॥**[1] **इति।**

अत्र विश्वविदव्ययो भगवदीश्वरः साध्यः, तत्साधकाः हेतवः कार्यत्वम् (अत्र कारिकायां कार्यपदं हेतुबोधकं, कार्यस्य तादात्म्येन व्याप्यतायां विवादात् कार्यपदस्य धर्मपरतया कार्यवाचकतया कार्यत्वहेतुर्लभ्यते) आयोजनम्, धृत्यादिः, पदम्, प्रत्ययः, श्रुतिः, वाक्यम्, संख्याविशेषश्चेति। तत्रेश्वरसाधकानुमाने कार्यत्वहेतुः प्राथम्यं भजते। अतः कार्यत्वहेतुकमनुमाननिरूपणपूर्वकं जगत्कर्तृत्वेनेश्वरं साधयामि।

## जगत्कर्तृत्वेनेश्वरसिद्धिः

विविधाभिः हेतुभिरीश्वरं साधयन्त्याचार्याः। तेषु मध्ये प्रमुखाः

---

१. न्यायकुसुमाञ्जलि-कारिका ५/१

त्रयः हेतवः - अदृष्टाधिष्ठातृत्वं, वेदप्रकाशकत्वं, क्षित्यादिकर्तृत्वञ्चेति। पूर्वोक्तप्रथमद्वितीयाध्याययोः क्रमशोऽदृष्टाधिष्ठातृत्वेन वेदप्रकाशकत्वेन चेश्वरं साधितम्। अधुना क्षित्यादिकर्तृत्वेनेश्वरं साधयितुमयं प्रयोगः- 'क्षित्यादिकं सकर्तृकं कार्यत्वात् घटवत्' इति। अत्र जन्या क्षितिः **पक्षः**। पक्षतावच्छेदकन्तु न क्षितित्वम्। यतोहि क्षितित्वसामानाधिकरण्येन साध्यसिद्धेरुद्देश्यत्वे दृष्टान्ते घटादौ सकर्तृकत्वस्य साध्यंस्य सिद्धत्वेनाशंतः सिद्धसाधनापत्तेः। क्षितित्वावच्छेदेन साध्यसिद्धेरुद्देश्यत्वे तु नित्ये परमाणौ सकर्तृकत्वरूपस्य साध्यस्याऽभावात् बाधापत्तेः। न वा जन्यक्षितित्वं पक्षतावच्छेदकं, तथा सति चार्वाकमते 'जन्य' पदव्यावृत्त्यसिद्धिः, प्रत्यक्षमात्रवादिनस्तस्य मते जन्येतरक्षितेरभावात्, जन्यत्वमात्रस्य पक्षतावच्छेदकत्वौचित्येन क्षितित्वस्य व्यर्थत्वाच्च। न च तर्हि जन्यत्वमेव पक्षतावच्छेदकमस्तु इति वाच्यम्, तथा सति पक्षतावच्छेदक-हेत्वोरभेदप्रसङ्गादिति चेन्न, स्वरूपसम्बन्धविशेषरूपकार्यत्वस्यैव पक्षता-वच्छेदकत्वात्, प्रागभावप्रतियोगित्वरूपकार्यत्वस्य च हेतुत्वेन तयोर्भेद-सम्भवाज्जन्यत्वमेव पक्षतावच्छेदकमिति। अवच्छेदकावच्छेदेन साध्यसिद्धे-रुद्देश्यत्वान्नांशतः सिद्धसाधनम्। वस्तुतस्तु जन्यत्वस्य पक्षतावच्छेदकत्वे साध्यस्यापि जन्यत्वरूपत्वादुद्देश्यतावच्छेदकविधेययोरैक्यप्रसङ्गात्, क्षित्या-दीत्यत्र आदिपदेन अङ्कुरादेर्ग्रहणं, बीजादुत्पन्नस्य वृक्षप्रयोजकस्य यथाऽङ्कुरत्वं तथा परमाणुभ्यामुत्पन्नस्य द्व्यणुकस्याऽङ्कुरसाम्यात्, अङ्कुरशब्देन द्व्यणुकं लक्ष्यते। एवमादिपदेन सर्गाद्यकालीनघटः, मेघो वा ग्राह्यः। **साध्यं** सकर्तृकत्वञ्च-उपादानगोचरापरोक्षज्ञानचिकीर्षाकृतिमज्जन्यत्वम्। उपादान (समवायिकारण) गोचरापरोक्ष (प्रत्यक्ष) ज्ञानचिकीर्षा (क्षित्यादि मत्कृत्या साध्यतामितीच्छा) कृति (प्रयत्न) मज्जन्यत्वम्। घट इति दृष्टान्तः। यथा घटे उपादानं (समवायिकारणं) कपालद्वयं तद्विषयकप्रत्यक्षज्ञानचिकीर्षा-

कृत्येतत्त्रयं तद्वान् कुलालः स एव कर्ता भवति, तथा क्षित्यादेरुपादानं समवायिकारणं परमाण्वादयस्तद्विषयकप्रत्यक्षज्ञानचिकीर्षाकृतिमानेवेश्वरः कर्ता भवितुमर्हतीति स सिद्ध इत्याशयः। अत्रोपादानगोचरापरोक्ष-ज्ञानचिकीर्षाकृतिजन्यत्वमेव साध्यं पर्यवसितम्। न च तादृशकृतिजन्यत्वस्य पर्यवसितसाध्यत्वे नेश्वरसिद्धिरिति वाच्यम्। उक्तानुमानेन सर्गाद्यकालीन-क्षित्यङ्कुरादेः कृतिजन्यत्वे सिद्धे 'तादृशक्षित्यङ्कुरादिजनककृतिः द्रव्याश्रिता गुणत्वात् रूपवत्' इत्यनुमानेन तादृशकृतेः द्रव्याश्रितत्वे साधिते, 'तादृशकृतिः न पृथिव्यादिवृत्तिः चेतनगुणत्वाद् धर्मवत्' एवं 'तादृशकृतिः न जीवात्मवृत्तिः नित्यकृतित्वात्, सर्वविषयकत्वाद्वा' इत्यादिरीत्या द्रव्यान्तरस्य बाधात्, 'तादृशकृतिः जीवात्मसहितपृथिव्याद्यष्ट-द्रव्यातिरिक्तद्रव्याश्रिता जीवात्मसहितपृथिव्याद्यष्टद्रव्यानाश्रितत्वे सति द्रव्याश्रितत्वात्' इति परिशेषानुमानेनाऽस्मदादिबाधात् तादृशकृत्याश्रयतया ईश्वरसिद्धिरिति। तदुक्तमाचार्यविश्वनाथेन 'न च तत्कर्तृत्वमस्मदादीनां संभवतीत्यतस्त-कर्तृत्वेनेश्वरसिद्धिः'[१] इति।

यदि च कार्यमात्रे कृतित्वेनेवाऽन्वयव्यतिरेकाभ्यां ज्ञानत्वेनेच्छा-त्वेन च हेतुत्वं स्वीक्रियते, तदा उपादानगोचरापरोक्षज्ञानजन्यत्वम्। उपादानगोचरचिकीर्षाजन्यत्वम्, उपादानगोचरकृतिजन्यत्वं वा साध्यमस्तु। वस्तुतस्तु कृतिजन्यत्वमेव साध्यं, कृतिजन्यत्वञ्च विशेष्यतासम्बन्धावच्छि-न्न-कृतित्वावच्छिन्न-कारणतानिरूपितसमवायसम्बन्धावच्छिन्नकार्यत्वम्, यत्र परमाणौ विशेष्यतासम्बन्धेन कारणं कृतिस्तिष्ठति तत्र समवायसम्बन्धेन

---

१. न्यायसिद्धान्तमुक्तावली - पृ० २१

द्व्यणुकं कार्यं वर्तते, तथा च समवायसम्बन्धेन द्व्यणुकं प्रति विशेष्यतासम्बन्धेन कृतिः कारणमिति कार्यकारणभावो बोध्यः। तेन क्षित्यादावदृष्टद्वाराऽस्मदादिकृतिजन्यत्वस्य पक्षे सत्त्वेऽपि न सिद्धसाधनम्। अस्मदादिकृतेर्विशेष्यतासम्बन्धेन परमाणौ वृत्तित्वाभावात्। तथा च 'कार्यं विशेष्यतासम्बन्धावच्छिन्नकृतिनिष्ठजनकतानिरूपित-समवायसम्बन्धावच्छिन्नकार्यतावत् प्रागभावप्रतियोगित्वादित्यनुमानं फलितम्। ननु पक्षतावच्छेदकाक्रान्ते ध्वंसे विशेष्यतासम्बन्धावच्छिन्नकृतिनिष्ठजनकता-निरूपितसमवायसम्बन्धावच्छिन्नजन्यत्वरूपसाध्यस्याऽभावद्बाधः, ध्वंसरूप-कार्यस्य कार्यतावच्छेदकसमवायसम्बन्धेन वृत्तित्वासम्भवादिति चेन्न, सत्त्वविशिष्टजन्यत्वस्यैव ध्वंसव्यावृत्तस्य पक्षतावच्छेदकत्वोपगमात्। न च हेत्वधिकरणे ध्वंसे उक्तसाध्याभावेन व्यभिचार इति वाच्यम् सत्त्ववैशिष्ट्यस्य हेतौ विशेषणान्न कोऽपि दोषः सकर्तृकत्वसाधकानुमाने अतस्तादृशानुमानेन जगत्कर्तृत्वेन भवतीश्वरसिद्धिरिति।[१]

## जगत्सर्जकः शरीरी वाऽशरीरी वा

किं सशरीर ईश्वरः सृजति जगद् अशरीरो वेति? यथा घटादिकर्ता कुलालादिः शरीरी एव दृश्यते तथैव दृष्टानुरूपमेव जगत्कर्ता शरीरी स्यात्। तदुक्तं पूर्वपक्षरूपेण जयन्तभट्टेन -

**व्यापारवानसर्वज्ञः शरीरी क्लेशसंकुलः।**
**घटस्य यादृशः कर्ता तादृगेव भवेद् भुवः।।**

---

१. *न्यायसिद्धान्तमुक्तावली - दिनकरी - पृ० २१-२२*

**अशरीरस्य कर्तृत्वं दृश्यते नहि कस्यचित् ।।**[1]

अत ईश्वरस्यापि शरीरमभ्युपेयमित्याशङ्क्याऽत्र पूर्वपक्षी 'क्षित्यादि सकर्तृकं कार्यत्वात् घटवत्' इत्यनुमाने हेत्वाभासान्नाशंकते यत् - शरीरविशिष्टत्वे सति कृतिमत्त्वं हि कर्तृत्वं भवति। तत्रानुमाने सकर्तृकत्वं साध्यम्, तत्र विशेषणं कर्तृत्वम्, कर्तृत्वे च विशेषणं शरीरम्, तदेवमीश्वरे कर्तृत्वविशेषणस्य शरीरस्याऽभावः प्रत्यक्षात्मकः तत्प्रयुक्तश्च तद्विशिष्टकृतिमत्वाऽभावोऽपि प्रत्यक्षः, अनुमेयो वा ईश्वर अकर्ता अशरीरित्वात्यादिना। तदेवं सकर्त्तृकत्वविशेषणीभूतस्य कर्तृत्वस्य बाधे तद्विशिष्टस्य सकर्तृकत्वस्यापि बाधदोषः परिस्फुरति। एवं 'क्षितिः सकर्तृका कार्यत्वात् इत्यनुमाने सत्प्रतिपक्षोऽपि हेत्वाभासः। 'क्षितिः अकर्तृका शरीरजन्यत्वाभावात्' इति विपरीतकोटिसाधकानुमानस्य जागरूकत्वात्। एवं यो यः कर्ता स शरीरी एव यथा कुम्भादिकर्ता कुलालादिरिति व्याप्त्या कृतिशरीरित्वयोः सामानाधिकरण्यं प्रतिपादितमिति कर्त्तृत्वस्य शरीरित्वव्याप्यत्वं सिद्धम्। तथा च क्षितिः सकर्तृका इत्यत्र साध्यविशेषणीभूते कर्तृत्वे शरीरित्वसामानाधिकरण्यं नियमतः प्राप्तम्। तत्रैव पुनः कर्तृत्वे क्षित्यादौ शरीरित्वविशिष्टकर्तुः बाधात् पक्षधर्मतया अशरीरित्वसामानाधिकरण्यं सिद्ध्यति। तथा च ईश्वरस्य शरीरित्वव्याप्यकर्तृत्वेन शरीरित्वस्य, पक्षधर्मताबलेनाऽशरीरित्वस्य च प्रसक्त्या शरीरित्वाऽशरीरित्वोभयप्रसिद्धिः। एवं कर्तृत्वनिष्ठशरीरित्वव्याप्तिविशिष्टकर्तृत्वरूपसाध्याप्रसिद्धिः। एवं कर्तृत्वनिष्ठशरीरित्वव्याप्ति-

---

[1] न्यायमञ्जरी - प्रमाणप्रकरणम् पृ० १७६

भावलक्षणविरोधः। एवं 'क्षित्यादि सकर्तृकं कार्यत्वात्' इत्यनुमाने यत्र यत्र सकर्तृकत्वमुभयवादिसिद्धं घटपटादौ तत्र तत्र शरीरजन्यत्वमिति शरीरजन्यत्वस्य सकर्तृकत्व-रूपसाध्यव्यापकत्वम्, यत्र यत्र च कार्यत्वमुभयमतसिद्धं तेष्वन्यतमे पृथिव्यंकुरादौ शरीरजन्यत्वं नास्तीति शरीरजन्यत्वस्य साधनाव्यापकत्वमिति शरीरजन्यत्वमुपाधिः तस्य स्वाभाववद्वृत्तित्वसम्बन्धेन कार्यत्वहेतौ सत्त्वात् कार्यत्वहेतौः सोपाधिकत्वाद् व्याप्यत्वासिद्धिरिति कार्यत्वहेतौ पञ्चदोषाः सम्भवन्ति। अत कार्यत्वहेतुः न सकर्तृकत्वरूपसाध्यस्य साधक इति पूर्वपक्षस्याशयः।

अत्राचार्योदयनो न्यायकुसुमाञ्जलिस्वोपज्ञटीकायाम् 'अत्र ये शरीरप्रसङ्गमुद्घाटयन्ति, कस्तेषामाशयः?'[१] इति वदन् षट्पक्षा उपस्थापिताः तेषां निदर्शनपूर्वकं पूवोक्ताः दोषाः वार्यन्ते । तथाहि - क्षित्यादेः सकर्तृकत्वाङ्गीकारे ये शरीरकल्पनामाहुः तेषां किं तात्पर्यम्। किं ते ईश्वरं पक्षीकृत्य कर्तृत्वहेतुना तत्र शरीरत्वं साधयन् 'ईश्वरः शरीरी कर्तृत्वात्' इति स्वीकुर्वन्ति। किं वा ईश्वरात् शरीरव्यावृत्तेस्तस्याऽकर्तृत्वम् 'ईश्वरोऽकर्ता शरीराभावात्' इत्यतः साधयन्ति। अथवाऽस्मद्रीत्या क्षित्यादि प्रसिद्धमेव पक्षीकृत्य क्षित्यादि शरीरकर्तृकं कार्यत्वादिति। यद्वा क्षित्यादिकमकार्यं शरीराजन्यत्वादिति। अपि वा क्षित्यादिकमकर्तृकं शरीराजन्यत्वादिति साधयन्ति। आहोस्विदनुमानोपन्यासं परित्यज्यास्मदभि-प्रेतानुमानापेक्षितव्याप्तिग्रहप्रतिबन्धाय विरोधिव्याप्तिमात्रप्रदर्शने तात्पर्यम्? इत्येवं षट्पक्षा अत्र सम्भवन्ति। परन्तु न कोपि पक्षः युक्तियुक्तः। यतोहि -ईश्वरपक्षक-प्रथमद्वितीयानुमानयोरीश्वरासिद्ध्या आश्रयासिद्धिरेव। तस्य सिद्धत्वे तु धर्मिग्राहकमानेनाशरीरत्वेन कर्तृत्वेन च सिद्धतया बाधः, निरीश्वरवादिन

---

१. *न्यायकुसुमाञ्जलि-कारिका ५/२ (स्वोपज्ञः)*

ईश्वरस्वीकारे अपसिद्धान्तश्च। 'क्षित्यादिकं शरीरिकर्तृकं कार्यत्वात्' इति तृतीयपक्षे यदि 'यत्र कार्यत्वं तत्र शरीरिकृतत्वम्' इति व्याप्त्या क्षित्यादौ शरीरकृतकत्वसाधनेऽपि प्रकृतसाध्यस्य सकर्तृकत्वस्य शरीरकर्तृकत्व-विरुद्धत्वे किल प्रकृतसाध्यविरोधिता प्रकृतहेतौ स्यात्। किन्तु क्षित्यादौ शरीरिकर्तृकत्वसाधनेऽपि अशरीरिकर्तृकत्वस्य न निरासः। वस्तुतस्तु अङ्कुरादौ साध्यस्य शरीरिकर्तृकत्वस्याभावेऽपि हेतोः कार्यत्वस्य सत्त्वात् व्यभिचारेण कार्यत्वशरीरिकर्तृकत्वयोर्व्याप्त्यभावेन कार्यत्वहेतुना शरीरिकर्तृकत्वानुमानासम्भवान्न विरोधप्रसङ्गः। 'क्षित्यादिकमकार्यं शरीराजन्यत्वात्' इति चतुर्थपक्षे क्षित्यादावकार्यत्वस्य प्रत्यक्षबाधः, अङ्कुरादौ शरीरजन्यत्वहेतुसत्त्वेऽपि साध्यस्याऽकार्यत्वस्याऽसत्त्वाद् हेतोर्व्यभि-चारित्वम्। 'क्षित्यादिकमकर्तृकं शरीराजन्यत्वात्' इति पञ्चमपक्षे अजन्य-त्वमात्रस्य हेतुत्वेन सम्यक्त्वात् शरीरेति विशेषणं व्यर्थम्, 'वह्निमान् नीलधूमात्' इत्यत्र नीलधूमादेरिव व्यर्थविशेषणघटितत्वेन व्याप्यत्वा-सिद्धिः, विशेषणपरित्यागे च स्वरूपासिद्धिः। षष्ठेऽपि पक्षे विपरीतव्याप्तिप्रदर्शनं किं विपरीतानुमित्युत्पादरूपबाधाय किं वा प्रकृत-व्याप्तिकार्यानुमितिनिरोधनेन सत्प्रतिपक्षत्वमात्राय? तदुभयमपि न संभवति। 'क्षित्यादि सकर्तृकं कार्यत्वात्' इत्यस्मदीयानुमानौपयिक-व्याप्तिविशिष्टकार्यत्वहेतोः पक्षधर्मतापरिग्रहरूपविशेषसत्वेन बलवत्त्वात्। हेतोः कार्यत्वस्य क्षित्यादौ पक्षे वृत्तित्वात्। तथा च षट्स्वपि पक्षेषु न कोऽपि पक्षः समीचीनोऽतो न पूर्वोक्तदोषाः। यतोहि -'क्षित्यादि सकर्तृकं कार्यत्वात्' इत्यत्र कार्यत्वहेतोरीश्वररूपधर्मिसिद्ध्यर्थमुपजीव्यत्वात्, ईश्वर-स्यैवासिद्धौ कर्तृत्वव्यापकशरीरित्वानुपलब्धिप्रयोज्यः कर्तृत्वाभावरूपो बाधो नास्ति। एवं बाधकत्वेनाऽभिमतस्याऽनुमानस्य 'ईश्वरो न कर्ता अशरीरि-त्वात्' इत्यनुमास्य यः विषयः कर्तृत्वाभावः, तस्याधिकरणमीश्वरः, स च न

कार्यत्वहेतुकानुमानमन्तरेण प्रमितः, न चाऽप्रमितस्य सत्त्वनिर्णयः, न चासतोऽभावानुयोगित्वम् **'व्यावर्त्त्याभाववत्तैव भाविकी हि विशेष्यता'** इत्युक्तेः, तज्ज्ञानं विना च बाधकानुमानविषयीभूतकर्तृत्वाभावज्ञानस्याऽसम्भव इति बाधकानुमानं हि स्वविषयप्रसिद्ध्यर्थं पूर्वं स्वविषयधर्मिण ईश्वरस्य साधकं कार्यत्वहेतुकानुमानमपेक्षते। तस्य कार्यत्वहेतुकानुमानस्याप्रामाण्यावधारणे च पुनस्तत्रैवावलम्बितो वेताल इति पूर्वमेव कार्यत्वहेतुकानुमितिप्रामाण्यनिर्णये तदनुमानविषयीभूतस्याऽशरीरस्य सकर्तृत्वस्यैवेश्वरस्य सिद्धौ पश्चात् प्रवृत्तम् 'ईश्वरो न कर्त्ता अशरीरित्वात्' इत्यनुमानं दुर्बलमिति कुतोऽस्य बाधकत्वसम्भावना। एवं सत्प्रतिपक्षदोषोऽपि नास्ति 'क्षित्यादिकं न सकर्तृकं शरीराजन्यत्वात्' इति प्रतिपक्षानुमानहेतुघटकशरीरांशस्य वैयर्थ्यात्, अस्य हेतोर्व्यर्थविशेषणघटितत्वेन व्याप्यत्वासिद्धतया दुर्बलत्वादिति। एवं 'क्षितिः सकर्तृका कार्यत्वात्' इत्यनुमाने 'यत्र यत्र कर्तृत्वं तत्र तत्र शरीरित्वम्' इति व्याप्तिर्न विरोधिनी। कार्यत्वहेतोः व्याप्तिपक्षधर्मताविशिष्टत्वेन बलवत्त्वात् तदधीनानुमितौ विरोधिव्याप्तिग्रहो न प्रतिबन्धकः। एवं 'क्षितिः सकर्तृका कार्यत्वात्' इत्यनुमानेन यदि पक्षधर्मतया अशरीर्येव कर्ता सिद्धस्तदा वायुजन्यक्रियादौ कार्यत्वहेतौ सत्यपि शरीरिकर्तृत्वस्याभावाद् व्यभिचारात्, कार्यत्वहेतौ शरीरिकर्तृकत्वनिरूपितशरीरिकर्तृकत्वसिद्धिरिति न विरोधः। अथ यदि तत्र व्याप्तेरभावात् तत्र न शरीरिकर्तृकत्वसिद्धिरिति न विरोधः। अथ यदि तत्र व्याप्तिपक्षधर्मतया अशरीरिणः कर्तुर्न सिद्धस्तर्हि शरीरित्वाशरीरित्वयोर्व्याप्तिपक्षधर्मतयोरुपनेययोः ईश्वरात्मकैकधर्मिवृत्तित्वाभावलक्षणो यो विरोधः स नास्ति ईश्वररूपधर्मिण एवाऽग्रहात्। एवं शरीरजन्यत्वरूपोपाधिना या असिद्धिः व्याप्यत्वासिद्धिः प्रतिपादिता सा नास्ति। यतः सा व्याप्यत्वासिद्धिरनिबन्धना निर्बीजा। अनुकूलतर्काभावादिव्याप्यत्वासिद्धेर्बीजं न च तदिहाऽस्ति 'कृतिसत्त्वे कार्यसत्त्वं, कृत्यभावे कार्याभावः' इत्यन्वयव्यति-

रेकाभ्यां कार्यमात्रं प्रति कृतेरेव हेतुत्वसिद्धौ, कार्यत्वेन कृतित्वेन कार्यकारणभावस्य ईश्वरावेदकस्यानुकूलतर्कस्य सद्भावात्। एवं चानुकूलतर्केण कार्यत्वहेतोः सकर्तृकत्वरूपसाध्यव्याप्यत्वे सिद्धे शरीरजन्यत्वरूपोपाधौ हेतोरव्यापकत्वेन साध्याव्यापकस्यानुमेयत्वात्, शरीरजन्यत्वस्य साध्यव्यापकत्वाभावात्, साध्यव्यापकत्वे सति साधना-व्यापकत्वरूपोपाधित्वं न सम्भवति। तथा च कुतो व्याप्यत्वासिद्धिरिति। तदाहुः श्रीमदाचार्याः—

**न बाधोस्योपजीव्यत्वात्, प्रतिबन्धो न दुर्बलैः ।**

**सिद्ध्यसिद्ध्योर्विरोधो न नाऽसिद्धिरनिबन्धना ।।[१] इति ।**

अतः सर्वविधदोषेण निर्दुष्टोऽयं कार्यत्वहेतुः सकर्तृकत्वं क्षित्यादौ साधयति। न च तत्कर्तृत्वमस्मदादीनां सम्भवत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिरिति।

ननु 'क्षित्यादिकं यदि सकर्तृकं स्यात् तदा शरीरजन्यं स्यात् एवं 'क्षित्यादिकं यदि बुद्धिमत्पूर्वकं स्यात् तदाऽनित्यप्रयत्नजन्यं स्यात्। एवं 'क्षित्यादिकं यदि नित्यप्रयत्नजन्यं स्यात् तदा बुद्धीच्छाजन्यं न स्यात्। एवं 'ईश्वरो यदि कर्ता स्यात् तदा शरीरवान् स्यात्'। एवं 'ईश्वरो यदि कर्ता स्यात्, तदा सुखी दुःखी च स्यात्' इत्यादीनां प्रतिकूलतर्काणां सत्त्वादनुकूलतर्काऽभावाच्च 'क्षितिः सकर्तृका कार्यत्वात्' इत्यनुमानेनेश्वरस्य सत्ता प्रतिपादयितुं न शक्यते इति चेन्न, तादृशप्रतिकूलतर्काणामा-भासत्त्वात्। यतोहि प्रतिकूलतर्काणां विषय ईश्वर स यदि असिद्धस्तर्हि तथाविधतर्काणां निर्विषयत्वेनाऽप्रामाण्यमिति ते तर्काभासाः, यदि च

---

१. न्यायकुसुमाञ्जलि-कारिका ५/२

सिद्धस्तर्हि अशरीरस्यैव क्षित्यादिकृतिमत्तया सिद्धिरिति एवम्विधतर्काणां साध्यस्य कर्तृत्वाभावस्य बाध इति उभयथापि इमे तर्काभासा एवेति। ननु तथाप्यनुकूलतर्काभावे कार्यत्वसकर्तृकत्वयोर्व्यभिचारसंशयान्नेश्वरसिद्धिरिति चेन्न, यदीश्वरः क्षित्यादिकर्ता न स्यात् तदा क्षित्यादिकार्यं नोत्पद्येतैव, कारणं विना कार्याऽभावात्, अस्ति च कार्यं प्रत्यक्षसिद्धमिति अनुकूलतर्केण क्षित्यादिकर्तुरीश्वरस्य सिद्धिः निराबाधा इति। तदुक्तमाचार्येण—

**तर्काऽभासतयाऽन्येषां, तर्काशुद्धिरदूषणम्।**
**अनुकूलस्तु तर्कोऽत्र कार्यलोपो विभूषणम्।।**[१] **इति।**

एतावत् पर्यन्तं पूर्वपक्षिणा दत्तदोषस्य वारणं कृतम्। अत्रेश्वरः शरीर्यशरीरी वेति विषये नैयायिकसिद्धान्तोऽयम्-सांसारिकजीवानां नहि साक्षात्कारणत्वं सम्भवति। अतः घटादिकं प्रति कुलालादेः सशरीरस्यैव कारणता। परन्तु न हि शरीरी कुलालोऽपि ज्ञानेच्छाकृतिसमधानं विना घटादिकं जनयितुं योग्यतामावहति। अतः कृत्यादिकस्यैव कारणता सर्वत्राभ्युपेया न तु शरीरस्यान्यथासिद्धत्वात्। अत एव न्याय-सिद्धान्ततत्त्वामृते 'कृत्यादिकं विना शरीरस्य जनकत्वासम्भवात् कृत्यादिकमेव सर्वत्र कारणम्, न तु शरीरमपि गौरवात्। तथा च तस्य क्वचित् साक्षात्कारणत्वबाधेन शरीरद्वारा कल्प्यते, ईश्वरस्य तु शक्तत्वात् सर्वविषयकत्वाच्च स्वत एव जनकत्वसम्भवेन शरीरकल्पनमप्रामाणिकमेव'[२] इति। एवं भोगायतनस्यैव शरीरत्वं स्वीक्रियते। 'यदि हीश्वरस्य भोगो भवेत्

---

१. *न्यायकुसुमाञ्जलि-कारिका ५/३*

२. *न्यायसिद्धान्ततत्त्वामृतम् पृ० २९*

तदा भोगायतनतया शरीरमिष्येत। न चास्य भोगोऽस्ति'[१] अतो नाङ्गीकरणीयं परमेश्वरस्य शरीरम्। एवं चेतनाधिष्ठितं शरीरं मल-मूत्र-भ्रम-प्रमाद-विप्रलिप्सादिभिर्दोषैः कामक्रोधादिभिश्च सम्बन्धितमवश्यं भवति। तथा सति शरीरस्वीकारे ईश्वरस्य सर्वदोषप्रसक्तावीश्वरत्वं भज्येत।[२] एवमीश्वरशरीर-स्वीकारे किं तदीयं शरीरं निरवयवं सावयवं वा ? यदि निरवयवं तदा तस्य भोगायतनत्वचेष्टाश्रयत्वविरहात् शरीरत्वं न सम्भवति। यदि सावयवं तदाऽनित्यत्वेन तस्य कर्ता कः ?[३] यदि स्वयमेव स्वशरीरं निर्मिमीते, तदा साहसमात्रमिदं निर्युक्तिकत्वाच्चाश्रद्धेयम्। यदि अन्य ईश्वर ईश्वरशरीरं निर्मिमीते तर्हि परमेश्वरानन्यमापतति। तदुक्तं जयन्तभट्टेन—

**स्वयं निजशरीरस्य निर्माणमिति साहसम्।**
**कर्त्रन्तरकृते तस्मिन्नीश्वरानन्त्यमापतेत् ।।**

भवतु को दोष इति चेत् प्रमाणाभाव एव दोषः, एकस्यापि तावदीश्वरस्य साधने पर्याकुलतां गताः किं पुनरनन्तानाम्'[४] इति। अत एव प्रायः नैयायिकाः 'तत्राऽशरीरस्यैव स्रष्टृत्वमस्याभ्युपगच्छामः'[५] इति वदन्ति।

परन्तु उदयनाचार्यास्तु परमाणूनामेवेश्वरशरीरं स्वीकुर्वन्ति। परमाणूनामीश्वरशरीरत्वं केवलं साक्षाच्चेतनाधिष्ठितत्वादेव। न हि परमाणूनां भोगायतनत्वं विद्यते नवेन्द्रियाश्रयत्वमस्ति।[१] अत एव

---

१. *न्यायालङ्कारः पृ० १३८*

२. *न्यायसिद्धान्ततत्त्वामृतम् पृ० २९*

३. *तत्रैव*

४. *न्यायमञ्जरी पृ० १७६*

५. ,, *पृ० १८५*

दिनकर्याम् आचार्यमतानुयायिनस्तु परमाणूनामेव तच्छरीरत्वोपगमात्। एवं चेश्वरकृतिजन्यचेष्टावद्भिः परमाणुरूपशरीरैरेव तत्तत्कार्याणामुत्पत्तिः। परमाणुक्रियायां चेष्टात्वरूपवैजात्याङ्गीकारात्, शरीरलक्षणेऽन्त्यावयवित्वस्याऽनिवेशाच्च न परमाणूनां शरीरत्वाऽनुपपत्तिः। न च नानापरमाणूनां शरीरत्वकल्पने गौरवाल्लाघवेन तस्याऽतिरिक्तत्वसिद्धिरिति वाच्यम्, तच्छरीरस्य महत्त्वेऽभग्नस्य तस्य पाषाणादौ प्रवेशासम्भवेन पाषाणान्तर्वर्तिभेकशरीरोत्पादकतानुपपत्तेः। अणुत्वे च दूरस्थकार्योत्पादकत्वानुपपत्तेः'[२] अतः परमाणूनामेवेश्वरशरीरत्वं स्वीकार्यमिति आचार्याणामाशयः।

## जगत्सर्जनप्रयोजनम्

ईश्वरः जगत्कर्ता विद्यते नैयायिकमते तर्हि 'प्रयोजनमनुद्दिश्य मन्दोऽपि न प्रवर्तते' इति रीत्या सर्वेऽपि किञ्चित् प्रयोजनमधिकृत्यैव प्रवतन्ते। नहि बीजप्रयोजनाभ्यां विना कस्यचित् प्रवृत्तिः संभवति, अत एव श्रुतिरपि निषेधति 'न कुर्यान्निष्फलं कर्म' इति। अतो जगत्सर्जकस्यापि किमपि प्रयोजनं भवितव्यम्। किञ्चास्य जगन्निर्मातुः प्रयोजनमित्याशङ्कायाः समाधानाय दार्शनिका अनेकानि मतानि उपस्थापयन्ति। तथा चाहुः गौडपादाचार्याः—

**भोगार्थं सृष्टिरित्यन्ये क्रीडार्थमिति चापरे।**

---

१. *न्यायकुसुमाञ्जलि - स्वोपज्ञः पृ० ६१३ (हिन्दी व्याख्या)*

२. *न्यायसिद्धान्तमुक्तावली - दिनकरी - पृ० २७-२८*

देवस्यैष स्वभावोऽयमाप्तकामस्य का स्पृहा ।।[१] इति।

न्यायवार्तिककारोद्योतकराचार्या अपि अनेकान् विचारान् समुपस्थापयन्ति। तत्र किं क्रीडार्थं सृजति, वैश्वरूपख्यापनाय (स्वविभूतिख्यापनाय) सृजति, स्वाभाव्याद् वा सृजतीति। तेषु मध्ये क्रीडार्थं सृष्टिरिति न, तदुक्तम् - 'नन्वेतदयुक्तं क्रीडा हि नाम रत्यर्थं भवति क्रीडया रतिमविन्दताम्, न च रत्यर्थी भगवान् दुःखाभावादिति। दुःखिनश्च सुखोपभोगार्थं क्रीडन्ति'। अतः क्रीडार्थं सृजतीति समाधानं नैव रोचते। वैश्वरूप्यख्यापनमपि न साधु, न हि विभूतिख्यापनेन कश्चिदतिशयो लभ्यते न चास्याख्यापनेन किञ्चिद्धीयत इति। किमर्थं तर्हि करोति ? तत्स्वाभाव्यात् प्रवर्तत इत्यदुष्टम् - यथा भूम्यादीनि धारणादिक्रियां तत्स्वाभाव्यात् कुर्वन्ति तथेश्वरोऽपि तत्स्वाभाव्यात् प्रवर्तत इति प्रवृत्तिस्वभावकं तत्तत्त्वमिति।[२]

वाचस्पतिमिश्रः तात्पर्यटीकायां 'प्रयोजनं विना न प्रेक्षत्वां प्रवृत्तिः। न च प्राप्तसकलप्राप्तव्यस्याऽस्ति प्रापणीयं किञ्चिदीश्वरस्य। तस्मात् कृतमस्य जगन्निर्माणेन ? अत्रोत्तररूपेणाह-परानुग्रहार्थं करुणया जगन्निर्माणे प्रवर्त्स्यतीति। यदि कारुण्यादीश्वरो जगन्निर्माणे प्रवर्तते-हन्त भोः सुखिनमेव सृजेन्न दुःखिनमिति चेत् - अयमीश्वरः प्राणिनां धर्माधर्मसहकारेणैव जगदिदं सृजति न तु स्वातन्त्रेणातो जगति सुखदुःखवैचित्र्यं दृश्यते। यद्यपि भगवतोऽस्य स्वाभाविकः परानुग्रहः तथापि कर्मविपाकानुरूपं जगद्वैचित्र्यमिदं विदधाति।[३]

---

१. *माण्डूक्यकारिका - १/९*

२. *न्यायवार्तिकम् - पृ० ९४९-९४५*

३. *न्यायवार्तिकतात्पर्यटीका पृ० ९४५-९५०*

आचार्योदयन आत्मतत्त्वविवेके 'स्वार्थं प्रवृत्तावनीश्वरत्वप्रसङ्गः। परार्थप्रवृत्तावदुःखमयसर्गप्रसङ्गः।' यदि च स्वार्थं परार्थं विनैव प्रवर्तते तर्हि कीदृशमस्य चैतन्यं यदयं प्रयोजनं विनैव प्रवर्तते इति वितर्क्य अनन्तरं सिद्धान्तयति यदयं परमेश्वरः करुणयैव जगत् सर्जने प्रवर्तते। सृष्टेः दुःखमयत्वात् कारुण्यस्यापवादो नैव कर्तुं शक्यते। जनको बालकं सत्कर्मणि नियोजनार्थं ताडयति, अध्यापकश्चाऽध्ययनाय शिष्यं दण्डयति, चिकित्सकश्च रोगिणः शल्यक्रियां करोति। एतैश्च दुःखं विधीयते किं दुःखसर्जनात् जनकादीनां कारुण्यं हीयते ? अतः जनकादिषु व्यभिचारात् दुःखमयसृष्ट्या कारुण्यं नास्तीश्वरस्यैवं खण्डनं नैव युज्यते। तदुक्तम् 'परार्थं च प्रवृत्तिः स्वार्थाऽभावात्। न च दुःखसृष्ट्या कारुण्यापवादः, जनकाध्यापकचिकित्सकादिषु व्यभिचारात्'[1] । अर्थाद् यथा जनकः हितबुद्ध्यैव यदयं मदीयो बालः सत्कर्मणि प्रयुक्तः सन् सुखमाप्स्यतीति दुःखं सर्जयति तथैव परमेश्वरोऽपि जीवानां हितबुद्ध्यैव यदिमे जीवाः पूर्वकृतशुभाशुभकर्मफलोपभोगेनादृष्टक्षयद्वारा तत्त्वज्ञानमवाप्यापवर्गपूरद्वारप्रवेशं प्राप्नुवन्तु इति दुःखमयमपि जगत् सृजतीति। तथा च कारुण्यादेव सृजति भगवान् जगदिदम्। यद्यप्याचार्योक्तः—

**कारं कारमलौकिकाद् भूतमयं मायावशात् संहरन्।**
**हारं हारमपीन्द्रजालमिव यः कुर्वन् जगत् क्रीडति।।**[2]

इति कारिकातः प्रतिभाति यदुदयनाचार्यः क्रीडार्थामिमां सृष्टिं मनुते। तथापि

---

१. *आत्मतत्त्वविवेकः पृ० ४२१-४२२*

२. *न्यायकुसुमाञ्जलि-कारिका २/४*

आचार्येण कारुण्यात् सृष्टिस्वीकारात् .... कुर्वन् जगत् क्रीडति इत्यनेन परिश्रमं विनैव जगदिदं सृजति भगवान्नित्येव द्योत्यते इति मन्ये।

जयन्तभट्टेन प्रश्नोत्तरमुखेन कारुण्यात् सृष्टिः प्रतिपाद्यते।[1] भासर्वज्ञेन त्रयः पक्षा उपस्थाप्यन्ते। स्वभावत एव सृजति, करुणया, विश्वसृष्टिरेव वा स्वार्थः परमेश्वरस्य। नूतनमत्र तृतीयो पक्षः। अयमाशयो भासर्वज्ञस्य यद्ययमीश्वरः स्वार्थमपि विश्वसर्जने प्रवर्तत इति स्वीक्रियते नात्रापि कश्चन दोषः। स्वार्थश्च परमेश्वरस्य विश्वसृष्टिरेव। तदुक्तम् 'अथवा स्वार्थमेव प्रवर्तते । किं तद्भगवतः प्रयोजनमिति चेत्? जगदुत्पत्तिरेव। कथमिति चेत्? सुखप्राप्तिदुःखाभावावपि कथं प्रयोजनमिति ? यदि तदर्थं पुरुषस्य प्रवृत्तत्वादिष्टत्वाच्च, तदा भगवतोऽपि जगदुत्पत्यर्थं प्रवृत्तत्वादिष्टत्वाच्च तदेव प्रयोजनम्'[2] इति। तदपि न साधुतामर्हति। यतोहि कस्या अपि स्वार्थं प्रवृत्तेः एकं मुख्यं प्रयोजनं भवति, अपरञ्च गौणमिति। तथा चाह 'अत्र च निरुपाधीच्छाविषयत्वात् सुखदुःखभावयोर्मुख्यं प्रयोजनत्वं तदुपायस्य तु तदिच्छाधीनेच्छाविषयत्वाद् गौणं प्रयोजनत्वमिति।'[3] अतो यदीश्वरः स्वार्थं प्रवर्तते तर्हि तस्यापि प्रवृत्तेः सुख-प्राप्तिदुःखपरिहारावेव प्रयोजनं भवितुं शक्नुतः। तच्च नैव सम्भवति परमेश्वरस्य सुखदुःखाभावात्। तथा च विकल्पितेषु क्रीडार्थं, स्वाभाव्यात्, जगदुत्पत्त्यात्मकं स्वार्थमधिकृत्य सृजतीत्यत्र स्वाभाविककारुण्यात् सृजति जगदीश्वर इति सिद्धम्।

---

१. न्यायमञ्जरी पृ० १७६

२. न्यायभूषणम् पृ० ४५९

३. न्यायसूत्रम् १/१/२४ विश्वनाथवृत्तिः

एवं सांख्यमीमांसकादीनां निरीश्वरत्वकल्पनमागमविरोधाद् दुर्बलम्। तथा च श्रुतिः—

**विश्वतश्चक्षुरुत विश्वतोमुखो विश्वतोबाहुरुत विश्वतस्पात्।**
**सं बाहुभ्यां धमति सम्पतत्रैर्द्यावाभूमी जनयन् देव एकः ।।[1] इति ।**

तदर्थश्च - विश्वतश्चक्षुः सर्वविषयकज्ञानवान्। अत्र चक्षुषा ज्ञानस्योपलक्षणात्। कार्ये कारणोपचारात्। विश्वतोमुखः विश्वार्थोपदेष्टा सहस्रशाखवेदप्रणेता, अत्र मुखेन वागुपलक्षणात्। विश्वतो बाहुः सर्वकारणसहकारी, अत्र बाहुः सहकारित्वोपलक्षणम्। विश्वतस्पात् विश्वव्यापकः, अत्र पादिति व्याप्तेरुपलक्षणम्। सं बाहुभ्यां धर्माधर्मलक्षणप्रधानकारणत्वं, तौ हि लोकयात्रावहनाद् बाहू। पतत्रैः परमाणुभिः द्यावाभूमीजनयति सन्धमति संयोजयति वा। तादृशद्यावाभूमीजनकः देव एक एवेति। 'अचक्षुः.....' इत्यादिश्रुत्या चक्षुषादिपदस्य ज्ञानादिरर्थः। तथा चोक्तश्रुत्याऽदृष्टाधिष्ठातृत्वेन, वेदप्रणेतृत्वेन,जगत्कर्तृत्वेन चेश्वरसिद्धिः। यथा श्रुतिस्तथा 'अहं सर्वस्य प्रभवो मत्तस्सर्वं प्रवर्तते'[2] इत्यादिस्मृतिरपि सर्ववस्तूत्पत्तिप्रवृत्तिहेतुमेकं दर्शयति। ननु तथापि 'प्रकृतेः क्रियमाणानि गुणैः कर्माणि सर्वशः। अहङ्कारविमूढात्मा कर्ताहमिति मन्यते'[3] इत्यादेरीश्वरस्य कर्तृत्वाभावसाधकागमस्याऽपि सत्त्वात् कथं कर्तृत्वसाधकागमस्यैव प्रामाण्यमिति चेदत्र मनुः - आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना। यस्तर्के-

---

१. *ऋग्वेदसंहिता ८/३/१६/३*

२. *श्रीमद्भगवद्गीता १०/८*

३. *तत्रैव।*

णाऽनुसन्धत्ते स धर्मं वेद नेतरः'।[१] इति । अर्थाद् द्विविधमपि शब्दप्रमाणमुपलब्धमीश्वरे कर्तृत्वाभावसाधकं कर्तृत्वप्रतिपादकञ्च। तत्र कार्यकारणभावभङ्गप्रसङ्गात्मकतर्कानुगतस्यागमस्येश्वरे जगत्कर्तृत्वप्रतिपादनस्य स्वार्थे प्रामाण्यम्, इतरेषाञ्चोपचरितार्थत्वम्। न च द्वयोः मुख्यार्थत्वम्, परस्परविरोधात्। एतच्च 'न चासौ क्वचिदेकान्तः सत्त्वस्यापि प्रवेदनात्। निरञ्जनावबोधार्थो न च सन्नपि तत्परः' इत्यतः पूर्वमेव प्रतिपादितम्। तथा च ज़गत्कर्तृत्वेनेश्वरसिद्धौ न किमपि बाधकम्।

## आयोजनहेतुत ईश्वरसिद्धिः

आयुज्यते संयुज्यते अनेनेति व्युत्पत्त्या आङ्पूर्वकाद् युजिर्योगे इति धातोः 'करणाधिकरणयोश्च' इति सूत्रेण करणे ल्युटि कृते सति आयोजनशब्देन कर्म इति गृह्यते। तथा च 'सर्गाद्यकालीनं द्व्यणुकारम्भकपरमाणुद्वयसंयोगजनकं कर्म चेतनप्रयत्नपूर्वकं कर्मत्वादस्मदादिशरीरक्रियावत्' इत्यनुमानं फलितम्। अनेन तादृशप्रयत्नाश्रयत्वेनेश्वरसिद्धिः। ननु सर्गाद्यकालीनपरमाणुक्रियाहेतुभूतः प्रयत्नः परमाणावेवास्त्विवति चेन्न, परमाणोः स्वातन्त्र्येण प्रयत्नवत्त्वे स्वीकृते तस्य जडतायाः हानि स्यात्। तथा च परमाणोरेव प्रयत्नवत्त्वे तस्या अचैतन्यानुपपत्तिः, अचेतनस्य चेतनप्रेरितस्यैव जनकत्वात्। नन्वदृष्टादेव परमाणुद्वयसंयोगजनकं कर्म उत्पद्यतामिति चेन्न, अदृष्टमपि दृष्टकारणसहकारेणैव फलजनकं भवति। अन्यथाऽदृष्टादेव सकलकार्योत्पादे हेत्वन्तरोच्छेदापत्तेः। विलीयतां हेत्वन्तरं का हानिरित्यपि वक्तुं न शक्यते, यतोहि- हेत्वभावे फलाभाव एव दृष्टः।

---

१. मनुस्मृतिः १२/१०६

यथाऽन्वयव्यतिरेकाभ्यां घटादौ दण्डादेः कारणत्वं स्वीकृतम्, तथैव कार्यमात्रे कृतेरपि हेतुत्वग्रहात् कृत्यभावे अङ्कुरादिकार्योत्पत्तिर्न स्यात्। ननु चेष्टात्मकक्रियाविशेष एव भोक्तृप्रयत्नजन्यः स्यात् न तु क्रियामात्रमिति चेन्न, 'यद्विशेषयोः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपि कार्यकारणभावः' इति नियमेन विशेषक्रियां प्रति कार्यकारणभावे गृहीते, सामान्यतः क्रियात्वावच्छिन्ने सामान्यतः प्रयत्नत्वेन हेतुत्वग्रहः सिद्ध्यति। अन्यथा तत्तत्कारणस्य तत्तत्कार्यहेतुत्वे सामान्यतो दण्डत्वादिना घटादिकं प्रति हेतुत्वविलयापत्तेः। तदुक्तं श्रीमदाचार्येण—

**स्वातन्त्र्ये जडताहानिर्नाऽदृष्ट दृष्टघातकम्।**
**हेत्वभावे फलाभावो विशेषस्तु विशेषवान्।।**[1] इति।

ततश्च सर्गाद्यकालीनपरमाणुक्रियाहेतुभूतप्रयत्नाश्रयत्वेन भवतीश्वरसिद्धिरिति। तत्रागमसंवादोप्यस्ति—

**मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्।**
**तपाम्यहमहं वर्षं निगृह्णाम्युत्सृजामि च।।**[2]

**एवञ्च- यदा स देवो जागर्ति तदेदं चेष्टते जगत्।**
**यदा स्वपिति शान्तात्मा तदा सर्वं निमीलति।।**[3]

इत्याद्यागमेनापि सर्गाद्यकालीनद्व्यणुकोत्पादकं कर्म स्वसमान-

---

१. *न्यायकुसुमाञ्जलि-कारिका ५/४*

२. *श्रीमद्भगवद्गीता ९/१०-१९*

३. *मनुसंहिता १/५२*

कालीनप्रयत्नजन्यमिति सिद्धौ सर्गादावस्मदादीनां बाधे भवतीश्वरसिद्धिः ।

## धृतिहेतुत ईश्वरसिद्धिः

धृतिर्धारणम्, गुरुत्ववतां पतनाभावः। तथा च 'ब्रह्माण्डादि पतनप्रतिबन्धकीभूतप्रयत्नवदात्मसंयोगवत् धृतिमत्त्वात् वियति विहङ्गम-धृतकाष्ठवत्' इत्यनुमानं फलितम्। यथा प्रयत्नवद्विहङ्गमात्मसंयोगेन प्रतिबन्धात् विहङ्गमधृतकाष्ठं न पतति। तथा यस्य प्रयत्नवदात्मनः संयोगेन ब्रह्माण्डादि न पतति स ईश्वर एव नाऽन्यः। ननु लोकपालत्वेन प्रसिद्धैः प्राच्यादिदिक्पालैरिन्द्रादिभिरेव तत्तल्लोकधारणस्यागमप्रसिद्धत्वात्तेन विरोध इति चेन्न, इन्द्रादिशरीरमाविश्य सर्वमिदमीश्वर एव धारयतीत्यागम-तात्पर्यम्। ननु 'आत्मैवेदं सर्वं, सर्वं खल्विदं ब्रह्म' इत्यादीनि श्रुतिवाक्यानि सर्वतादात्म्यमीश्वरस्य प्रतिपादयन्ति। तत् कथं तस्य जगद्धारकत्वमुच्यते, धार्यधारकभावस्य भेदाश्रयत्वादिति चेत्, ज्ञानादिमता ईश्वरेण सर्वेषां साक्षात्परम्परासाधारणः संयोगसम्बन्धः आवेशस्तन्निबन्धनस्तादृशः सर्वतादात्म्यव्यवहारः। अन्यथा तादृशश्रुतिवाक्यानां सकलाभेदप्रतिपादकत्वे ईश्वरस्य जगद्भिन्नत्वेन तत्तादात्म्यस्य दुर्घटत्वाद् बाधः स्यात्। ननु जलधरभरितस्य गगनमण्डलमाश्रितस्य जलधरपटलस्य यथाऽदृष्टादेव धारणं भवति, तथा क्षित्यादिब्रह्माण्डपर्यन्तस्य जगतोऽपि अदृष्टादेव धारणोपपत्तौ किं प्रयत्नाधिष्ठानेनेति चेत्, अदृष्टं धृतेः कारणमेव, न त्वदृष्टमात्रं धृतिकारणम्। अदृष्टस्य हेतोः सद्भावेऽपि वियति विहङ्गम-शरीरधृतेः प्रयत्नान्वयव्यतिरेकानुविधायित्वात् प्रयत्नस्यापि धृतिसामान्यं प्रति लाघवेन कारणत्वावधारणात्। अदृष्टस्य दृष्टकारणताविघटक-त्वाभावस्य 'नाऽदृष्टं दृष्टघातकम्' इत्यनेन पूर्वमेवोक्तत्वात्। तथा चाऽदृष्टमपि दृष्टकारणसहकारेणैव फलजनकं भवति। अन्यथाऽदृष्टादेव

सकलकार्योत्पादे हेत्वन्तरोच्छेदापत्तेरिति। ननु काञ्चिद् धृतिं प्रत्येव प्रयत्नः कारणं, न तु धृतिसामान्यं प्रतीति चेन्न, 'यद्विशेषयाः कार्यकारणभावोऽसति बाधके तत्सामान्ययोरपि' इति नियमेन धृतिसामान्यं प्रति प्रयत्नसामान्यं कारणमिति सिद्ध्यति। ईश्वरस्य विधारकप्रयत्नेनाऽधिष्ठितं ब्रह्माण्डमित्यत्रागमप्रमाणमपि विद्यते। तथाहि - बृहदारण्यकोपनिषदि महर्षियाज्ञवल्क्यः प्रवदति 'एतस्य वा अक्षरस्य प्रशासने गार्गि द्यावापृथिव्यौ विधृते तिष्ठत..............'[१] अर्थाद् हे गार्गि, एतस्याक्षरस्य नित्यस्य प्रशासने विधारके प्रयत्ने, द्यौः स्वर्गलोकः, पृथिवी भूलोकश्च तिष्ठत इति। एवं गीतायां 'यो लोकत्रयमाविश्य बिभर्त्यव्यय ईश्वरः'[२] इति। अत्र लोकत्रयमिति पदं सर्वेषामप्युपलक्षणम्। अन्यथा अवशिष्टानामेकादशभुवनानामधार्यत्वमन्यधार्यत्वं वा स्यात्। बिभर्ति=धारयतीति।

धृत्यादेरित्यादिपदेन नाशपरिग्रहः। तथा च 'ब्रह्माण्डनाशः प्रयत्नजन्यः नाशत्वात् पाट्यमानपटनाशवत्' इत्यनुमानं फलितम्। यथा प्रयत्नवान् आत्मा देवदत्तादिः तत्संयोगेन प्रयोज्या या तन्तुक्रिया तदधीनो यो तन्तुसंयोगरूपासमवायिकारणनाशः तज्जन्यो पटनाशो भवति। तथैव प्रयत्नवान्नात्मा परमेश्वरः तत्संयोगेन प्रयोज्या या परमाणुक्रिया तदधीनो यः परमाणुद्वयसंयोगरूपासमवायिकारणनाशस्तज्जन्यो यो द्व्यणुकनाशो भवति। अयञ्च नाशः साक्षात् तत्तच्छरीरद्वारा वा यथायथमीश्वरेणैव क्रियते। अत्राप्यागमसंवादो विद्यते। तथाहि—

---

१. *बृहदारण्यकोपनिषद् ३/८/८ पृ० ७६७ (गीताप्रेस)*

२. *श्रीमद्भगवद्गीता १५/१७*

**सर्वभूतानि कौन्तेय प्रकृतिं यान्ति मामिकाम् ।**
**कल्पक्षये पुनस्तानि कल्पादौ विसृजाम्यहम् ।।[१] इति ।**

अस्यार्थः । हे कौन्तेय, कल्पक्षये प्रलये, सर्वभूतानि सर्वाणि जन्यद्रव्याणि, मामिकां प्रकृतिं परमाणुं सकलजन्यद्रव्याणां मूलकारणत्वात् यान्ति, प्रलयावस्थायां परमाणुमात्रावशिष्टानि भवन्ति। कल्पादौ सर्गादौ तानि सर्वाणि जन्यद्रव्याणि पुनः प्रकृतिं यामादिकारणमाहुस्तां सिसृक्षां यान्ति, पुनः सर्गाद्यपेक्षन्ते, तानि अहं विसृजामि सर्गानुकूलानि करोमीति। तथा च ब्रह्माण्डनाशः यत्प्रयत्नजन्यः स ईश्वर एव।

## पदहेतुत ईश्वरसिद्धिः

पद्यते ज्ञायते अनेनेति व्युत्पत्त्या पदं व्यवहारः। तथा च 'पटादिसम्प्रदायव्यवहारः स्वतन्त्रपुरुषप्रयोज्यः व्यवहारत्वाद् आधुनिकलिप्यादिव्यवहारवत्' इति। अत्र व्यवहारः कुविन्दादीनां पटादिनिर्माणव्यवहारो मानसः मनुष्यादीनां वाग्व्यवहारो वाचिकः (तत्रापि व्यक्तवाचो मनुष्याः, अव्यक्तवाचो हि पशुपक्ष्यादयः) लिपिव्यवहारः कायिकः। ते सर्वेऽपि व्यवहाराः स्वतन्त्रपुरुषप्रयोज्याः भवन्ति। पुरुषस्य स्वातन्त्र्यञ्च - तज्जातीयव्यवहारानुपजीवित्वम्, अन्यव्यवहारानधीनव्यवहारकर्तृत्वं वा। तथा च सर्गादौ इतरबाधादीश्वरसिद्धिः। नन्वयमनादिः पटादिव्यवहारः पूर्वपूर्वकुविन्दादिप्रयुक्त एव भविष्यतीति तदर्थं किमीश्वरेणेति चेत्, अत्राचार्याः 'विच्छेदेन पदस्याऽपि'[२] अर्थाद् विच्छेदेनान्तरा प्रलयेन प्रयोज्य-

---

१. *श्रीमद्भगवद्गीता ९/७*

२. *न्यायकुसुमाञ्जलि-कारिका ५/५*

प्रयोजकवृद्धाभावात् व्यवहारदर्शकाभावात् । पूर्वव्यवहारादर्शी नाद्यव्यवहार-प्रवर्तकः स्वतः सिद्धज्ञानाऽभावाद् व्यवहारानभिज्ञत्वादिति सर्गाद्यकालीन-पटादिव्यवहारप्रवर्तकः कश्चिदपेक्षितः स एव ईश्वरः । ननु सादिव्यवहार एव स्वतन्त्रपुरुषप्रयोज्यो भवति। अयं तु घटादिनिर्माणव्यवहारोऽनादिः स्वतन्त्रपुरुषं विनाऽपि भविष्यति। तथा च घटादिनिर्माणव्यवहारे यदि पुरुषप्रणीतत्वमात्रं साध्यते तर्हि जीवात्मानमादाय सिद्धसाधनं स्यात्। यदि तत्र स्वतन्त्रपुरुषप्रणीतत्वं साध्यते इत्युच्यते तर्हि सादिव्यवहारत्वमुपाधिः, सादिव्यवहारे एव स्वतन्त्रपुरुषप्रयोज्यत्वदर्शनात्। तथाहि पूर्वोक्तानुमाने यत्र यत्र स्वतन्त्रपुरुषप्रयोज्यत्वरूपं साध्यं वर्तते तत्र सर्वत्र सादिव्यवहार-त्वसत्त्वात्, सादिव्यवहारत्वस्य साध्यव्यापकत्वम्। एवमस्मिन्ननादिघटादि-निर्माणव्यवहारे हेतुव्यवहारस्य सत्त्वेऽपि सादिव्यवहारत्वाभावात् साधना-व्यापकत्वात् सादिव्यवहारत्वस्योपाधित्वमिति चेन्न, घटादिनिर्माणव्यवहार-स्यानादित्वासिद्धेः। स्वतन्त्रपुरुषाधीनत्वेन तस्यादिमत्तामेव साधयितुमय-मनुमानप्रयोगः। तथा च सादिव्यवहारत्वस्य साध्यतुल्यत्वात् प्रकृतहेतुना तस्यापि साधयितुमिष्टत्वान्न तस्योपाधित्वम्। ननु शरीरे सति यत्कार्यं भवति, असति च शरीरे यत्कार्यं न भवति, तस्मिन् व्यवहारप्रवर्तनादौ ईश्वरस्यापि शरीरावश्यकत्वात्, न्यायमते चेश्वरस्य शरीराभावात्, कथं घटादिनिर्माणव्यवहारस्य शरीररहितेश्वरप्रणीतत्वमिति चेन्न। शरीरान्वय-व्यतिरेकानुविधायिनि कार्ये ईश्वरस्यापि शरीरवत्त्वात् । ईश्वरोऽपि कार्यवशात् शरीरं गृह्णाति, दर्शयति च विभूतिम्। ननु ईश्वरे शरीरजनकादृष्टाभावात् कथं तस्य शरीरं सम्भवेद इति चेद्, ईश्वरस्याऽदृष्टाभावेऽपि तच्छरीरसाध्यहेतु-कास्मदादिभोगसम्पादकादृष्टादेवेश्वरस्य शरीरोत्पत्तिः। एवं संसारपङ्क-निमग्नान् अज्ञानिनः उद्दिधीर्षुः भक्तानुकम्पावशादीश्वरोऽपि लीलाविग्रहं दधाति। तदुक्तम् - शिवशक्तिगणेशार्कविष्णुरूपात् स ईश्वरः। उपासना-

नुसारेण भक्तेभ्यो भुक्तिमुक्तिदः । इत्यादि - आगममपि तत्र प्रमाणम् ।

व्यवहारसम्प्रदायप्रवर्तक ईश्वर इत्यत्रागमसंवादः—

**पितामहस्य जगतो माता धाता पितामहः ।**

**एवम् - यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः ।**
**मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः ।।**
**उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम् ।**
**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः ।।**[१]

अस्यार्थः - अस्य जगतोऽभिनवपटादिनिर्माणरूपस्य अहमेव पिता जनकः । व्युत्पादकत्वगुणयोगेन पितृत्वव्यपदेशः । अहं जगतः संसार्यात्मजातस्य माता पालकः, मातृत्वमपि तदुत्पादकत्वपालकत्वादिगुणयोगात् । धाता घटादिनिर्माणकर्ता । पितामहो जनकस्याऽपि जनकः, उत्पादकस्याऽप्युत्पादकः । हे पार्थ, अहं कर्माणि घटादिनिर्माणादौ अतन्द्रितः अनलसो यदि न वर्तेयं कर्ता न स्याम्, ततश्च यदि कर्म न कुर्यां, तदा अमी लोक्यन्ते इति लोकाः प्रामाणिकव्यवहारा उत्सीदेयुरुच्छिन्ना भवेयुः । ननु कथमेतावतैवोत्सीदेयुरित्यत्र हेतुमाह - मम वर्त्मा..... इति । यतो मदुपदिष्टेन वर्त्मना मार्गेण सर्वशः सर्वेऽपि मनुष्या वर्तन्ते व्यवहरन्तीत्यर्थः । घटादिनिर्माणव्यवहारस्य स्वतन्त्रपुरुषपूर्वकत्वव्युत्पादनं 'नमः कुलालेभ्यः कमरिभ्यश्च' इति वदन् वेदोऽपि, ईश्वरस्य लोकव्युत्पत्तये सर्गादौ कुलालादिरूपेण कर्तृत्वं प्रतिपादयति ।

---

१. श्रीमद्भगवद्गीता ३/७, ३/२३, २४

## प्रत्ययहेतुत ईश्वरसिद्धिः

प्रत्ययतः प्रामाण्यात्, प्रमात्वात्। तथा च 'सर्गाद्यकालीनवेदजन्यप्रमा वक्तृयथार्थवाक्यार्थज्ञानजन्या शाब्दप्रमात्वाल्लौकिकवाक्यजन्यशाब्दप्रमावत्' इत्यनुमानं फलितम्। अत्र बहुवित्तव्ययशरीरायाससाध्येषु यागेषु निष्कम्पप्रवृत्त्युपयोगिप्रमात्वविषयकज्ञानविषयभूतं प्रमात्वं हेतुत्वेन विवक्षितम्। आगम्यते सम्यग् ज्ञायते अलौकिकोऽर्थोऽनेनेति व्युत्पत्त्या आगमपदमदृष्टार्थपरम्। तथा चालौकिकार्यज्ञापको वेद इति फलति। सम्प्रदीयते गुरुणा शिष्यायेति सम्प्रदायः। आगमश्चासौ सम्प्रदायश्चेति आगमसम्प्रदायः। प्रवाहो वा सम्प्रदायः। तथा च 'परम्परया उपदिष्यमानवेदार्थज्ञानं कारणगुणपूर्वकं (कारणं यो गुणस्तत्पूर्वकं) प्रमात्वात् प्रत्यक्षादिप्रमावत्' इत्यनुमानप्रयोगः। यथा प्रत्यक्षप्रमायां विशेषणवद्विशेष्यसन्निकर्षो गुणः, अनुमितौ यथार्थपरामर्शो गुणः, तथा शाब्दबोधप्रमायां वक्तृयथार्थज्ञानं गुणः।[1] वक्तृयथार्थज्ञानस्यैव शाब्दबोधप्रमां प्रति कारणत्वात्। ननु प्रामाण्यस्य स्वतस्त्वमेव न तु गुणजन्यत्वमिति चेत् स्वतः प्रामाण्योत्पत्तेः वेदकर्तृत्वेनेश्वरसाधनावसरे एव खण्डितत्वात्। ननु वेदजन्या प्रमैव भवतीति चेन्न, महाजनपरिग्रहबलेन वेदजन्यशाब्दबोधस्य प्रामाण्यस्य स्थापितत्वात्। ननु तथापि वेदजन्यशाब्दबोधप्रमाया अस्मदादिगुणजन्यत्वमेव स्यादिति चेन्न, असर्वज्ञस्याऽस्मदादेः उपदेशमन्तरा स्वातन्त्र्येण धर्माधर्मज्ञाने सामर्थ्याभावात्। तथा चासर्वज्ञस्याऽस्मदादेः वक्तृयथार्थज्ञानरूपगुणासम्भवात् तादृशगुणाश्रयत्वेनेश्वरः सिद्ध्यति।

---

*१. प्रत्यक्षे तु विशेष्येण विशेषणवता समम्........। न्यायसिद्धान्तमुक्तावली कारिका१३२-१३४*

## श्रुतिहेतुत ईश्वरसिद्धिः

श्रुतेर्वेदात्, वेदत्वादिति। अत्र हरिदासभट्टाचार्येण वेदः पौरुषेयो वेदत्वात् आयुर्वेदवत् इत्यनुमानेन यथा धन्वन्तरिणा उक्त आयुर्वेदः स्वास्थ्यं बोधयति। स्वास्थ्यलाभोऽपि प्रत्यत्क्षत उपलभ्यते। अत एव तस्य प्रामाण्यम्। तथैव वेदोऽपि धर्माधर्मौ बोधयति। धर्माधर्माभ्याञ्च इष्टप्राप्तिरनिष्टनिवृत्तिश्च प्राप्येते। अतो वेदस्यापि प्रामाण्यम्। तथा च धन्वन्तरिवत् कोऽपि वेदस्य प्रामाण्यस्य कर्ता आवश्यकः स एव भगवान्नीश्वर इति अन्वयव्याप्तिबलेन ईश्वरः साधितः। परन्तु एवं कृते सति अग्रिम वाक्यत्वहेतुः व्यर्थो भवत्यत आचार्येण श्रुतिहेतुः व्यतिरेकानुमानतया प्रतिपादित इति मन्ये। तथा च 'वेदाः सर्वज्ञप्रणीताः वेदत्वात् यन्नैवं (यन्नसर्वज्ञप्रणीतं) तन्नैवं (तन्न वेदः) यथा रघुवंशादिरित्यनुमानं फलितम्। न च परेषां मते सर्वज्ञस्याऽप्रसिद्धत्वात् सर्वज्ञप्रणीतत्वरूपं साध्यमप्यप्रसिद्धमिति व्याप्तिग्रहाभावेनाऽनुमानासम्भव इति वाच्यम्। किञ्चिज्ञाऽप्रणीतत्वचेतनप्रणीतत्वोभयवत्त्वमेव साध्यत्वेन विवक्षितमित्यदोषात्। लौकिकवाक्ये किञ्चिज्ज्ञप्रणीतत्वस्यैव सत्त्वेन तादृशोभयवत्त्वं नास्ति तत्र वेदत्वमपि नास्तीति व्यतिरेकव्याप्तिग्रहः सुलभः। ननु किमिदं हेतुभूतं वेदत्वम्। यदि वाक्यत्वमात्रं वेदत्वं, तर्हि सर्वज्ञप्रणीतत्वाभावरूपसाध्याभाववति लौकिकवाक्ये हेतोः सत्वात् पक्षविपक्षयोर्वृत्तित्वाद् विरुद्धत्वम्। न चाऽदृष्टबोधकवाक्यत्वं वेदत्वं, तथा सति लौकिकवाक्ये अदृष्टबोधकवाक्यत्वाभावान्न दोष इति वाच्यम्। सर्वज्ञप्रणीतत्वाभावरूपसाध्याभाववति

---

१. न्यायकुसुमाञ्जलि - हरिदासी पृ० १७१

प्रतारकबुद्धादिवाक्येऽप्यदृष्टबोधकवाक्यत्वरूपहेतोः सत्त्वात् तद्दोषतादवस्थ्यात्। ननु अदृष्टबोधकप्रमाणवाक्यत्वं वेदत्वं तस्य च प्रतारकवाक्येऽसत्त्वान्नदोष इति चेत्, वेदे सर्वज्ञप्रणीतत्वसिद्धेः प्राक् अदृष्टबोधकप्रमाणवाक्यत्वरूपहेतौ प्रामाण्यरूपविशेषणासिद्धेः। न च महाजनपरिग्रहबलाद्वेदे प्रामाण्यं सिद्धमिति वेदे अदृष्टबोधकप्रमाणवाक्यत्वरूपहेतोर्नाऽसिद्धिरिति वाच्यम्। एवमपि सर्वज्ञप्रणीतत्वाभावरूपसाध्याभाववति मन्वादिवाक्ये हेतोः सत्त्वाद् विरुद्धत्वं तदवस्थम्। अत एवाचार्याः - 'अनुपलभ्यमानमूलान्तरत्वे सति महाजनपरिगृहीतवाक्यत्वं'[१] वेदत्वमिति प्रतिपादयन्ति। यस्य वाक्यस्य वक्तृव्यतिरेकेणान्यद् वाक्यादि मूलं नोपलभ्यते, महाजनपरिग्रहश्चाऽस्ति तस्य वाक्यस्य वेदत्वमित्यर्थः। मन्वादिवाक्ये च वेदस्यैव मूलान्तरस्योपलभ्यमानत्वान्नास्ति अनुपलभ्यमानमूलान्तरत्वविशिष्टमहाजनपरिगृहीतवाक्यत्वरूपं वेदत्वम्। न च तथापि तेन हेतुना वेदे प्रमामूलकत्वमेव सिद्ध्येत्, न तु सर्वज्ञमूलकत्वमिति वाच्यम्। नह्यस्मदादीनां प्रत्यक्षादि तत्र वेदे मूलम्। अस्मदादीनामसर्वज्ञानां धर्माधर्मज्ञाने सामर्थ्याऽभावात् स्वातन्त्रेण वाक्यार्थज्ञानासम्भवात्। उक्तरूपस्य वेदस्य भ्रमविप्रलिप्सामूलकत्वं नाऽऽशङ्कनीयं महाजनैः ग्रहणधारणादिना प्रमात्वेन निर्णयात्। न च वेदे स्वाध्यायरूपपरम्परैव मूलमिति अनुपलभ्यमानमूलान्तरत्वे सतीति सत्यन्तमसिद्धमिति वाच्यम्। प्रलये परम्पराया विच्छेदात्। तथा च श्रुतेरिति हेतुमुपादाय सर्वज्ञपरमेश्वरसिद्धिः। सम्भवति च परिगृहीतविग्रहस्य भगवतो वेदप्रणयनं, पराथैकतानत्वात्, यो हिताहितविभागं विद्वान् परार्थैकतावचनशक्तौ सत्यां परार्थैकतानत्वात्, यो हिताहितविभागं विद्वान् परार्थैकता-

---

१. न्यायकुसुमाञ्जलि-स्वोपज्ञः ५/५ पृ० ६० (विस्तरः)

नाभिप्रायः स संस्थानकरणपाटवे सत्यविदुषे अवश्यमुपदिशेत्, यथा पृथग्जनोऽपि 'दक्षिणेन याहि, वामेन याहि' इत्यन्धाय उपदिशति, किमुत परमकारुणिकः परमेश्वरः।[१] तथा च व्यतिरेक्यनुमानेन वेदकर्तृत्वेन भवतीश्वर-सिद्धिः।

## वाक्यहेतुत ईश्वरसिद्धिः

वेदपक्षकव्यतिरेक्यनुमानं निरूपितम्। इदानीं वेदपक्षकवाक्यत्वहेतुकान्वय्यनुमानं प्रदर्शयितुं वाक्यादिति। वाक्यत्वादिति यावत्। तथा च 'वेदः पौरुषेयः वाक्यत्वात् भारतादिवत्' अथवा वेदवाक्यानि पौरुषेयाणि वाक्यत्वात् अस्मदादिवाक्यवत्' इत्यनुमानं फलितम्। तादृशानुमानेन वाक्यत्वावच्छेदेन पौरुषेयत्वस्य साध्यतया वेदेऽपि पौरुषेयत्वसिद्धिः। तथा च यत्प्रणीतो वेदः स एव भगवान्नीश्वर इति। ननु वेदस्य कोऽपि कर्ता स्यात् तदा तस्य क्व दृश्यते इति चेत्, 'अनन्तरं च वक्त्रेभ्यो वेदास्तस्य विनिःसृता' 'प्रतिमन्वन्तरं चैषाश्रुतिरन्या विधीयते' वेदान्तकृद्वेदविदेव चाहम्' इति स्मृतेः, 'तस्मात्तपस्तेपानात् त्रयो वेदा अजायन्त' 'तस्माद् यज्ञात् सर्वहुत ऋचः सामानि जज्ञिरे' 'अस्य महतो भूतस्य निःश्वसितमेतदृग्वेदो यजुर्वेदः सामवेदः' इत्यादिश्रुतेश्च दर्शनात्। ननु वेदे कर्तृस्मरणमर्थवादतया न प्रमाणम्। कार्यान्वितज्ञानजनकस्यैव पदस्य वृद्धव्यवहाराधीनशक्तिग्रहात् प्रामाण्यम्। अर्थवादस्य च विधिनिषेधापेक्षितस्तुतिनिन्दान्यतरपरत्वेन वाच्यार्थे तात्पर्याभावान्न स्वार्थे प्रामाण्यमिति चेन्न, 'सदेव सोम्येदमग्र आसीत्' इत्याद्यर्थवादानां मुख्यार्थ-

---

१. *यो हिताहितं विभागं विद्वान् ...........। आत्मतत्त्वविवेकः पृ० ४२८*

परत्वे बाधकाभावाद् अर्थवादानामपि प्रमाणत्वात्। गौतमादिमहर्षिभिः स्वशिष्यान् प्रति 'वेदकर्त्ता ईश्वर' इत्युपदेशात् तच्छिष्यपरम्परया वेदे ईश्वरकर्तृकत्वं सिद्ध्यतीति। तथा च अन्वयव्यतिरेकानुमानेन वेदकर्तृत्वेनेश्वर सिद्धिरिति।

## संख्याविशेषहेतुत ईश्वरसिद्धिः

सङ्ख्याविशेषः परमण्वोर्द्वित्वम्। 'द्व्यणुकपरिमाणं सङ्ख्याजन्यं परिमाणप्रचयान्यतरजन्यत्वाभावे सति जन्यपरिमाणत्वात्, तुल्यपरिमाणक-कपालद्वयारब्धघटपरिमाणात् प्रकृष्टतादृशकपालत्रयारब्धघटपरिमाणवत्' इत्यनुमानम्। परिमाणं प्रति परिमाणं, प्रचयाख्यसंयोगः सङ्ख्या च कारणम्।[१] यथा घटादिपरिमाणं प्रति कपालादिपरिमाणं, तूलावयविपरिमाणं प्रति तूलापिण्डद्वयप्रचयसंयोगः, पटमहत्त्वं प्रति च तन्तुबहुत्वं कारणम्। अत एव परिमाणजन्ये प्रचयजन्ये च परिमाणे व्यभिचारवारणाय सत्यन्तम्। नित्ये परमाणुपरिमाणे व्यभिचारवारणाय-जन्यपरिमाणत्वमित्यत्र जन्यत्वम्। घटादौ व्यभिचारवारणाय तत्रैव परिमाणत्वमिति। ननु द्व्यणुकपरिमाणं परमाणुपरिमाणजन्यमेवेति चेन्न, परिमाणस्य स्वसजातीयोत्कृष्टपरि-माणजनकत्वनियमात्, परमाणुपरिमाणसजातीयं द्व्यणुकपरिमाणं यदि परमाणुपरिमाणजन्यं स्यात्, तदा महदारब्धस्य महत्तरत्ववदणुजन्य-स्याऽणुतरत्वप्रसङ्गात् परमाणुपरिमाणादुत्कृष्टमणुतरं स्यात्। द्व्यणुक-परिमाणं तु परमाणुपरिमाणापेक्षया नाऽणुतरम् अत एव न परमाणुपरिमाण-जन्यम्। ननु द्व्यणुके परमाणुप्रचयेन त्रसरेणौ च द्व्यणुकप्रचयेन परिमाण-

---

१. संख्यातः परिमाणाच्च प्रचयादपि जायते। न्यायसिद्धान्तमुक्तावली - कारिका १११

मारभ्यतां किं द्वित्वत्रित्वाभ्यामिति चेन्न, सावयवद्रव्यवृत्तेः प्रचयस्य निरवयवपरमाणुवृत्तित्वाऽभावात्। कठिनद्रव्यारम्भकद्व्यणुकानां प्रचयाख्य-शिथिलसंयोगसम्भवात्। तस्मात् परमाणुद्व्यणुकयोः सङ्ख्यैव परिमाण-कारणम्। परिमाणप्रचयौ तु महन्निष्ठावेव परिमाणजनकाविति स्थितिः। तदेवं प्रसक्तयोः परिमाणप्रचययोर्निषेधात् सङ्ख्याविशेषः द्व्यणुकत्र्यणुकगत-परिमाणकारणत्वेन परिशिष्यते। तदनु 'परमाणुगतद्वित्वादिसंख्या अपेक्षाबुद्धिजन्या व्यासज्यवृत्तिसङ्ख्यात्वात् घटपटादिगतद्वित्वादिवत्' इत्यनुमानेन तत्कारणमपेक्षाबुद्धिः सिद्ध्यति। एवञ्च सर्गादौ द्व्यणुकपरि-माणहेतुपरमाणुनिष्ठद्वित्वसङ्ख्या, अथवाऽतीन्द्रियपरमाणुद्व्यणुकगतसङ्ख्या नाऽस्मदाद्यपेक्षाबुद्धिजन्या, यदीयापेक्षाबुद्धिजन्या स एवेश्वरः। तथा चाचार्योदयन एभिरष्टविधहेतुभिरीश्वरं साधयति। तत्र प्रथमं द्वितीयं तृतीयमष्टमञ्चानुमानं जगन्निर्मातृतयैवेश्वरं साधयन्ति। चतुर्थेन सम्प्रदायप्रवर्तकतयेश्वरः साध्यते। पञ्चमेन, षष्ठेन, सप्तमेन चानुमानेन वेदजनकत्वेनेश्वरस्य सिद्धिर्भवति। अदृष्टाधिष्ठायकतया चेश्वरसिद्धिः प्रथममेवोक्ता। अत आचार्योदयनमते अदृष्टाधिष्ठातृत्वेन, वेदप्रणेतृत्वेन, जगन्निर्मातृत्वेन चेति त्रिभिः प्रकारैरीश्वरः सिद्ध्यति। एवमीश्वरसिद्धौ तदुच्चरितत्वेन वेदस्य प्रामाण्यनिश्चयात् 'द्यावाभूमी जनयन् देव एकः विश्वस्य कर्ता भुवनस्य गोप्ता' इत्यादिवेदोऽपीश्वरे प्रमाणमिति।

## ईश्वरस्यास्तित्वविषये वैशेषिकराद्धान्तः

वैशेषिकसूत्रकारेण महर्षिकणादेन स्पष्टत ईश्वरस्य समुल्लेखो न कृतः। अत एव तेषामनीश्वरत्वं प्रतिपादयन् परवर्तिवैशेषिकग्रन्थेषु समानतन्त्रस्य न्यायदर्शनस्य प्रभावादेव ईश्वरवादः संप्रवृत्त इति वदन्ति केचन

मनीषिणः। परन्तु मतमिदं न रोचते। यतोहि केषाञ्चिदपि सूत्राणामाशयः तद्व्याख्यानग्रन्थेनैव ज्ञायते। तत्र व्याख्याकारेण शंकरमिश्रादिना 'संज्ञाकर्म त्वस्मद्विशिष्टानां लिङ्गम्' 'बुद्धिपूर्वा वाक्यकृतिर्वेदे' 'स वा अस्मद्बुद्ध्यन्यो लिङ्गमृषेः' 'सामयिकः शब्दार्थप्रत्ययः' इत्यादिसूत्राणां व्याख्यानावसरे स्पष्टतः ईश्वरसंकेतः कृतः। एवं 'तद्वचनादाम्नायस्य प्रामाण्यं' इति सूत्रस्य व्याख्याने तत्पदेनेश्वरस्यैव परामर्शः क्रियते। यद्यपि प्रथमसूत्रे धर्मविषयिणी एव प्रतिज्ञा कृता सूत्रकृता अतः द्वितीयसूत्रे तत्पदेन धर्मस्यैव परामर्श उचितः। तथापि शंकरमिश्रः प्रवदति यथा 'तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः' इति गौतमीयसूत्रे तत्पदेनानुपस्थितस्यापि वेदस्य परामर्शः क्रियते तथैवात्रापि तत् पदं प्रसिद्धसिद्धतयेश्वरमेव परामृशति। तथा च ईश्वरवचना-देवाम्नायस्य प्रामाण्यमिति। एवं 'प्रत्यक्षपूर्वकत्वात् संज्ञाकर्मणः' इत्यस्य व्याख्यानावसरे संज्ञा च कर्म चेति समाहारद्वन्दात् संज्ञाकर्तुः जगत्कर्तुश्चाभेदं सूचयति। न्यायमञ्जरीकारेण प्रतिपादितम् 'यथाऽस्माकमीश्वरेच्छाप्रेरितपर-माणुनिर्मितानि पृथिव्यादीनि, समानतन्त्रे कणव्रतमते तथैव सिद्धानि' इति। एवं प्रशस्तपादाचार्यः पदार्थधर्मसंग्रहादौ—

**प्रणम्य हेतुमीश्वरं मुनिं कणादमन्वतः।**
**पदार्थधर्मसंग्रहः प्रवक्ष्यते महोदयः॥**

इत्यतः मंगालचरणं कुर्वन् कारणभूतमीश्वरं प्रणमति। अग्रे च सृष्टिसंहार-प्रक्रियायामीश्वरं विवेचयति। अन्येष्वपि प्रकरणग्रन्थेषु न्यायसिद्धान्त-मुक्तावली-तर्कसंग्रहादिषु भगवतः स्वीकरणं स्पष्टत उपलभ्यते।

न्यायदर्शन इव वैशेषिकदर्शनेऽपि ईश्वरसाधकमनुमानागम-प्रमाणञ्च वर्तते। तदुक्तं न्यायकन्दलीकारेण 'किं पुनरीश्वरसद्भावे प्रमाणम् ?

आगमस्तावदनुमानञ्च'[१] इति। तत्रानुमानप्रमाणं दर्शितं मुक्तावलीकारेण 'यथा घटादिकार्यं कर्तृजन्यं तथा क्षित्यङ्कुरादिकमपि। न च तत्कर्तृत्वमस्मदादीनां सम्भवतीत्यतस्तत्कर्तृत्वेनेश्वरसिद्धिः' इति। एवं श्रीधरभट्टेन न्यायकन्दल्यां 'महाभूतचतुष्टयमुपलब्धिमत्पूर्वकं कार्यत्वात्, यत्कार्यं तदुपलब्धिमत्पूर्वकं यथा घटः कार्यञ्च महाभूतचतुष्टयं तस्मादेतदप्युपलब्धिमत्पूर्वकम्। प्रमाणेन पूर्वकोट्यनुपलब्धेः (=पक्षधर्मताज्ञानाभावात्) असिद्धं पृथिव्यादिषु कार्यत्वमिति चेत्? तदयुक्तम्, सावयवत्वात्, यत् सावयवं तत् कार्यं यथा घटः, सावयवञ्च पृथिव्यादि, तस्मादेतदपि कार्यमेव' इत्थं प्रकारेण ईश्वरः साधितः। प्रशस्तपादभाष्ये परिमाणनिरूपणावसरे द्व्यणुकपरिमाणं प्रति परमाणुगतसंख्यायाः कारणत्वं प्रतिपाद्यते। सा संख्या च ईश्वरबुद्धिजन्या इति च स्फुटीकुर्वद्भिः आचार्योदयनैः प्रोक्तस्य संख्याविशेषादिति ईश्वरसाधकस्य हेतोः संकेतः कृतः। मानमनोहरनामके ग्रन्थे भगवत्साधकानि अनेकान्यनुमानानि प्राप्यन्ते। एवं 'विवादाध्यासितं कर्म प्रयत्नाधारजं कर्मत्वात् यत् कर्म तत् प्रयत्नाधारजं यथा सम्प्रतिपन्नं कर्म तथा विवादाध्यासितं कर्म' इति प्रयत्नाधारस्य सिद्धिः स एव भगवान्नीश्वरः। एवं 'विवादाध्य सितं मूर्तं प्रयत्नधारजं परमाणुव्यतिरिक्तत्वे सति मूर्तत्वात् 'गन्धः प्रयत्नजः गन्धत्वात् घटवत् तद्गतगन्धवत्' अथवा विवादाध्य सिते पृथिव्युदके प्रयत्नवता धृते गुरुत्वे सत्यपतितत्वात् करतलामलकवत्' अनुमानमिदं 'ब्रह्माण्डादि पतनप्रतिबन्धकीभूत प्रयत्नवदधिष्ठितं धृतिमत्त्वात् विहति विहङ्गमधृतिकाष्ठवत्' इत्युदयनाचार्योक्तानुमानेन साम्यमाधत्ते। एवं 'विवादाध्यासितं नित्यविशेषगुणाधारजं कार्यत्वादाप्य-

---

१. न्यायकन्दली पृ० १३३

(जलीय) द्व्यणुकवत् यश्च नित्यविशेषगुणाधारः स एवेश्वरः'। एवं बौद्धं प्रतीश्वरसाधनाय तत्रानुमानं प्रस्तूयते -'विवादाध्यासितो विकल्पः तदतिरिक्ते प्रमा प्रमात्वात् निर्विकल्पकप्रमावत्' इति। एवं 'एतज्ज्ञानम् एतदुत्पादकानित्यव्यतिरिक्तज्ञानजन्यं कार्यत्वात् सम्प्रतिपन्नवत्' अनित्य-व्यतिरिक्तज्ञानसिद्धौ यः तज्ज्ञानस्याश्रयः स एवेश्वर इति सिद्ध्यति। एवमन्यान्यप्यनुमानानि तत्र प्राप्यन्ते।[१]

भगवत्सद्भावे वेदानामपि प्रामाण्यम् विद्यते । तथाहि 'द्यावा भूमी जनयन् देव एकः' विश्वस्यकर्ता भुवनस्य गोप्ता' इत्याद्यागमवाक्य-मीश्वरसाधकमिति वैशेषिकाः।

एवं विवेचनेन स्पष्टीभवतीदं यदीश्वरविषये वैशेषिकदर्शनं न्यायदर्शनेन साकं सम्पूर्णं साम्यमाधत्ते। अत एव हरिभद्रसूरिणा—

देवताविषये भेदो नास्ति नैयायिकैः समम्।[२] इति।

## ग्रन्थकर्तुः परिचयः

सुगृहीतनामधेयो न्यायाचार्यः श्रीमान्नुदयनाचार्यः प्रमाणपुरस्सरं परमेश्वरसिद्धिं विदधान गद्यपद्यात्मकं न्यायकुसुमाञ्जलिनामकं ग्रन्थं प्रणिनाय। अयञ्च परमदार्शनिकः श्रीमदुदयनस्तत्तद्देशवासिभिर्दार्शनिकै-र्विद्वद्भिर्विभिन्ननामभिर्व्याह्रियमाणो व्यवह्रियमाणश्चासीत्। तथाहि—क्वचि-

---

१. मानमनोहरः पृ० २-७

२. षड्दर्शनसमुच्चय-कारिका ५९

दुदयनः,[१] क्वचिदुदयकरः,[२] क्वचिदुदयशङ्करः, उदयनाचार्यः, न्यायाचार्योदयनः इत्येवंविधनामभिः व्यवह्रियमाणेऽपि न्यायवैशेषिकदर्शने **'आचार्य'** पदेन बोध्यते। स चायमुदयनाचार्यः कदा प्रादुर्बभूवेति जिज्ञासायामेतद्विरचितलक्षणावलीग्रन्थावसाने—

**तर्काम्बराङ्कप्रमितेष्वतीतेषु शकान्ततः ।**
**वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम् ।।**

तदनुसारं 'लक्षणावली' ग्रन्थस्य निर्माणकालः ९०६ शकाब्दः, अर्थात् ९८४ ईसवीयश्चास्ति। एतेनेदं सुस्पष्टं प्रतीयते सिद्ध्यति च यदुदयनाचार्यस्याऽस्तित्वं दशमशताब्द्यामक्षुण्णमेव।

श्रीमानुदयनाचार्यो नैषधीयचरित-खण्डनखण्डखाद्यादिप्रणेतुर्महाकवेः श्रीहर्षात् प्राचीनो यतः श्रीहर्षः स्वकृते खण्डनखण्डखाद्यग्रन्थे न्यायकुसुमाञ्जलिस्थाम् —

**शङ्काचेदनुमाऽस्त्येव न चेच्छङ्का ततस्तराम् ।**
**व्याघातावधिराशङ्का तर्कः शङ्कावधिर्मतः ।।**

इतीमां कारिकामुपहासच्छलेन—

**शङ्काचेदनुमास्त्येव नचेच्छङ्का कुतस्तराम् ।**
**व्याघातावधिराशङ्का तर्कः शङ्कावधिः कुतः ।। इति ।**

---

१. *'व्यातेने किरणावलीमुदयनः' इति किरणावल्याम्*
२. *'तदिदमुदयनेन न्यायलोकागमानाम्' इति आत्मतत्त्वविवेके*

किञ्चिदन्यथाकृत्य पपाठ, एवं 'तत्त्वानुभूतिः प्रमा' इति लक्षणमालायामुदयनाचार्यैः प्रोक्तं प्रमालक्षणं च दूषयामास। उदयनाचार्याणां मातापित्रोर्विषये तज्जीवनवृत्तविषये च निश्चयेन न किमपि वक्तुं शक्यते। तथापि नासौ वङ्गदेशीयो न वा दाक्षिणात्यः किं तु मैथिल इति भविष्य-पुराणपरिशिष्टे भगवद्भक्तमाहात्म्ये त्रिंशत्तमेऽध्याये स्पष्टमुपलभ्यते। युक्तं चैतत्, दीधितिकाररघुनाथशिरोमणिसमयात्परत एव वङ्गदेशे न्यायशास्त्रस्य प्रचुरः प्रचारोऽभवत्। तत्पूर्वं तु मिथिलप्रदेशे एव न्यायशास्त्रस्य प्रचुरः पठनपाठनप्रचार आसीदित्युदयनाचार्यो मिथिलाभिजन एव।

श्रीमानुदयनाचार्यो न्यायवैशेषिकोभयदर्शनयोरनुपमोत्कटप्रति-भावान् न्यायवैशेषिकविभूतिभूतः सन्नेको महान् विद्वानासीत्। अस्य महानुभावस्य विषये इत्थं श्रूयते यद् - यथा भगवतो भास्करस्योदये जायमानेऽन्धकारः सर्वथा समाप्तिं गच्छति। तथैवाऽऽचार्यप्रवर-श्रीमदुदयनाचार्ये समागते बौद्धप्रभृतिनास्तिकदार्शनिकैर्विस्तारितोऽयं शास्त्री-याऽन्धकारः सर्वोऽपि विनाशं गतवान् इत्याशयनेनैवास्य महानुभावस्य उदयाकरः, उदयशंकरः, इत्यादिरूपेण सविभक्तिकनामकरणं जातम्। तात्त्विकदृष्ट्या विचार्यमाणे न्यायवैशेषिकोभयदर्शनयोः प्राचीननवीन-युगाभिसन्धौ दर्शनजीवनस्य खलु आधारभूतः श्रीमदुदयनाचार्यः। तेन च (१) वैशेषिकसूत्रप्रशस्तपादभाष्यटीका **किरणावली** (२) वैशेषिकशास्त्रसारभूता **लक्षणवली** (३) वात्स्यायनभाष्यटीकाटीका न्यायनिबन्धापरनामधेया **तात्पर्यपरिशुद्धिः** (४) बोधशुद्धिः बोधसिद्धिर्वा न्यायपरिशिष्टाख्या **न्यायसूत्रवृत्तिः** (५) **आत्मतत्त्वविवेकः** (तस्य एव नाम बौद्धाधिकारः बौद्धधिक्कारो वा) (६) **न्यायकुसुमाञ्जलिश्च** रचितः। (७) न्यायशास्त्रसारभूता **लक्षणमाला**ऽप्युदयनाचार्यस्य कृतिरिति विद्वद्भिः

स्वीक्रियते। तत्र न्यायकुसुमाञ्जलौ पञ्चमस्तबके तृतीयकारिकाव्याख्याने 'एतच्च सर्वमात्मतत्त्वविवेके निपुणतरमुपपादितमिति नेह प्रतन्यते' इति। एवं न्यायवार्तिकतात्पर्यपरिशुद्धौ द्वितीयेऽध्याये द्वितीयाह्निके 'प्रपञ्चितोऽस्माभिस्तु न्यायकुसुमाञ्जलौ' इति। एवम् 'अप्रसिद्धान्तस्तु यथा विरोधाद्भिद्यते। तथा तत्रैव वक्ष्यते। शेषं परिशिष्टे' इति। एवं किरणावल्यां 'विस्तरस्तु न्यायकुसुमाञ्जलावात्मतत्त्वविवेके चानुसन्धेयः' इति। एवं 'विद्यासन्ध्योदयद्रेकात्' इत्यादि इदमेवपद्यं किरणावल्यामारम्भे लक्षणावल्यां तात्पर्यपरिशुद्धौ तृतीयेऽध्याये प्रथमाह्निके चोपलम्भात् ज्ञायते यत् पूर्वप्रदर्शितप्रबन्धषट्कस्यैककर्तृकत्वं निर्विवादम्, उक्तञ्च तार्किकरक्षायां वरदराजाचार्येण (३१० पृष्ठे)।

आचार्य-प्रवरस्य जीवनवृत्तं भविष्यपुराणान्तर्गतभगवद्भक्त-माहात्म्यस्य त्रिंशदध्याये विस्तरेण वर्णितम्। संक्षेपेणाऽत्र—

**अथ वक्ष्ये तृतीयस्य हरेर्वंशस्य धीमतः।**
**उदयनाचार्यनाम्नस्तु माहात्म्यं लोमहर्षणम्॥**
**भुत्वा स मिथिलायान्तु शास्त्राण्यध्यैष्ट सर्वशः।**
**विशेषतो न्यायशास्त्रे साक्षाद् वै गोतमो मुनिः॥**
**बौद्धसिद्धान्तमुग्धान्तः सुखाय हितकारिणीम्।**
**वितेन विदुषां प्रीत्यै विमलां किरणावलीम्॥**

**तत्रैवाग्रे- एकदोदयनाचार्यो जगन्नाथदिदृक्षया।**
**देवं द्रष्टुं मन्दिरान्तः प्रवेष्टुं चलितो यदा।**
**तदा कपाट संलग्नः स्वयमेव निरीक्ष्य स।**
**तदा तूदयनाचार्यः सस्मितं वाक्यमब्रवीत्॥**

ऐश्वर्यमदमत्तोऽसि मामवज्ञाय तिष्ठसि ।
उपस्थितेषु बौद्धेषु मदधीना तव स्थितिः ।।

एतेन आचार्यप्रवरस्य परमभक्तिनिष्ठत्वं सूच्यते। तादृशीं भक्तिं निष्ठां वा समाश्रित्यैव श्रीमदाचार्यः ब्रूते यद् बौद्धेषु समागतेषु त्वदीया स्थितिरस्तित्वञ्चोभयमेव मदधीनमिति। एवम् —

एकदा बौद्धसिद्धान्तान् प्रकटीकर्तुमागतः ।
बौद्धाचार्यस्तीरभुक्तौ नृपग्रामे समागतः ।।
......... गच्छ शिष्य मिथिलेशं वदाधुना ।
मद्वाक्याद्, वेदशास्त्राभ्यां मुधा भ्रान्तोऽसि भूपते ।।
निरीक्ष मम शास्त्राणि मत्पथानुगतो भव ।
अस्ति चेत्तव देशेऽस्मिन् वेदस्थापनकृत् पुमान् ।।
तमानय मया सार्धं विचारं प्रकरोतु सः ।
तदा श्रुत्वा तु तद् राजा वचनं दूतभाषितम् ।
उवाच, गच्छ दूत त्वं स्वगुरुं ब्रूहि मे वचः ।।
अहं भ्रान्तः स वा भ्रान्त इत्येवं निश्चयो महान् ।
आगच्छ सदसि प्रातः स ते व्यक्तीभविष्यति ।।
तत्क्षणादथ राजा तु देशस्थान् पण्डितान् बहून् ।
श्रीमदुदयनाचार्यमुख्यानानय्य चोक्तवान् ।
अहोऽयं नास्तिको ग्रामे समायातोऽतिपण्डितः ।।
अनेन विवदध्यं वै यूयं, युष्मान् स चेज्जयेत् ।
तदाहं च भवन्तश्च सर्वे तन्मतगामिनः ।।
भविष्यामो न सन्देहो, भवतां चेज्जयो भवेत् ।
तदाहं भवतां दास्यं करिष्यामि न संशयः ।।

इत्युक्तास्ते तु विद्वांसः सर्वे तूष्णीं स्थिता अथ ।
श्रीमदुदयनाचार्यस्तेषां मध्ये ब्रवीन्नृपम् ।।
सत्यमात्थ महाराज शृणु किञ्चिन्मयोदितम् ।
जय पराजयो वापि श्रीहरेरिच्छया नृणाम् ।।
यथाशक्ति विवादं तु करिष्यामि न संशयः ।
त्वं तु चिन्तां परित्यज्य पश्यास्माकं पराक्रमम् ।।
एवं बहुदिनान्यासीद् विचारः सुमहांस्तयोः ।।
तदा बौद्धो हृदा मत्वाचार्यान्निजपराजयम् ।
मायां विस्तरयामास महदाश्चर्यदायिनीम् ।।

अत्रोदयनः प्राह—

मायामपि च जानामि परं त्वेकं ब्रवीम्यहम् ।
एकस्तालद्रुमो द्वारि तिष्ठत्यति महानहो ।।
तमारुह्यं पतिष्यावो यः स्थास्यति स तथ्यवाक् ।
वेदाः प्रमाणमित्युक्त्वा ह्याचार्यो न्यपतद् भुवि ।
बौद्धो वेदा अप्रमाणमित्युक्त्वा निपपात ह ।।
आचार्यो निपतन् भूमौ वेदैः संरक्षितः स्वयम् ।
मन्दं मन्दं समागत्य तस्थौ वेदं हरिं स्मरन् ।।
बौद्धाचार्यः पतन् मार्गे भ्राम्यमाण उपर्यधः ।
परिवर्तितशीर्षो हि पपात धरणीतले ।।

इत्यत आचार्यस्य विद्वत्ता वेदनिष्ठता च स्फुटीभवति । अत आचार्यः विद्वान् सन्नपि परमभक्तः ।

आचार्येण गद्यपद्यात्मकन्यायकुसुमाञ्जलिः प्रणितः । तत्र पद्यात्मकभागस्य हरिदासभट्टाचार्येण हरिदासीति लोकप्रसिद्धा वृत्तिनाम्नी

टीका विरचिता। तेषां जन्मसमयो कदेति निश्चेतुं न शक्यते। पूर्वापरपर्यालोचनेन सामान्यतः १४८० तः १५४० खीस्ताब्दपर्यन्तमस्य जन्म इति स्वीकुर्वन्ति विद्वांसः। ते वङ्गीया इति। अत एव श्रूयते - पूर्वं मैथिलाचार्याः न्यायकुसुमाञ्जलिमूलग्रन्थं मैथिलेतरछात्रान्नपि पाठयन्ति स्मः। परन्तु तस्य ग्रन्थस्यान्यत्र नयनं सर्वथा निषिद्धं वर्तते स्मः। अत एव आरम्भिककाले मिथिलाप्रदेशे एव न्यायकुसुमाञ्जलेः प्रचुरः पठनपाठनप्रचार आसीत्। हरिदासभट्टाचार्येण च न्यायकुसुमाञ्जलिकारिकाः कण्ठस्थीकृत्य मिथिलातः नवद्वीपे आनीताः, तदुपरि वृत्तिनाम्नी टीका विरचिता च। कालक्रमेण केवलकारिकाभागस्य व्याख्यानपरम्परा प्रचलिता। तत्रापि हरिदाशीटीका विद्वत्समाजे अतीवप्रसिद्धा। तस्य कारणं सरलभाषा, प्रतिपादनशैली च। एभिरेवभट्टाचार्यैः तत्त्वचिन्तामणिप्रकाश-भाष्यालोक-टिप्पणीत्यादिग्रन्थाः विरचिताः सन्तीति।

## न्यायकुसुमाञ्जलिपर्यालोचनम्

'दोषो ह्यविद्यमानोऽपि तच्चित्तानां प्रकाशते' इति वचनानुसारं सकलगुणविशिष्टे न्यायकुसुमाञ्जलावपि दोषदृष्टिःकर्तुं शक्यते। तद्यथा— तुलनात्मकदृष्ट्याऽध्ययनात् ज्ञायते यत् न्यायकुसुमाञ्जलौ विद्यमानासु युक्तिषु मध्ये बहुषु स्थलेषु मौलिकता सन्दिग्धा वर्तते। आचार्योदयनात् प्रागपि ईश्वरविषयकविचाराः उपलभ्यन्ते। तेषां प्रभावो न्यायकुसुमाञ्जलौ स्पष्टत उपलभ्यते। तेन ज्ञायते—आचार्योदयनेन तत्कालोपलब्धानां युक्तीनां निपुणतया समावेशो विहित इति। अत एव न्यायकुसुमाञ्जलौ मौलिकता-पेक्षया संग्रहगतवैशिष्ट्याधिक्यं भासते। प्राचीनग्रन्थैः सह न्यायकुसुमाञ्जलेः तुलनात्मकसमीक्षणेन विषयोऽयं स्वतः स्पष्टो भवति—

अत्र कुसुमाञ्जलौ आचार्योदयनेन कार्यायोजनधृत्यादेः पदात्

प्रत्ययतः श्रुतेः वाक्यात् संख्याविशेषादिति अष्टविधहेतुभिरीश्वरः साधितः, तेषु मध्ये कार्य-आयोजन-धृति-संख्याविशेषरूपहेतवो वार्तिककार-उद्योतकराचार्यप्रतिपादितेश्वरसाधनानुमाने प्राप्यन्ते। अदृष्टाधिष्ठातृत्वे-नेश्वरः साधनाय वार्तिककारेण बहून्यनुमानानि प्रस्तुतानि, तस्याधमर्णता आचार्येरपि स्वीकर्तव्या।

पद-प्रत्यय-श्रुति-वाक्यरूपहेतुभिरीश्वरानुमानं क्रियते आचार्यैः। तस्य मूलं वाचस्पतिमिश्रकृततात्पर्यटीका इति वक्तुं शक्यते। यतोहि—मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यादिति सूत्रतात्पर्य-टीकायां 'वेदा एव सकललोकयात्रामुद्वहन्तो हिताहितप्राप्तिपरिहारोपायमुप-दिशन्त ईश्वरप्रणीता इत्यवगच्छामः' एवं 'वर्णाश्रमाचारव्यवस्थापक आगमो महाजनपरिगृहीत स तत्प्रणीतः' इत्यादिप्रतिपादनात्।

इदमपि द्रष्टव्यं भवति यत् - आचार्येण बहव्यः कारिकाः प्राचीनाचार्योक्त-पंक्तीनां सामान्यपरिवर्तनमात्रेण विनिर्मिताः। तद्यथा—(१) 'यद्येकं निमित्तं स्यात् वैचित्र्यं न भवेत्। नह्यभिन्नात् कारणात् कार्यवैचित्र्य-मुपपद्यते तस्याकस्मिकत्वप्रसङ्गात्'[२]। 'नह्येक रूपात् कारणात् कार्यभेदं पश्यामः'[३]।

तुलनीया कारिका -**एकस्य न क्रमः क्वापि वैचित्र्यं च समस्य न।**[४]

---

१. *न्यायवार्तिकतात्पर्यटीका २/१/६८ पृ० ५६६*

२. *तात्पर्यटीका १/१/१८, पृ० ५५*

३. *न्यायवार्तिकम् ४/१/२१, पृ० ९५०*

४. *कुसुमाञ्जलिकारिका १/६*

(२) यागादिक्रिया तु आशुतरविनाशिनी न चिरभाविने स्वर्गाय कल्पते ।[१]

तुलनीया - **चिरध्वस्तं फलायालं न कर्मातिशयं विना ।**[२]

(३) अत्रोच्यते - एषा तावत् प्रमेयगतिः, भावाभावौ परस्परविरहात्मानौ भावनिवृत्तिरेवाभावः, अभावनिवृत्तिरेव भावः, न तु भावाभावाभ्यामन्या तयोर्निवृत्तिः'[३] ।

तुलनीया - **परस्परविरोधे हि न प्रकारान्तरस्थितिः ।।**[४]

(४) याऽसौ संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः स उपमानार्थः। एवञ्च नोपमानमागमो न प्रत्यक्षम्, नह्यमागमात् प्रत्यक्षाद्वाऽयं गवय इति प्रतिपद्यते ।[५] 'गवा गवयसारूप्यप्रतिपत्तेस्तु संज्ञासंज्ञिसम्बन्धं प्रतिपद्यते'[६] ।

तुलनीया - **सम्बन्धस्य परिच्छेदः संज्ञायाः संज्ञिना सह ।**
**प्रत्यक्षादेरसाध्यत्वादुपमानफलं विदुः ।।**[७]

(५) नान्यदृष्टमन्यः स्मरतीति[८]

---

१. *तात्पर्यटीका* १/१/१, पृ० ५५

२. *कुसुमाञ्जलिकारिका* १/८

३. *तात्पर्यटीका* २/१/३१, पृ० ४७६

४. *कुसुमाञ्जलिकारिका* ३/८

५. *न्यायवार्तिकम्* २/१/४८, पृ० ५३१

६. ,, १/१/७, पृ० १७३

७. *कुसुमाञ्जलिकारिका* ३/१०

८. *न्यायभाष्यम्* - (बहुत्र प्राप्यते)

तुलनीया - **नान्यदृष्टं स्मरत्यन्यो.................** ।[१]

(६) अनादि संसार इति प्रतिपादितम् ।[२]

तुलनीया - **सापेक्षत्वादनादित्वात्..........** ।[३]

इत्यादिः दृश्यते। एवं हरिदाशीटीकायां प्रकाशटीकाया अत्यधिक प्रभावो दृश्यते। तथापि स्पष्टोल्लेखनया, प्रतिपादनशैल्या च ईश्वरसाधकोऽयं न्यायकुसुमाञ्जलिः विदुषां समवायेऽतीव प्रसिद्धः प्रतिष्ठितश्चेति दिक् ।

इत्येषनीतिकुसुमाञ्जलिरुज्ज्वलश्री
र्यद्वासयेदपि च दक्षिणवामकौ द्वौ ।
नो वा, ततः किममरेशगुरोगुरुस्तु
प्रीतोऽस्त्वनेन पदपीठसमर्पणेन ॥

**

---

१. *कुसुमाञ्जलिकारिका १/१४*

२. *न्यायवार्तिकम् (बहुत्र प्राप्यते)*

३. *कुसुमाञ्जलिकारिका १/४*

# उपसंहारः

## न्यायकुसुमाञ्जलिव्याख्याविवरणम्

विद्वद्वरेण्येनाचार्योदयनेन विरचितो न्यायकुसुमाञ्जलिः ग्रन्थो गद्यपद्यात्मको विद्यते। तत्र पद्य (कारिका) भागे युक्तीनां संक्षिप्तोल्लेखाः सन्ति। गद्यभागे च तासां युक्तीनां सविस्तारं विचारपूर्वकं समर्थनं विद्यते। अत एव न्यायकुसुमाञ्जलेः व्याख्याः भागद्वये विभक्ताः सन्ति। एका केवल-कारिकाव्याख्या अपरा च गद्यपद्यात्मकस्य न्यायकुसुमाञ्जलेः व्याख्या। साम्प्रतं पूर्णरूपेण सर्वासां व्याख्यानां विवरणं प्राप्तुं नैव शक्यते। बहुत्र स्थलेषु प्राचीननैयायिककृतायाः कुसुमाञ्जलिटीकाया उल्लेखः प्राप्यते। मातृकारूपेण (MSS), मुद्रितरूपेण वा नोपलभ्यन्ते। यथा पक्षधरजयदेवेन स्वकीयग्रन्थे तत्त्वोपाध्यायविरचितस्य मकरन्दस्य विवरणं दत्तमस्ति। (स च रुचिदत्तकृतमकरन्दतो भिन्नः) परन्तु स मकरन्द इदानीं नोपलभ्यते। एवं प्रगल्भाचार्यकृतस्य उपमानसंग्रहस्य मातृकायामुपलभ्यते नैयायिकप्रभाकर-विरचितायाः न्यायकुसुमाञ्जलिव्याख्याया विवरणम्। एवं शंकरमिश्रेण स्वकीयायां न्यायकुसुमाञ्जलेरामोदटीकायां पूर्वोक्तमकरन्दस्य, दिवाकरो-पाध्यायकृतपरिमलस्य चोल्लेखः कृतः। एवं पूर्वोक्तपरिमलस्य विवरणं वासुदेवसार्वभौमकृतोऽनुमानमणिपरीक्षानामके ग्रन्थे दत्तमस्ति। अपि च गुर्जरस्थस्य पत्तनभण्डारस्य मातृकाविवरणे उक्तपरिमलस्य खण्डितमातृ-काया विवरणं प्राप्यते। परन्तु ता व्याख्या इदानीं न कुत्रापि प्राप्यन्ते।[१]

उपलब्धासु व्याख्यासु वरदराजकृतविरचित**बोधिनी**टीकायाः

---

१. द्रष्टव्यम् - *History of Navya-Nyaya in Mithila, p. 130-133*

प्रथमं स्थानम्। आचार्योदयनस्याशयस्य स्फोरकत्वेन प्राचीनत्वेन च। तस्याः टीकायाः तृतीयस्तबकपर्यन्तायाः प्रकाशनं काशीस्थसरस्वतीभवन ग्रन्थमालातः, एवं पश्चाद् दरभङ्गास्थितो मिथिलाविद्यापीठतः समग्रटीकायाः प्रकाशनं जातम्। एवं वर्द्धमानोपाध्यायविरचित**प्रकाश**टीका अतीवप्रसिद्धा। सा च नव्यन्यायशैलीयुक्ता, पाण्डित्यपूर्णा च वर्तते। तस्य प्रकाशस्योपरि **प्रकाशपरीक्षा** प्रकाशिकापरपर्याया उपव्याख्या भगीरथ-ठक्कुरेण विरचिता। भगीरथस्यैवापरनाम 'मेघः' आसीत्। अतस्तद्-विरचिता व्याख्या मेध इति नाम्ना, तत्पर्यायभूतजलदनाम्ना च प्रसिद्धा। एवं प्रकाशस्योपरि रुचिदत्तेन **मकरन्दो**ऽपि निर्मितः। तस्यामेवं धर्मदत्त (वच्चा)झामहाभागविरचित**टिप्पणी**(पूर्वोक्त बोधीन्या च) समन्वितो ग्रन्थः चौखम्बातः प्रकाशितो वर्तते। शंकरमिश्रेण **आमोद**टीका विरचिता सापि वैशिष्ट्यं बोधयति । गुणानन्दविद्यावागीशविरचितः **तात्पर्यविवेक** आमोदेन सह कलकत्ताविश्वविद्यालयीय-आशुतोषग्रन्थमालातः प्रकाशितः। एवं म०म० हरिहरकृपालुद्विवेदीमहाभागेनविरचिता आधुनिक**परिमल**व्याख्या (पूर्वोक्तआमोदतात्पर्यविवेकबोधिन्या च सह) मिथिलाविद्यापीठतः प्रकाशितः। एवं वीरराघवविरचितः **विस्तर**टीका दक्षिणभारततः प्रकाशिता। एवं तारानाथतर्कतीर्थेन, सतीन्द्रनाथतर्कतीर्थेन च न्यायकुसुमाञ्जलिटीका लिखिता इति श्रूयते। एवं श्यामकान्ततर्कपञ्चाननेन वङ्गभाषायां कुसुमाञ्जलिटीका कृता। तस्याः प्रथमस्तबकः त्रिशूलपत्रिकातः प्रकाशितः। अयं न्यायकुसुमाञ्जलिः आङ्ग्लभाषायां रवितीर्थेन अनुवादितः, प्रकाशितश्च। हिन्दीभाषायां मैथिलीभाषायाञ्च दुर्गाधरमहाभागेनानुवादितः। हिन्दीभाषा-नुवादः वाराणसेयसंस्कृतविश्वविद्यालयतः प्रकाशितः।

कारिकाव्याख्यायां हरिदासभट्टाचार्यकृता हरिदासीति लोकप्रसिद्धा

'वृत्तिः' नाम्नी टीका सांप्रतं सम्पूर्णभारतेऽतीवप्रसिद्धा, प्राचीनत्वात् सरलत्वाच्च। तदुपरि म०म० चन्द्रकान्ततर्कालङ्कारेण तथा म०म० कामाख्यानाथतर्कवागीशेन चोपव्याख्या लिखिता, प्रकाशिता च। एवं डॉ० श्रीनारायणमिश्रेण प्रभानाम्नी संस्कृतटीकाविरचिता, हरिदाशीहिन्दीभाषाया-मनुवादिता च। काशीस्थभारतीयविद्याप्रकाशनतः प्रकाशिता। एवं राधामोहनगोस्वामिनाऽपि व्याख्या लिखिता। परन्तु सा अप्रकाशिता। एवमाचार्यविश्वेश्वरेण हिन्दीव्याख्याकृता, सा च चौखम्बातः प्रकाशिता। रामभद्रसार्वभौमविरचिता कारिकाव्याख्या आशुतोषग्रन्थमालातः प्रकाशिता। एवं वासुदेवसार्वभौमविरचिता कारिकाव्याख्या एकदाऽतीवप्रसिद्धा आसीत्। एवं महाकवि-वसन्तत्र्यम्बकशेवडेमहाभागेन सरलसरसभाषया तत्त्व-प्रकाशिका विरचिता, चौखम्बातः प्रकाशिता च। रघुदेवन्यायालङ्कारविरचिता कारिकाव्याख्या काशीस्थसरस्वतीभवने मातृकारूपेण एवं जम्मूनगरस्थ मातृकाभवने सुरक्षितास्ति। रुद्रन्यायवाचस्पतिविरचिता कारिकाव्याख्या सरस्वतीभवने मातृकारूपेणोपलभ्यते। एवं जयरामन्यायपञ्चाननविरचिता कारिकाव्याख्या तत्रैव मातृकारूपेणोपलभ्यते।[१]

अनुपलब्धायाः कारिकाव्याख्याया विवरणं यत्र तत्रोपलभ्यते। यथा भेनेशमहाशयेन स्वकीयमातृकाविवरणे रघुनाथशिरोमणिकृतकारिका-व्याख्याया उल्लेखः कृतः। एवं कीलहॉर्नमहोदयेन गदाधरभट्टाचार्यकृत-व्याख्याया उल्लेखः कृतः।[२] एवं चन्द्रनारायणन्यायपञ्चाननकृताया कारिकाव्याख्याया मातृका उत्तरप्रदेशस्य मिर्जापुरे अस्ति इति श्रूयते। शिवचन्द्र-व्याख्यायाः मातृका

---

१. द्रष्टव्यम् - हिस्ट्री ऑफ इण्डियन लॉजिक पृ० ४४

२. सर्वे ऑफ मैन्यूस्क्रिप्ट्स सेन्ट्रल प्रॉविन्स, पृ० १४४

सार्वभौमविरचिता कारिकाव्याख्या विद्योदय[१] पत्रिकायामंशरूपेण प्रकाशिता विद्यते । एवं प्रकारेण अन्या अपि टीकोपटीकाः भवितुं शक्नुवन्त्येव। अस्तु तावदेतादृशानेकटीकोपटीकाभिः समन्वितः स्वयमपि विशिष्टानेकाकाट्य-तर्कप्रमाणादियुक्तिपूर्णोऽयं न्यायकुसुमाञ्जलिः। एतादृशग्रन्थस्य मया कारि-कोक्तविषयानामेव हरिदासीव्याख्यादिशा स्वप्रतिभानुसारेण स्वकीयभाषया स्वकीयशैल्या च समीक्षणं विहितम्। तत्र प्रथमेऽध्याये अदृष्टाधिष्ठातृ-त्वेनेश्वरसिद्धिः, द्वितीयेऽध्याये वेदकर्तृत्वेनेश्वरसिद्धिः, तृतीयेऽध्याये प्रमाणा-नामीश्वराऽबाधकत्वम्, चतुर्थेऽध्याये ईश्वरस्य प्रमाणत्वम्, ईश्वरज्ञानस्य च प्रमात्वं स्थापितम्, पञ्चमेऽध्याये जगकर्तृत्वेनेश्वरसिद्धिश्च कृताः। सर्वञ्चेदं निरूपणं 'न्यायचर्चेयमीशस्य मननव्यपदेशभाक्। उपासनैव क्रियते श्रवणनन्तरागता' इति वचनादीश्वरमननात्मकमेव।

अन्ते च 'त्वदीयं वस्तु गोविन्द तुभ्यमेव समर्पये'

।। इति शम् ।।

---

१. *कलिकातानगरात् प्रकाशितः ।*

# सहायकग्रन्थसूची

ग्रन्थनाम लेखक, प्रकाशक, वर्ष

१. अमरकोषः, अमरसिंह, राष्ट्रियसंस्कृतसंस्थानम्, नई दिल्ली, २००३

२. आप्तपरीक्षा, स्वामी विद्यानन्द, वीरसेवामन्दिरम्, सहारनपुर, १९४९

३. आत्मतत्त्वविवेकः, उदयनाचार्य, चौखम्बा विद्याभवन, वाराणसी, २००५

४. तत्त्वसंग्रहः, शान्तिरक्षित, बौद्ध भारती, वाराणसी, १९८१

५. तत्त्वार्थसूत्रम्, उमास्वाति

६. तर्कसंग्रहः, अन्नम्भट्ट, चौखम्बा विद्या भवन, वाराणसी, २००३

७. तर्कप्रकरणम्, गंगेशोपाध्याय, चौखम्बा संस्कृत सीरिज, वाराणसी, १९४४

८. तैत्तिरीयोपनिषद्, गीताप्रेस, गोरखपुर, वि० २०६०

९. नयविवेकः, भवनाथ, राष्ट्रियसंस्कृतसंस्थानम्, दिल्ली, १९७७

१०. न्यायकुसुमाञ्जलिः, उदयनाचार्य (विस्तरटीका) तिरुपति वाणी मुद्रणालय, १९४१

११. न्यायकुसुमाञ्जलिः, (आमोदविवेकबोधिनीपरिमलसहित), मिथिला, १९७२

१२. न्यायकुसुमाञ्जलिः, (प्रकाशप्रकाशिकाबोधिनीमकरन्दसहित) चौखम्बा, १९५७

१३. न्यायकुसुमाञ्जलिः, हरिदासी (विश्वेश्वरकृत हिन्दीसहित) चौखम्बा, १९७८

१४. न्यायकुसुमाञ्जलिः, हरिदासी (नारायणमिश्रकृत व्याख्यासहित) १९९७

१५. न्यायकुसुमाञ्जलिः, हरिदासी (कामाख्याव्याख्या सहित) कलकत्ता, वि० १८३९

१६. न्यायकुसुमाञ्जलिः, वसन्तत्र्यम्बकशेवडेकृत तत्त्वप्रकाशिका, चौखम्बा १९९७

१७. न्यायदर्शनम्, महर्षि गौतम (भाष्यवार्तिकतात्पर्यटीकावृत्तिसहित), कलकत्ता, १९४४

१८. न्यायभूषणम्, भासर्वज्ञाचार्य, षड्दर्शन प्रकाशन, वाराणसी, १९६८

१९. न्यायमञ्जरी, जयन्तभट्ट, चौखम्बा संस्कृत सीरिज, वाराणसी, १९७१

२०. न्यायसारविचारः, भट्टराघव, रणवीर केन्द्रियसंस्कृतविद्यापीठ, जम्मु १९७६

२१. न्यायसिद्धान्ततत्त्वामृतम्, श्रीनिवास, मद्रास, १९५०

२२. न्यायसिद्धान्तमुक्तावली, विश्वनाथपञ्चानन (किरणावली टीका), चौखम्बा वाराणसी, १९९५

२३. न्यायसिद्धान्तमुक्तावली, (दिनकरी टीका) चौखम्बा, वाराणसी १९९७

२४. पातञ्जलयोगदर्शनम्, महर्षिपतञ्जलि, चौखम्बा संस्कृत संस्थान, वाराणसी, १९८२

२५. प्रकरणपञ्चिका, शालिकनाथ, काशी हिन्दू विश्वविद्यालय, वाराणसी, १९६१

२६. प्रभाकरविजयः, नन्दीश्वर, संस्कृत साहित्य परिषद्, कलकत्ता

२७. प्रमाणवार्तिकम्, धर्मकीर्ति, षड्दर्शन प्रकाशन, वाराणसी, १९९१

२८. प्रशस्तपादभाष्यम्, प्रशस्तपादाचार्य, (ढुण्ढिराजकृत हिन्दीसहित), चौखम्भा, १९९८

२९. प्रशस्तपादभाष्यम्, (कन्दलीसहित)सं०सं०वि०वि० वाराणसी १९९७

३०. बृहदारण्यकोपनिषद्, गीताप्रेस, गोरखपुर, वि० २००७

३१. मानमनोहरः, वादिवागीश्वर, वाराणसी, १९७३

३२. मानमेयोदयः, नारायण, षड्दर्शन प्रकाशन, वाराणसी, १९७८

३३. मीमांसादर्शनम्, महर्षिजैमिनि, (भाष्यतन्त्रवार्तिकसहित) पूना, १९७२

३४. मीमांसान्यायप्रकाशः, आपदेव, भण्डारकर इन्स्टीट्यूट, पूना, १९७२

३५. वाक्यपदीयम्, भर्तृहरि, चौखम्बा विद्या भवन, वाराणसी,
३६. वेदान्तपरिभाषा, धर्मराजाध्वरीन्द्र, चौखम्बा विद्या भवन,वाराणसी, १९८३
३७. वेदान्तसारः, सदानन्द, चौखम्बा विद्या भवन, वाराणसी,
३८. वैशेषिकसूत्रोपस्कारः, शंकरमिश्र, चौखम्भा प्रकाशन,वाराणसी, २००७
३९. शक्तिवादः, गदाधरभट्टाचार्य, चौखम्बा संस्कृत सीरिज, वाराणसी, १९८६
४०. शास्त्रदीपिका, पार्थसारथिमिश्र, विद्याविलास प्रेस, वाराणसी, १९१३
४१. श्लोकवार्तिकम्, कुमारिलभट्ट, रत्ना पब्लिकेशन, वाराणसी,१९७८
४२. श्वेताश्वतरोपनिषद्, गीताप्रेस, गोरखपुर,
४३. षड्दर्शनसमुच्चयः, हरिभद्रसूरि, भारतीय ज्ञानपीठ प्रकाशन,दिल्ली, २००६
४४. सर्वदर्शनसंग्रहः, माधवाचार्य, भण्डारकर रिसर्च इंस्टीट्यूट, पूना १९५१
४५. सर्वसिद्धान्तसंग्रहः, शंकराचार्य, काशी
४६. सांख्यकारिका, ईश्वरकृष्ण (माठरवृत्तिसहित) चौखम्बा सं० प्रतिष्ठान, काशी, २००१
४७. सांख्यतत्त्वकौमुदी, वाचस्पतिमिश्र, चौखम्भा सं०सं०,वाराणसी,२००५
४८. सिद्धान्तकौमुदी, भट्टोजिदीक्षित, मोतीलाल बनारसीदास, दिल्ली,२००१
४९. सिद्धान्तलक्षणम् , जगदीशतर्कालंकार, वाणी विलास प्रकाशन, वाराणसी, १९८४
५०. स्याद्वादमञ्जरी, मल्लिषेणसूरि, रामचन्द्र जैन ग्रन्थमाला, १९३५
५१. हिस्ट्री आफ नव्यन्याय इन मिथिला, दिनेशचन्द्रभट्टाचार्य,दरभंगा,१९५८
५२. हिस्ट्री आफ इंडियन लाजिक, शतीशचन्द्र विद्याभूषण, कलकत्ता, वि० १९२१

**